सरस्वतीभवन-ग्रन्थमाला
[ ९१ ]

आचार्यभर्तृहरिप्रणीतं

# वाक्यपदीयम्

## ब्रह्मकाण्डम्

व्याख्याद्वयोपेतम्

कुलपतेः प्रो. अशोककुमारकालियामहोदयस्य प्रस्तावनया विभूषितम्

अम्बाकर्त्रीव्याख्याकारः सम्पादकश्च
'पद्मश्रीः' पण्डितश्रीरघुनाथशर्मा




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ
[ VOL. 91 ]

# VĀKYAPADĪYAṂ

( PART-ONE )

( BRAHMA-KĀṆḌAṂ )

With the Commentaries

**SVOPAJÑAVṚTTI**

BY

HARIVṚṢABHA

&

**AMBĀKARTRĪ**

BY

'PADMAŚRĪ' PAṆḌITA RAGHUNĀTHA ŚARMĀ

FOREWORD BY

**PROF. ASHOK KUMAR KALIA**

VICE-CHANCELLOR




VARANASI
2006

*Research Publication Supervisor*—
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

**ISBN : 81-7270-020-2 (Set)**
**ISBN : 81-7270-175-6 (Vol. I)**

□

*Published by*—
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002.

□

*Available at*—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.

□

**Fourth Edition,** 500 Copies
**Price :** Rs. 280.00

□

*Printed by*—
**Gauri Shankar Press**
Madhyameshwar, Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[९१]

आचार्यभर्तृहरिप्रणीतं

# वाक्यपदीयम्

[ प्रथमो भागः ]

( ब्रह्मकाण्डम् )

**हरिवृषभकृतया स्वोपज्ञवृत्त्या**

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदान्तविभागाध्यक्षचरेण

'पद्मश्री' पण्डितरघुनाथशर्मणा विरचितया

**अम्बाकर्त्रीव्याख्यया च सहितम्**

*कुलपतेः प्रो. अशोककुमारकालियामहोदयस्य प्रस्तावनया विभूषितम्*



**वाराणस्याम्**

२०६३ तमे वैक्रमाब्दे    १९२८ तमे शकाब्दे    २००६ तमे खैस्ताब्दे

ISBN : 81-7270-020-2 (Set)
ISBN : 81-7270-175-6 (Vol. I)

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः—*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

□

*प्रकाशकः—*
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
***निदेशकः, प्रकाशन-संस्थानस्य***
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी—२२१ ००२

□

*प्राप्तिस्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१ ००२

□

**चतुर्थ संस्करणम्-** ५०० प्रतिरूपाणि
**मूल्यम्-** २८०.०० रूप्यकाणि

□

*मुद्रकः—*
**गौरीशंकर प्रेस**
मध्यमेश्वर, वाराणसी ।

# प्रस्तावना

व्याकरणशास्त्रप्रसिद्धस्य श्रीभर्तृहरिविरचितस्य वाक्यपदीयग्रन्थस्य वैशिष्ट्यं नातिरोहितं विदुषाम्। न केवलं व्याकरणशास्त्रस्यैवोपकारी, अपि तु सर्वस्यापि शास्त्रस्योपकारं करोत्ययं महाग्रन्थः। तत्र महाविद्वद्भिः श्रीहरिवृषभाख्यैः स्वोपज्ञवृत्त्याऽलङ्कृतमिदं ग्रन्थरत्नं प्रकाशतेतराम्। तां वृत्तिमाश्रित्य व्याकरणवेदान्तादिशास्त्रमहोदधिनिष्णातशेमुषीकैः **'पद्मश्री' - पण्डितश्रीरघुनाथशर्मशास्त्रि**भिर्विरचिता **'अम्बाकर्त्री'**-व्याख्या कामपि विशेषविभूतिं प्रकटयति ग्रन्थस्यास्य।

विश्वविद्यालयस्य प्रकाशनसंस्थानाद् **डॉ. हरिश्चन्द्रमणित्रिपाठिनो** महाविदुषो व्याकरणसाहित्यवेदान्तादिशास्त्रपारङ्गतस्य प्रकाशकत्वेऽस्य ग्रन्थस्य प्रथमभागस्य ब्रह्मकाण्डाख्यस्य प्रकाशनं जायत इति मोदते मे चेतः। अनेन प्रकाशितेन ग्रन्थेन महता विद्वत्समाजस्य महानुपकारो भविष्यति विश्वविद्यालयस्यास्य विमलं यशो विस्तृतं भविष्यतीति च मे मतिः।

प्रथमकाण्डे स्फोटाख्यस्य शब्दब्रह्मणो नित्यस्यैकस्य सर्वजगद्विवर्तोपादानत्वं प्रतिपादितम्। तदेव ब्रह्म जगतो मूलम्। तस्मिन्नेव लौकिकवैदिकसर्वजगद्व्यवहारोऽध्यारोपितोऽनेकस्वरूपनिमित्तफलादिभेदेनानादितः प्रवर्तत इति। तदेव ब्रह्म मुमुक्षुभिराप्तव्यः। तदवाप्तिश्च सुगमतया व्याकरणशास्त्राध्ययनादेव सम्भवति।

व्याकरणशास्त्रे शब्दः स्फोटरूपोऽनित्य एको विभुरङ्गीकृतः। अर्थोऽपि आकृतिरूपो नित्योऽङ्गीकृतः। तथा तयोः सम्बन्धोऽपि नित्योऽनादिः स्वीकृतः। शब्दब्रह्मणः सकाशादेव समस्तं कार्यं जगज्जातं तत्रैव स्थितं सल्लयमेति। एवञ्च ब्रह्मणः स्वरूपं तत्कार्यादिकं सर्वमत्र ब्रह्मकाण्डे साङ्गोपाङ्गरूपेण विवेचितम्। अहं प्रकाशकेभ्यः ससहायकेभ्यो विद्वद्वरेभ्यो **डॉ. हरिश्चन्द्रमणित्रिपाठिभ्य** आचार्येभ्यो भूयो भूयो धन्यवादान्

वितरन् मोदमान आशासे, यद् अस्य ग्रन्थस्यावशिष्टकाण्डमपि ते प्रकाशयन्तु तथा अन्यानपि एवंविधान् ग्रन्थान् प्रकाशयितुं यत्नवन्तो भवेयुरिति। अस्य ग्रन्थस्य साफल्यं प्रचारं प्रसारं प्रकाशकस्य दीर्घायुष्यमारोग्यञ्च कामयमानः श्रीभवानीविश्वनाथौ प्रार्थये।

**वाराणसी**
शरत्पूर्णिमा,
वि. सं. २०६३
(७/१०/२००६ ई.)

अशोककुमार कालिया

**( प्रो. अशोककुमारकालिया )**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रकाशकीयम्

प्रमाणभूतैराचार्यैः श्रीभर्तृहरिभिर्महावैयाकरणैर्ब्रह्मतत्त्वविद्भिर्वाक्यपदीयं नाम ग्रन्थः प्रणीतः। स च ग्रन्थो वैयाकरणनिकायेऽन्यत्रापि प्रेक्षावद्भिर्बहुमानं परिगृहीत आदृतश्च। अयं प्रकरणग्रन्थो मुख्यतया वाक्यपदस्वरूपप्रतिपादनपरः, तदनुषङ्गतश्च तदर्थानपि प्रतिपादयति । वाक्यञ्च पदञ्चेति वाक्यपदे, तदधिकृत्य कृतो ग्रन्थो वाक्यपदीयम्। 'शिशुक्रन्द-यमसभ-द्वन्द्वेन्द्रजननादिभ्यश्छः' (पा. सू. ४।३।८८) इति सूत्रेण 'छ'प्रत्यये रूपम्। अत्र ग्रन्थे त्रीणि काण्डानि—ब्रह्मकाण्डम्, वाक्यकाण्डम्, पदकाण्डमिति। वाक्यस्यैव मुख्यवाचकत्वात् पदापेक्षया प्रथममुपादानम्। पदस्य वाक्ये कल्पितत्वात् तदनन्तरमुपादानम्। सर्वप्रथमं ब्रह्मरूपं शब्दतत्त्वं सर्वशब्दार्थोभयरूपजगदभिन्ननिमित्तोपादान-कारणं प्रतिपादितम्। शब्दस्वरूपं प्रतिपादयन्त इमे प्रामाणिकाचार्यास्तदर्थानां तत्सम्बन्धानाञ्च प्रतिपादनं कुर्वन्त्येव।

तत्र व्याकरणशास्त्रे नित्यः शब्दो नित्योऽर्थो नित्यः सम्बन्ध इति मर्यादा। यथोक्तम्—

**नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः।**
**सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः।।** (वा. प. १.२३)

'सिद्धे शब्दार्थसम्बन्धे' इति वार्त्तिकव्याख्यानावसरे पस्पशायां महाभाष्यकारैः शब्दार्थसम्बन्धानां नित्यत्वं प्रतिपादितम्।

अत्र प्रकरणग्रन्थे शब्दार्थसम्बन्धास्ते प्रत्येकं द्विधा भिन्नाः। तथा हि शब्दाः प्रतिपाद्या द्विविधाः— अन्वाख्येयाः प्रतिपादकाश्च। अर्था अपि द्विविधाः—अपोद्धारपदार्थाः, स्थितलक्षणाश्च। तथा सम्बन्धा अपि द्विविधाः—कार्यकारणभावः, योग्यता चेति।

फलमपि द्विविधम्—धर्मः = अदृष्टम्, प्रत्ययः = अर्थावबोधश्च। एतेष्वेवाष्टसु व्याकरण-शास्त्रं परिसमाप्तम्। यथोक्तम्—

**अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।**
**अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः।।**
**कार्यकारणभावेन योग्यभावेन च स्थिताः।**
**धर्मे ये प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु।।**
**ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः।**
**स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्।।** (वा. प. १. २४-२६)

अपोद्धारपदार्थाः प्रकृतिप्रत्ययार्थाः, त एव पदार्थाद् वाक्यार्थाद् वा अपोद्ध्रियन्ते पृथक् क्रियन्ते। स्थितं लक्षणं स्वरूपं येषां ते स्थितलक्षणाः पदार्थाः, पदार्था वाक्यार्थाश्च। वाक्यार्थ एव वा स्थितलक्षण एकः पदार्थः, पदार्थस्यापि अपोद्ध्रियमाणत्वात्। अन्वाख्येयाः प्रकृतिप्रत्ययादिविभागद्वारा व्युत्पाद्याः। शब्दाः कृदन्ततद्धिताद्याः।

प्रतिपादकाः शब्दाः—पदरूपशब्दान्तरप्रतिपत्तिहेतवः परिकल्पिताः शब्दा उपादीयन्ते, यथा भवतीति पदप्रतिपत्तिहेतवः—भू, भूति, भू अति इत्येवमादयः। तथा शब्दार्थयोः सम्बन्धो द्विविधः—कार्यकारणभावरूपः, योग्यतारूपश्च।

कथं शब्दार्थयोः कार्यकारणभावः? घट इति शब्देऽपि अर्थेऽपि बुद्धिर्जायते। एवञ्च शब्दार्थयोरभेदो भासते-सोऽयमिति। तत्रार्थाकारबुद्धितः शब्दाकारबुद्धिरुत्पद्यत इति बुद्धिविषययोस्तादात्म्यादर्थः कारणम्, शब्दः कार्यमिति। एवं शब्दाकारबुद्धितोऽर्थाकारबुद्धिर्जायते, शब्दः कारणमर्थः कार्यमिति। योग्यतालक्षणः सम्बन्धश्च प्रकाश्य-प्रकाशकभावरूपः स्वभावसिद्धः, इन्द्रियविषयवत्।

एवं फलमपि द्विविधम्–धर्मोऽदृष्टञ्च। साधुशब्दज्ञानपूर्वकप्रयोगेण धर्मः पुण्यविशेषस्तथा अर्थावबोधोऽपि जायते। एवमेते विषयाः शास्त्रेऽस्मिन् विस्तरेण विवेचिताः सन्ति।

तत्र प्रथमं काण्डं ब्रह्मकाण्डमिति नाम्ना प्रसिद्धम्। ब्रह्मणः स्वरूपं तस्य सर्वजगद्विवर्तोपादानरूपताञ्च प्रथमकारिकयोक्तम्—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।** (वा. प. १.१)

तस्य ब्रह्मणश्चिद्रूपस्फोटरूपस्य अनादिनिधनं शब्दतत्त्वमिति स्वरूपलक्षणम्। विवर्ततेऽर्थभावेनेत्यादि तु तटस्थलक्षणम्, **'सत्यं ज्ञानमनन्तं ब्रह्मेति, यतो वा इमानि भूतानि जायन्ते'** इत्यादिश्रुतिप्रतिपादितस्वरूपतटस्थलक्षणानुगतमेव वाक्यपदीयकारैः प्रतिपादितम्। अतत्त्वतोऽन्यथाप्रथाऽसमसत्ताककार्यापत्तिर्वा विवर्तः, सत्त्वतोऽन्यथाप्रथा-समसत्ताककार्यापत्तिर्वा परिणाम इति विवर्तपरिणामयोर्भेदः। जगच्च न ब्रह्मपरिणामः, ब्रह्मणो परिणामित्वात् सावयवत्वाद् अनित्यत्वापत्तेः। अपि तु तद् ब्रह्मणि रज्ज्वां भुजङ्ग इव शुक्तौ रजतमिव विवर्तभूतं कल्पितं सप्रक्रियमनेककल्पितभेदभिन्नमवभासते। एकमेव यदाम्नातं पृथक्शक्तिव्यपाश्रयादित्यादिवाक्यैर्वाक्यपदीयस्य तात्पर्यं पूर्वोक्तरूपं स्पष्टं प्रतीयते। तदेतद् ब्रह्म उत्पादविनाशरहितं विभु सर्वजगद्विवर्त्तोपादानभूतं शास्त्रा-देवावगम्यते। शास्त्रञ्च ऋग्वेदादिः। तस्य च ऋग्वेदादेः षडङ्गभेदभिन्नस्य प्रथममङ्गं व्याकरणमिति। व्याकरणं तदधिगमोपायः, ततश्च ब्रह्मावगतिरिति व्याकरणं ब्रह्मप्राप्तेरजिह्मा राजपद्धतिः, **इयं हि मोक्षमाणानामजिह्मा राजपद्धतिरिति** ग्रन्थकारवचनात्। इत्येवमर्थैः परिपूर्णस्य अस्य महतो ग्रन्थस्य महाविद्वद्भिरपि दुरवगाह्यस्य प्रकाशनं कुर्वतो मम मनसि महान् प्रमोदो जायते। तत्र प्रथमकाण्डस्य ब्रह्मकाण्डाख्यस्य प्रकाशनं प्रथमं प्रस्तुतम्। तत्र महापण्डितैः श्रीहरिवृषभाख्यैर्धन्यैः कृतया स्वोपज्ञवृत्त्या तदुपरि स्थाने स्थाने मूलकारिकामपि आश्रित्य पदवाक्यप्रमाणज्ञैरद्भुतप्रतिभासम्पत्तिसम्पन्नैः

**'पद्मश्री'-पण्डितश्रीरघुनाथशर्मभिर्विरचितया अम्बाकर्त्रीव्याख्यया** विभूषितमिदं प्रथमं काण्डं माननीयैः कुलपतिवर्य्यैः **प्रो. अशोककुमारकालियामहोदयैः** प्रस्तावनया विभूषितम्। मन्येऽनेन प्रकाशितेन ग्रन्थरत्नेन सान्तेवासिविद्वत्समाज आलोकितो भविष्यति, संस्कृतवाङ्मयञ्च प्रभावितं स्यादिति। मयापि किञ्चिद् विषयवस्तुस्फोरणात्मकं प्रकाशकीयमत्र लिखितमिति सर्वमेतद् विदुषां प्रमोदावहं भवत्विति साम्बं श्रीविश्वनाथं प्रार्थयन् विरमामीति।

**वाराणसी**
विजयादशमी,
वि. सं. २०६३
(२/१०/२००६ ई.)

**( डॉ. हरिश्चन्द्रमणित्रिपाठी )**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# उपोद्घातः

## [ तृतीयसंस्करणस्य ]

अथेदं विदितमस्तु प्रेक्षावताम्। तान्त्रिकेषु चिन्तामणिर्नाम मन्त्रः प्रसिद्धः सिद्धः दे...श्चिदेव, यस्य प्रभावात् श्रीहर्षमिश्रेण खण्डनखण्डखाद्यं नैषधीयचरितञ्च व्यलेखि, यस्य मन्त्रस्य उद्धारः—

**अवामा वामार्धे सकलमुभयाकारघटना**
**द्विधाभूतं रूपं भगवदभिधेयं भवति यत्।**
**तदन्तर्मन्त्रं मे स्मरहरमयं सेन्दुममलं**
**निराकारं शश्वज्जप नरपते सिध्यतु स ते।।**

( नै० च० १४/८८ )

इति पद्यस्य नैषधीयचरितीयस्य व्याख्या श्रीमल्लिनाथेन कृताऽस्ति। स एव मन्त्रो गङ्गातटे काङ्गणीपर्वतोपत्यकायां मम पितृपादैः श्रीकाशीनाथशर्मभिर्मह्यमुपदिष्टः स्नेहकातरैः। तस्यैव मन्त्रस्य प्रभावान्मया 'अम्बाकर्त्री' व्याख्या व्यलेखि। वाक्यपदीये न चाक्रोशः समजनि जनताया जगत्याः। तस्यैव मन्त्रस्य प्रभावात् कात्यायनवार्तिकानां, भाष्यवार्तिकानां च प्रत्याख्यानम्, सुन्दरच्छायम्, धम्मपदव्याख्यानम्, कृष्णस्तवः, रामस्तव इत्यादयः षष्टेः परा ग्रन्था मया विलिखिताः, लिख्यन्ते, लिखिष्यन्ते च।

**हरिवचनपयोधिमग्नं निखिलं वाक्यपदीयरत्नजालम्।**
**उदनयमवमज्ज्य यत्प्रयत्नान्ननु मातुः करुणैव तत्र हेतुः।।**

इति विदुषो वेदयन् विरमामि।

**वसन्तपञ्चम्याम्,**
वि० सं० २०४५
(१०/२/१९८९)

**रघुनाथशर्मा**

# समर्पणम्

इमं ग्रन्थं विद्यार्जनगुरूणां

श्रीकाशीनाथेत्यभिधयाऽनवद्यया विद्ययाऽमलया कीर्त्या च

विश्वविदितानामकारणकारुण्यानां तातपादानां

पादयोर्ध्यायं ध्यायमुपहरे ।

त्वदीयं वस्तु गोवेद तुभ्यमेव समर्पये ।
गृहाण सुमुखो भूत्वा प्रसीद मम भावन ।।

रघुनाथशर्मा

# किमपि बुधां प्रबोधनम्

अयि क्षीरनीरविवेककल्पे गुणदोषविवेके कुशला विद्वद्वरा एव विवरा: ! आसीद् मम मानसे वाक्यपदीयस्य दुरवगाहतां श्रावं श्रावं दर्शं दर्शञ्च महान् आधिरनुपायोऽनवधित्वेन विभाव्यमान: । तदपनिनीषया च दुर्वारयाऽहर्निशं प्रयतमानस्य मे स्वान्ते सहसा प्रादुरभूत् तद्व्याख्यानगर्ध: । व्यषीदच्च मे चेत: कारिकाणां व्याख्यां स्वोपज्ञवृत्तिं दुर्बोधां विलोकयतोऽसाफल्यभावनया महत्या । किन्तु वृषभदेवपद्धतिसारमालोक्य काऽप्याशा समुदैषीन्मनोमोदहेतु: । कारिका: स्वोपज्ञवृत्तिं वृषभदेवपद्धतिसारञ्च महता श्रमेणावधानेन च विचार्याम्बां स्मारं स्मारं कथञ्चिदम्बाकर्त्री विलिखिता । आशासेऽम्बाकर्त्र्या अध्ययनेन कारिकावृत्तिपद्धतयस्तिस्रोऽपि सुविदिता भविष्यन्ति । अन्ते च सत एतच्छ्रवणेऽनुलोमयन् वक्ष्यमाणेन प्रथमेन पद्येन, स्मारयंश्च कविकुलगुरूक्तिरूपं द्वितीयं पद्यं विरमामि—

**पदे पदे मे स्खलितं जरसाऽभिप्लुतस्य यत् ।**
**तरसा तत्समाधातुं सज्जीभवत सज्जना: ।।**

**तं सन्त: श्रोतुमर्हन्ति सदसद्व्यक्तिहेतव: ।**
**हेम्न: संलक्ष्यते ह्यग्नौ विशुद्धि: श्यामिकापि वा ।।**

**रघुनाथश्शर्मा**

# विज्ञप्तिः

[ प्रथमसंस्करणस्य ]

भर्तारं सर्वलोकस्य हर्तारं भक्तचेतसाम् ।
नारायणं नमस्कृत्य विज्ञप्तिमहमारभे ।।

भर्तृहरिकृतो ग्रन्थो वाक्यपदीयसञ्ज्ञकः ।
आकरः शब्दशास्त्रस्य सर्वदेशेषु पूजितः ।।

अंशतः पुण्यराजेन हेलाराजेन चांशतः ।
आदौ ग्रन्थकृता चैव व्याख्यातः सम्मिताक्षरम् ।।

तथापि त्वर्थगाम्भीर्यादस्पष्ट इति कारणात् ।
प्रार्थिता हि मया प्रेम्णा विशदीक्रियतामिति ।।

श्रीरघुनाथशर्माणो नानाशास्त्रविचक्षणाः ।
अम्बाकर्त्रीमुखेनैव विस्पष्टं व्याचचक्षिरे ।।

एतया टीकया सार्धं वाक्यपदीयपुस्तकम् ।
प्रकाशयाम्यहं हर्षाच्छ्रीसुब्रह्मण्यसंस्तुतम् ।।

तत्रेदं प्रथमं काण्डं ब्रह्माख्यं सम्प्रकाशितम् ।
विद्वच्छात्र-प्रमोदाय क्षेत्रेशचन्द्रशर्मणा ।।

●

# प्रास्ताविकम्
## [ द्वितीयसंस्करणस्य ]

शब्दव्याख्यानरूपेण व्याकरणेन हि पदादिविभागश ऋग्वेदादयो ज्ञायन्त इति छान्दोग्योपनिषदि 'वेदानां वेदम्……अध्येमि' (७. २) इतीदं व्याकरणं वेदानां वेदतया प्रसिद्धिं गतम्। अनेन महती प्रतिष्ठा खलु व्याकरणस्य विज्ञायते। निरुक्तकाराद् यास्कात् प्रागपि व्याकरणपरम्पराऽऽसीदिति सिध्यति यास्कोक्त्या ( निरु० १३. १. ७)। एतस्यां चिरन्तन्यां खलु व्याकरणशास्त्रपरम्परायां जागर्ति सम्प्रति पाणिनीयं व्याकरणं लौकिकवैदिकशब्दप्रतिपादकम्। पाणिनेः प्राक्तनस्य व्याकरणस्य कीदृशं रूपमभूदिति न शक्यते ज्ञातुमस्माभिः साम्प्रतम्। पाणिनीयेषु सूत्रेषु कतिचित् सूत्राणि पद्यात्मकान्यपि सन्तीति तस्मात् प्राक्तनस्य कस्यचिद् व्याकरणस्य पद्यात्मकत्वमवगम्यते। पाणिनिसमकालिकस्य व्याडिकृतस्य लक्षश्लोकात्मकस्य संग्रहाख्यस्य ग्रन्थस्य ततः प्राग्भवस्य वाजप्यायनस्य च समुल्लेखः कृतो महाभाष्यकृता भगवता पतञ्जलिना। पतञ्जलिकाले तादृशा बहवो गद्यात्मकाः पद्यात्मकाश्च व्याकरणग्रन्था जीवन्ति स्मेति ध्रुवं वक्तुं शक्यते। संग्रहशब्दोऽपि तथार्थमभिव्यनक्ति। महाभाष्ये तेभ्यः सर्वेभ्यः परम्परागतेभ्यो व्याकरणग्रन्थेभ्यः समाहृतः सारः।

प्रसन्नभारतीकमपीदं सर्वन्यायबीजात्मकं महाभाष्यं संग्रहप्रतिकञ्चुकं गभीरपारावाररूपम्। तच्च शुष्कतर्कानुसारिभिर्बैजि-सौभव-हर्यक्षैरार्षो ग्रन्थो विप्लावितः। अभिमन्युनामकस्य कश्मीरनृपतेः शासनकाले चन्द्राचार्यादिभिर्विप्लावितस्य महाभाष्यस्य समधिगतं सुदुर्लभं पुस्तकम्। तैस्तस्य प्रचारः कृतः स्वकीयं चान्द्रव्याकरणं च प्रणीतम् इति कल्हणविरचितराजतरङ्गिणीतो ज्ञायते (राज०१. १७६)। वाक्यपदीये (२. ४८४) तु चन्द्राचार्यादिभिर्महाभाष्यं बहुशाखत्वं नीतमिति प्रतिपादितम्। अतो वाक्यपदीयकारस्य भर्तृहरेर्गुरुणा वसुरातेन (द्र० पुण्यराजटीका) न्यायप्रस्थानमार्गान् स्वं च दर्शनमभ्यस्य व्याकरणागमसंग्रहः पुनः सम्पादितः।

भर्तृहरिणा तस्य प्रतिकृतिरूपमिदं वाक्यपदीयं व्याकरणागमदर्शनरूपं निबद्धं वैयाकरणानां महते कल्याणाय सिद्धम्। परम्परया भावितत्त्वस्यास्य वाक्यपदीयस्य गभीरत्वाद् भर्तृहरिणा स्वोपज्ञटीकयेदं परिमण्डितं द्वितीयकाण्डं यावदेव। स्वोपज्ञटीकापरिमण्डितस्यैव ग्रन्थस्य वाक्यपदीयेत्यभिधानात् तृतीयं काण्डं भर्तृहरिकृतं नेति व्याहारो नास्ति सत्तर्कपदवीक्षुण्णः।

पस्पशारहिता शब्दविद्या न शोभत इति विदन्त्येव विद्यावन्तः। व्याकरणमहाभाष्ये प्रथममाह्निकं पस्पशाह्निकत्वेन समाख्यातम्। तत्र व्याकरणस्य दार्शनिकं रूपं

स्फुटमभिव्यक्तम्। आगमकाण्डेत्याख्यातं वाक्यपदीयस्य ब्रह्मकाण्डेत्यपरपर्यायं प्रथमं काण्डं प्राधान्यतो महाभाष्यस्य पस्पशाह्निकमेवाधारीकरोतीति तत्रापि तत्काण्डस्य पस्पशारूपता, व्याकरणदर्शनीयमुख्यप्रतिपाद्यशब्दब्रह्मतयोपोद्घातरूपता वा निश्चेतव्या। इत्थं तावत् काण्डत्रयात्मकस्य वाक्यपदीयस्य प्रथमं काण्डं सम्पूर्णस्य ग्रन्थस्य भूमिकारूपम्। ग्रन्थनाम्नापि तत् सिध्यति। वाक्यं च पदं चेति वाक्यपदम् इति द्वन्द्वसमासः, वाक्यपदमधिकृत्य कृतो ग्रन्थो वाक्यपदीयमित्ययं शब्दः "शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः" ( पा० ४. ३. ८८) इत्यनेन पाणिनीयेन सूत्रेण छे कृते निष्पद्यते। इह वाक्यपदीयस्य काण्डद्वयात्मकताऽभिव्यज्यते। द्वितीयं काण्डं वाक्यप्रतिपादकम्, तृतीयं च पदप्रतिपादकम्। यद्यपि तृतीयस्य काण्डस्य प्रकीर्णकाण्डत्वेन प्रसिद्धिर्वर्तते, तथापि विषयप्रतिपादनदृशा तस्य पदकाण्डत्वमक्षतमेव। ग्रन्थनामानुसारेण वाक्यकाण्डात् पूर्वं पदकाण्डीयसत्ताया अनौचित्यमपि सिद्ध्यति। ब्रह्मकाण्डरूपागमकाण्डस्य पदकाण्डतया स्वीकरणे न केऽपि मतिमादधते बुधाः।

महाभाष्यीयपस्पशाह्निकोक्तः स्फोटसिद्धान्तो वाक्यपदीयब्रह्मकाण्डे विस्तरेण व्यवस्थापितः। व्याकरणफलाफलविचारणारूपपस्पशाह्निकभाष्यव्याख्यानसंयुतं वाक्यपदीयमिति संश्रृणुते कोषकल्पतरुकारो धीवर्गे (१०१ तमे श्लोके)। मन्ये, न्यायप्रस्थानमार्गविराजितः स्वदर्शनोपबृंहितश्च भर्तृहरिगुरुप्रणीत आगमसंग्रहो वाक्यपदीयस्य द्वितीय उपजीव्योऽभूत्। वस्तुतस्तु ब्रह्मकाण्डेऽविकला व्याकरणपरम्परा समाहृता। सरलया भावप्रवणया च सरण्याऽऽनुष्टुभैश्छन्दोभिर्निबध्य वाक्यपदीयम्, संग्रहग्रन्थप्रतिकृतिरिवोपस्थापितं वैयाकरणानां पुरस्तान्महावैयाकरणेन भर्तृहरिणा।

महाभाष्यकारेण 'चत्वारि शृङ्गा त्रयो अस्य पादा······त्रिधा बद्धो वृषभो रोरवीति' इति (ऋ० ४. ५८. ३) ऋग्वेदीयं मन्त्रं व्याकरणदृशा व्याख्यातवता महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणमिति निरूपितम्। ब्रह्मकाण्डीये 'प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते' (१३०) इति श्लोके तु 'देवेन' इत्यस्य स्थाने 'येन', 'साम्यम्' इत्यस्य च स्थाने 'सायुज्यम्' इति प्रायुङ्क्त भर्तृहरिर्मन्त्रगतवृषभशब्दमृषभत्वेनोपाददानः। सायुज्यं तावत् सार्ष्टिसालोक्यसारूप्यादिषु मोक्षेष्वन्यतमो विशिष्टरूपो मोक्षः, यत्र ब्रह्मैक्यं प्रपद्यते भक्तः। इत एव शब्दब्रह्मता निर्धारिता महायोगिना ब्रह्मकाण्डे। उपनिषन्महाभारतादिषु वर्णितं शब्दस्वरूपं चास्थाय तस्य समग्रं रूपं समुदीरितम्। उपनिषदि (मैत्र्यु० ६. २२) शब्दब्रह्मस्वरूपमित्थं लभ्यते—

**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्मपरं च यत्।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।**इति।

अयमेव श्लोको महाभारतस्य शान्तिपर्वणि (२३२. ३०) पठित एवमेव। 'जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते' (भगवद्गी० ६. ४४) इति भगवद्गीतायां शब्दब्रह्माख्यानम्। महाभारते (शान्ति० २३२. २४) 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा'

इति वाचोऽनादिनिधनताऽभिहिता। वाक्यपदीये भर्तृहरिप्रतिभाचमत्कारप्रसूतेयमर्द्धालिर्विलोकनीया—'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्' इति।

अस्यान्तिमं चरणद्वयं तु—

**वेदशब्देभ्य एवादौ निर्मिमीते स ईश्वरः।**
**नामधेयानि चर्षीणां याश्च वेदेषु सृष्टयः।।**

इति महाभारतीयम् (शान्ति० २३२. २६) श्लोकम्,

**सर्वेषां च स नामानि कर्माणि च पृथक् पृथक्।**
**वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे।।**

इति मनुस्मृत्युक्तं (१. २१) च श्लोकं नानुकरोति। एतयोरनुकारस्तु छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत' (१२०) इत्यत्र दृश्यते। वाक्यपदीयस्य 'विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत:' इत्युत्तरार्द्धालिस्तु श्रीमद्भागवतीयेन ( ३. १२. ४८)—

**शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः।**
**ब्रह्माऽवभाति विततो नानाशक्त्युपबृंहितः।।**

इत्युत्तरार्द्धचरणद्वयेन सह गाढं संवदति। उत्तरवर्तिषु च श्लोकेषु 'नानाशक्त्युपबृंहित:' इति चतुर्थश्चरणोऽनुगतो भाति। तत्र 'एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्। अपृथक्त्वेऽपि शक्तिभ्य: पृथक्त्वेनेव वर्तते'।। (१. २) इत्यनेन विवृत:। षड् भावविकारा भवन्तीति वार्ष्यायणि:—'जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति' (निरु० १. १. ३) इति षण्णां भावविकाराणां कालमालक्ष्य भर्तृहरि:—

**अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः।।**

इति ब्रह्मणो विभिन्ना: शक्तीर्दर्शितवान्। अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु (१. ३२), निर्ज्ञातशक्तेर्द्रव्यस्य सा शक्ति: प्रतिबध्यते (१. ३३), सङ्कीर्णा इव शक्तय: (१. १८), अणव: सर्वशक्तित्वाद् भेदसंसर्गवृत्तय: (१. ११०), स्वशक्तौ व्यज्यमानायाम् (१. १११); तस्य प्राणे च या शक्ति (१. ११७), शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धी (१. ११८), शब्दानामेव सा शक्ति: (१३०) इति च नानाशक्तय: समाख्याता:। तत्र द्विर्यतशक्तिताऽपि (१. ६; १३९) प्रदर्शिता।

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति।।**

इति (ऋ० १. १६४. ४५) ऋग्वेदीयो मन्त्रो महाभाष्यकारेण पस्पशाह्निके व्याकरणदृशा व्याख्यात:— चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च' इति। निरुक्तकार इह कतिचन मतान्युपन्यस्यति व्याख्याप्रकाररूपाणि—'ओङ्कारो महाव्याहृतयश्चेत्यार्षम्, नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणा:, मन्त्र: कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिका:, ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति' (निरु० १३. १. ७)

इति। निरुक्तकारप्रतिपादितवैयाकरणव्याख्यानं महाभाष्ये दृश्यते प्रक्रियात्मकम्। नामाख्यातोपसर्गनिपातेष्वेव सर्वा वाक् परिमितेत्यखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात्। वाग् वै पराच्यव्याकृताऽवदत् तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्, तस्मादियं व्याकृता वागुद्यते' (तै० सं० ६. ४. ७. ३) इति श्रुतेः।

भर्तृहरिणा तु व्याकरणविषयत्वं पश्यन्तीमध्यमावैखरीणां प्रतिपादयता महाभाष्योक्तिर्वाग्रूपतया व्याख्याता। व्याख्यानस्यैतादृशस्य परम्परा व्याकरणदर्शने पूर्वमासीदिति ध्रुवं वक्तुं शक्यते। एवमेव वक्ष्यमाणो व्याख्यानप्रकारो दर्शितः सायणेन—'अपरे मातृकाः प्रकारान्तरेण प्रतिपादयन्ति—परा पश्यन्ती मध्यमा वैखरीति। चत्वारीति। एकैव नादात्मिका वाग् मूलाधारादुदिता सती परेत्युच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते, योगिभिर्द्रष्टुं शक्यत्वात्। सैव वृद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते, मध्ये हृदयाख्ये उदीयमानत्वाद् मध्यमायाः। अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति, तदा वैखरीत्युच्यते। एवं चत्वारि वाचः पदानि परिमितानि। मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा रवाख्यस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः = जानन्ति। तेषु मध्ये त्रीणि परादीनि गुहानिहितानि, हृदयान्तर्वर्तित्वात्। तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति। व्याकरणप्रसिद्धनामाख्यातादिपक्षे—मनीषिणो ब्राह्मणाः = प्रकृतिप्रत्ययविभागज्ञा वाग्योगविदस्तानि पदानि जानन्ति। अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति = व्यवहरन्ति, अर्थप्रकाशनाय प्रयुञ्जते।'

एवं तावदिह यद्यपि 'वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्। अनेकरूपभेदायास्त्रय्या वाचः परं पदम्'॥ (१. १४३) इति भर्तृहर्युक्तिर्महाभाष्यव्याख्यानादप्यग्रेसरा किमपि स्वं दर्शनमाश्रिप्य चकास्ति, तथापि व्याकरणमहत्त्वप्रतिपादकं महाभाष्यपस्पशाह्निकविषयमेव समुपबृंहितवान् भर्तृहरिः शब्दस्य ब्रह्मरूपत्वं विनिर्धारयन्निति व्याकरणस्य फलाफलविचारणात्मकं ब्रह्मकाण्डं वाक्यपदीयग्रन्थस्योपोद्घातरूपमेव निश्चेयम्, अपस्पशात्मिकायाः शब्दविद्याया भूमिकाविहीनग्रन्थवद् अशोभाकरत्वात्।

वाक्यपदीयकारेण चतसृणां वाचां मध्ये त्रय्या वाचो व्याकरणविषयतामाकलय्य तद्विवृतेर्महिम्नश्च समुदीरणार्थं समासादितोऽवकाशः। इह ग्रन्थे प्राप्तरूपविभागत्वं वाचः (१. १२), प्रत्यस्तमितभेदत्वं तस्याः (१. १८), सूक्ष्मवागात्मनाऽऽन्तरस्य ज्ञातुरवस्थितिः (१. ११२)इत्यादि निरूपितम्। वाचो महत्त्वं चेत्थमुपवर्णितम् (१. १२४; १२५; १२६ स्वोपज्ञटीकायाम्)—

**वाग्रूपता चेन्निष्क्रामेदवबोधस्य शाश्वती।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥**
**सा सर्वविद्याशिल्पानां कलानां चोपबन्धनी।**
**तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते॥**

**अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः ।**
**तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत् ।।**

शब्दरूपो वेदः खलु शब्दब्रह्मणोऽनुकृतिः समाख्याता भर्तृहरिणा (१. ५)। महाभाष्यकृता तु रक्षार्थं वेदानामध्येयं व्याकरणमित्येवोक्तम् । स एव वेद एकोऽप्यनेकवर्त्मेव महर्षिभिः पृथक् पृथक् समाम्नातः । यथाऽद्वैतवेदान्ते विक्षेपावृतिरूपेति मायायाः शक्तिद्वयाधारेण तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशादिसृष्टिर्भवति, तद्वदिहापि शक्तिव्यपाश्रयादेकमपि शब्दब्रह्म भिन्नमाम्नातं भवति, अपृथक्त्वेऽपि शब्दब्रह्म शक्तिभ्यः पृथक्त्वेनेव वर्तते । एवं तावदिह—एकस्य सर्वबीजस्य (४), तस्य शाखासु दृश्यते (६), तमेवाश्रित्य (७), तस्यार्थवादरूपाणि (८), सत्या विशुद्धिस्तत्रोक्ता (९), विद्यैवैकपदागमा (१०) इत्यादिकारिका विलोकनीयाः ।

भिन्नभिन्नरूपेण विद्यमानेषु परस्परविरुद्धेषु वेदस्यार्थवादरूपाणि निश्चित्याऽऽग्रहैकशरणपुरुषबुद्धिप्रभवेषु दर्शनभेदेषु सत्स्वपि वेदस्यास्य प्रणवरूपेण सर्ववादाविरोधित्वात् तद्युक्ताया एकपदागमाया विद्यायाः सत्यता वेदेऽभिहिता । वाक्यपदीयकारेण ब्रह्मकाण्डे वेदस्यागमस्याम्नायस्य वा सर्वत्र शीर्षण्यता शब्दब्रह्मरूपता चोक्ता (यत्रागमः शास्त्रत्वेनाभिप्रेतस्तत्र तथा न)—तस्य शाखासु दृश्यते (६), तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिता (७), तस्यार्थवादरूपाणि (८), आसन्नं ब्रह्मणस्तस्य (१०), छन्दस्यश्छन्दसां योनिमात्मा छन्दोमयीं तनुम् (१७), अथर्वणामङ्गिरसां साम्नामृग्यजुषस्य च (२१), ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् (३०), आगमस्तमुपासीनो हेतुवादैर्न बाध्यते (४१), तस्मादकृतकं शास्त्रम् (४३), छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत (१२०), बीजं सर्वागमापाये त्रय्येवातो व्यवस्थिता (१३३), श्रुतिस्मृत्युदितं धर्मं न लोको व्यतिवर्तते (१३४), तस्याम्नायो निबन्धनम् (१३५), सर्वोऽदृष्टफलानर्थानागमात् प्रतिपद्यते (१४१), अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकाम् (१४४), इत्यादिस्थलानि परिशीलनीयानि ।

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्यागमो महाभाष्ये दर्शितः । व्याकरणज्योतिषनिरुक्तच्छन्दःशिक्षाकल्परूपेषु षट्सु वेदाङ्गेषु प्रधानं व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवतीत्यभिप्रैति महाभाष्यकारः पस्पशाह्निके ।

भर्तृहरी रङ्गाजीव इव तूलिकारूपाभिः स्वोक्तिभिर्महाभाष्यवचनरूपं चित्रं साधीयः प्रसाधयति ब्रह्मकाण्डे (११)—

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**
**प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ।।** इति ।

शब्दा एवार्थप्रवृत्तितत्त्वानां निबन्धनम् , शब्दानां तत्त्वावबोधो व्याकरणादृते भवितुं नार्हति (१३), तद् व्याकरणम् अपवर्गस्योपायरूपम् , वाणीदोषाणां चिकित्सारूपम्, सर्वविद्यानां पवित्रं सर्वासु विद्यासु स्वीक्रियते (१४), तथैव लोके विद्यानामेषा विद्या

परायणम् (१५), इति व्याकरणमहिम्नः प्रकारो विमृश्यताम्। तेन ततोऽप्यधिकं व्याकरणाय महत्त्वं समर्पयता सिद्धिसोपानपर्वसु व्याकरणस्याऽऽद्यपदस्थानत्वमभिधाय मोक्षमाणानां कृते व्याकरणमिदमकुटिलं राजमार्गरूपं दर्शितम् (१६)। व्याकरणाश्रयणेन प्रणवरूपब्रह्मणोऽधिगमः (२२) भवतीत्युक्तम्। वेदं सनिबन्धनां स्मृतिं चाश्रित्य शिष्टैः शब्दानामनुशासनमारभ्यते (४३), तन्मतेन व्याकरणं तावत् स्मृतिः। तस्य साधुत्वज्ञानविषयत्वम्। इदं व्याकरणं शिष्टानां पारम्पर्येण स्मृतिनिबन्धनमस्ति (१४२)। एवमेव 'ते यतः स्मृतिशास्त्रेण' (१५१) इत्यत्र स्मृतिशास्त्रताऽस्य कथिता। इदं व्याकरणं पश्यन्तीमध्यमावैखरीरूपायास्त्रय्या वाचः परमं स्थानं विद्यते (१४३)। साध्वसाधुव्यवस्थायै क्रियमाणमिदं व्याकरणम् (१४४), पर्यन्ते च यथा शारीरिकाणां दोषाणां विशुद्धिश्चिकित्साशास्त्रेण, बौद्धानां चाधीनां विशुद्धिरध्यात्मशास्त्रेण भवति, तथैव वाङ्मलानां विशुद्धिर्व्याकरणशास्त्रेण जायते (१५१) इति व्याकरणशास्त्रस्य परमोपयोगिता प्रकटिता। शब्दवेत्तार एव शब्दान् विदन्ति (४४)। फलतः शब्दसंस्कारात्मिका परमात्मनः सिद्धिर्भवति, शब्दसंस्कारप्रवृत्तितत्त्वज्ञश्च तद्ब्रह्मामृतमश्नुते (१३२)।

व्याकरणं खलु शब्दसाधुत्वव्यवस्थापकं शास्त्रम्। तत्रेमे श्लोका विमर्शनीयाः—सम्बन्धाः साध्वसाधुषु (२५), शिष्टेभ्य आगमात् सिद्धाः साधवो धर्मसाधनम्। अर्थप्रत्ययनाभेदे विपरीतास्त्वसाधवः।। (२७), तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः (२९), यथैषां तत्र सामर्थ्यं धर्मेऽप्येवं प्रतीयताम्। साधूनां साधुभिस्तस्माद् वाच्यमभ्युदयार्थिभिः।। (१४०), इह तावत् समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयः, नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवतीति, इति पस्पशोक्तिस्तुलनीया महाभाष्यीया 'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः' इति वार्तिकस्था। शब्दसाधुत्वज्ञानविषयिणी च व्याकरणस्मृतिर्विद्योतते (१४२)। एवमेव 'अश्वगोण्यादयः शब्दाः साधवो विषयान्तरे, निमित्तभेदात् सर्वत्र साधुत्वं च व्यवस्थितम् (१४९), अपभ्रंशा गाव्यादयोऽपि साधूनां विषये प्रयुज्यमानाः साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवो भवन्ति (१५०), 'एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते। तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते'।। (१५३), तेषां साधुरवाचकः (१५४), न सोऽर्थस्याभिधायकः (१५६) इत्यर्थकाः श्लोका द्रष्टव्याः।

साधुशब्दा धर्मसाधनरूपा असाधवश्चाधर्मसाधनरूपा भवन्ति (२७)। तत्रेमे श्लोका अनुशीलनीया धर्मसम्बन्धे—'धर्मे च प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु' (२५), न चागमादृते धर्मस्तर्केण व्यवतिष्ठते (३०)। धर्मेणेह यागाद्यभिप्रेयते। एवं तावद् धर्मशब्दस्तत्र तत्र प्रयुक्तो भिन्नेष्वर्थेषु। तत्राग्रेऽपि ब्रह्मकाण्डे प्रयुक्तो धर्मशब्दो द्रष्टव्यः— धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः (३१), स धर्मः स्फोटनादयोः (४९), शब्दधर्मावपोद्धृतौ (५८), धर्मोऽन्यो व्यतिरिच्यते (६३), तद्धर्मेण समाविष्टः

(११४), धर्मो ज्ञानस्य हेतुश्चेत् (१३४), धर्मेऽप्येवं प्रतीयताम् (१३९) इति। क्वचिद् अदृष्टफलार्थतयाऽप्ययमर्थ आविष्कृत:—सर्वोऽदृष्टफलानर्थान् (१४९) इत्यत्र। शास्त्रपूर्वं शब्दप्रयोक्तॄणामभ्युदयेन योगो महाभाष्यकृताऽभिहित: पस्पशाह्निके (१), शास्त्रेण धर्मनियमोऽपि। श्रुतिस्मृत्युदितं धर्मं लोको न व्यतिवर्तते (१३३)। आविर्भूतप्रकाशा अनुपप्लुतचेतसश्च शिष्टा ऋषयश्चेह प्रमाणभूता भवन्ति, तेषां ज्ञानं प्रत्यक्षान्न विशिष्यते (३७)। तेऽतीन्द्रियान् असंवेद्यान् भावान् आर्षेण चक्षुषा पश्यन्तीति तेषां वचनमनुमानेन न बाध्यते (३८)। तत्रान्येऽपि श्लोका: सन्ति—तत्राम्नाता महर्षिभि: (२३), ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् (३०), शिष्टेभ्य आगमात् सिद्धा: (२७), आश्रित्यारभ्यते शिष्टै: शब्दानामनुशासनम् (४३), अविच्छेदेन शिष्टानाम् (१४१), शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृति: (१४४), न शिष्टैरनुगम्यन्ते (१५०) इति। एवं तावच्छब्दसाधुत्वासाधुत्वविषये शिष्टानामृषीणां चैव प्रमाणभूतत्वमास्थेयम् , न तु हेतुवादिनाम्।

अनुमानेन, तर्केण वा न शक्यते व्यवस्थापयितुं धर्म: (३०)। तत्रेमानि कारणानि वाक्यपदीयकारेण समुपन्यस्तानि—धर्मस्य चाव्यवच्छिन्ना ये पन्थानो व्यवस्थिता:, लोकप्रसिद्धत्वात् तान् कश्चित् तर्केण न बाधते (३१), अवस्थादेशकालानां भेदात् शक्तयोऽपि भवन्तीत्यस्माद्धेतोरनुमानेन भावानां प्रसिद्धिरतिदुर्लभा (३२), कुशलैरनुमातृभिर्यत्नेनानुमितोऽप्यर्थ: खल्वन्यैरभियुक्ततरैरन्यथैवोपपाद्यते (३४), अभ्यासमन्तरा मणिरूप्यादिविज्ञानम् अनुमानेन न भवति (३५), ये खल्वार्षेण चक्षुषाऽतीन्द्रियान् असंवेद्यान् भावान् पश्यन्ति, तेषां वचनम् अनुमानेन न बाध्यते (३८), चैतन्यमिवावच्छेदेन वर्तमानमागममुपासीनो वैयाकरणस्तर्कवादैर्न बाध्यते (४१), आगमनिरपेक्षादनुमानादेव प्रवर्तितस्य विनिपातो भवति (४२) इति। एवमेवाग्रेऽपि तर्कानुमानन्यायशब्दा अनुशीलनीया:— वेदशास्त्राविरोधी च तर्कश्चक्षुरपश्यताम् (१३५), इति न्यायो बहुविधस्तर्केण प्रविभज्यते (१३७), शब्दानामेव सा शक्तिस्तर्को य: पुरुषाश्रय:, शब्दाननुगतो न्यायोऽनागमेष्वनिबन्धन: (१३८), ते साधुष्वनुमानेन (१३८) इति।

एवं तावत् तर्कातीतागममाश्रिते व्याकरणे नित्यत्वमास्थीयते शब्दानाम् , तेषां व्यवस्थानित्यताऽप्युच्यते (२८)। महाभाष्येऽस्य मूलम्—'किं पुनर्नित्य: शब्द आहोस्वित् कार्य:', 'सङ्ग्रह एतत् प्राधान्येन परीक्षितम्—नित्यो वा स्यात् कार्यो वेति' इति पस्पशाह्निके। वाक्यपदीये शब्दानित्यत्ववादिनां तार्किकाणामनवस्था प्रदर्शिता—न चानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता, आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते (९५) इति।

शब्दै: सहार्थसम्बन्धा अपि नित्या: सिद्ध्यन्ति—नित्या: शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभि:, सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभि: (२३) इति। महाभाष्येऽस्य

मूलम्—'सिद्धे शब्दार्थसम्बन्धे' इति वार्त्तिके नित्यपर्यायवाची सिद्धशब्द इति । वाक्यपदीयकारेण तु वार्त्तिकस्थस्य सिद्धशब्दस्य स्थाने महाभाष्यव्याख्यानुसारेण नित्यशब्दः प्रयुक्तः । 'सिद्धे शब्दार्थसम्बन्धे' इतीदं वार्त्तिकमपि कस्यचित् प्राक्तनस्य व्याकरणदर्शनसंग्रहग्रन्थीयश्लोकस्य प्रथमश्चरणः प्रतीयते ।

वाक्यपदीये ब्रह्मकाण्डे शब्दतदर्थप्रयोगस्थलानीमानि द्रष्टव्यानि श्लोकेषु—शब्दतत्त्वम् (१), शब्दानाम् (६), शब्दा एव निबन्धनम् (१३), तत्त्वावबोधः शब्दानाम् (१३), शब्दाकृतिनिबन्धनाः (१५), शब्दपूर्वेण (२०), अन्वाख्येयाश्च ये शब्दाः (२४), स्वशब्दैश्च (२६), शब्दानामनुशासनम् (४३), द्वावुपादानशब्देषु (४४), शब्दं शब्दविदो विदुः (४४), एको निमित्तं शब्दानाम् (४४), तद्वच्छब्दोऽपि बुद्धिस्थः (४६), श्रुतीनां कारणं पृथक् (४६), तथा शब्दे (५०), यः क्रतुः शब्दसंज्ञकः (५१), एवं शब्देऽपि दृश्यते (५२), शब्देष्वेव प्रवर्तते (५३), एवं तेष्वेव जायते (५३), अभिधेयेषु केषुचित् (५४), तथैव सर्वशब्दानाम् (५५), विषयत्वमनापन्नैः शब्दैः (५६), शब्दधर्मौ (५८), वृद्ध्यादयो यथा शब्दाः (५९), आदैच्प्रत्यायितैः शब्दैः (५९), अग्निशब्दस्तथैवायम् (६०), अग्निशब्दनिबन्धनः (६०), अग्निश्रुत्यैति सम्बन्धम् (६०), अग्निशब्दाभिधेयया (६०), यो य उच्चार्यते शब्दः (६१), न तस्य प्रतिबध्यते (६१), तस्याभिधेयभावेन (६५), यः शब्दः समवस्थितः (६५), तस्याप्युच्चारणे रूपम् (६५), अन्यत् तस्माद् विविच्यते (६५), संज्ञाशब्दाद् विधीयते (६६), शब्दस्येत्युपचर्यते (७६), शब्दस्योर्ध्वमभिव्यक्तेः (७७), ध्वनिप्रकाशिते शब्दे (८३), बुद्धौ शब्दोऽवधार्यते (८४), शब्दानस्तीति मन्यते (८५), तथा शब्दान्तरश्रुतिः (८७), अविकारस्य शब्दस्य (९४), न भेदो ध्वनिशब्दस्य (९६), शब्दजाः शब्दाः (१०२), अल्पे महति वा शब्दे (१०३), परस्तु शब्दसन्तानः (१०३), घण्टादीनां च शब्देषु (१०४), शब्दत्वापत्तिरिष्यते (१०७), शब्दत्वं प्रतिपद्यते (१०८), शब्दभावेन परिणामिनः (११०), शब्दाख्याः परमाणवः (१११), शब्दत्वेन विवर्तते (११२), अजस्रवृत्तिर्यः शब्दः (११६), शब्देष्वेवाश्रिता शक्तिः (११८), षड्जादिभेदः शब्देन (११९), शब्दमात्रासु निश्रिताः (११९), शब्दस्य परिणामोऽयम् (१२०), सर्वा शब्दव्यपाश्रया (१२१), न विना शब्दभावनाम् (१२२), यः शब्दानुगमादृते (१२३), सर्वं शब्देन भासते (१२३), शब्दमन्तरवस्थितम् (१३१), शब्दसंस्कारः (१३१), शब्दानामेव सा शक्तिः (१३८), शब्दाननुगतो न्यायः (१३८), शब्दास्तथैव दृश्यन्ते (१३९), शब्दः संस्कारहीनो यः (१४८), अस्वगोण्यादयः शब्दाः (१४९), अन्यशब्दविवक्षया (१५६), योऽन्यः प्रयुज्यते शब्दः (१५६) इति ।

वाक्यपदीये शब्दार्थप्रयोगाणामयं संग्रहो विमृश्यताम्—यथार्थजातयः (१५), नित्याः शब्दार्थसम्बन्धाः (२३), अपोद्धारपदार्था ये (२४), ये चार्थाः स्थितलक्षणाः (२४),

अर्थप्रत्ययनाभेदे (२७), तां तामर्थक्रियां प्रति (३३), अपरोऽर्थे प्रयुज्यते (४४), क्वचिदर्थे निवेशितः (४७), अर्थरूपं तथा शब्दे (५०), अर्थोपसर्जनीभूतान् (५४), चरितार्थान् परार्थत्वात् (५४), शब्दैर्नार्थः प्रकाश्यते (५६), न सत्तयैव तेऽर्थानाम् (५६), तत्रार्थवत्त्वात् (६७), तदर्थादिव जायते (६७), प्रकाश्योऽर्थोऽनुवर्तते (९९), तस्मादर्थविधाः सर्वाः (११९), अर्थक्रियासु वाक् सर्वान् (१२६ श्लोकस्य स्वोपज्ञटीकास्थोऽयं श्लोकः), तया ह्यर्थो विधीयते (१२८), ज्ञाने स्वाभाविके नार्थः (१३४), प्रत्यर्थं यतशक्तयः (१३८), शब्दार्थस्य प्रकाशकाः (१४९), कश्चिदर्थोऽभिधीयते (१५२), न सोऽर्थस्याभिधायकः (१५५) इति।

कोऽयं शब्द इत्यनुयोगे 'प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। ....तस्माद् ध्वनिः शब्दः' इति भगवान् पतञ्जलिराह पस्पशाह्निके। 'तपरस्तत्कालस्य' (१. १. ७०) इत्यत्र 'सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते' इति कात्यायनीये वार्त्तिके तु स उवाच—'एवं तर्हि स्फोटः शब्दः', 'स्फोटस्तावानेव भवति, ध्वनिकृता वृद्धिः' इति। ततश्चेयं कारिका भवति तत्रैव—

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।**
**अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः।।** इति।

भर्तृहरिणा महाभाष्योक्तिं सम्यग् विवृत्य व्याख्यातवता मध्यमानादाभिव्यङ्ग्यस्य शब्दस्य स्फोटात्मकता ब्रह्मरूपता नित्यता, ध्वन्यात्मकस्य च तस्यानित्यता महता। कौशलेन व्यवस्थापिता। तत्र चेमे श्लोकाः परिशीलनीयाः—नादस्य क्रमजन्यत्वाद् न पूर्वो नापरश्च सः (४८), प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात्, तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः (४९), स्फोटस्याभिन्नकालस्य (७५), ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते (७७), स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते (८१), अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता (९३), स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः (१०२), अल्पे महति वा शब्दे स्फोटकालो न भिद्यते (१०३), स्फोटादेवोपजायन्ते ज्वाला ज्वालान्तरादिव (१०६) इति। स्फोटोऽयं मीमांसकानां नित्यशब्दो मतः पूर्वमेव। ततोऽपि पूर्वं 'वायुस्फोटाः सनिर्घाताः' (३. ४३. ५) इत्यत्र महाभारते स्फोटशब्दो जनकतया प्रकाशकतया वा प्रसिद्धोऽभूत्। हरिवंशपुराणे तु स्फुटं स्फोटस्य वर्णसंश्रयत्वमभ्युपगतम्—'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः' (हरिवं० भविष्यपर्वणि १६. ५२) इति। एवमेव श्रीमद्भागवते (१०. ८५. ९; १२. ६. ३७; ४०) स्फोटस्वरूपमालोचनीयम्—

**दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः।**
**नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतिः।।**
**समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः।**
**हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते।।**

**श्रृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ।**
**येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ।।** इति ।

ध्वनयस्तु भङ्गुरा इत्यनित्यत्वं तदीयम्। प्राकृतवैकृतेति ध्वनिद्वयम्। तत्र प्राकृतध्वनिव्यतिरेकेण स्फोटस्यानधिगन्तव्यत्वात् प्राकृतध्वनिः स्फोटरूप इव मन्यते। स एव ह्रस्वदीर्घप्लुतादिभेदव्यवहारहेतुः (७६)। तत्र वाक्यपदीये ध्वनिद्वयविषये खल्विमे श्लोका द्रष्टव्याः—तदस्मिन्नेव तमसि (१८), वैकृतं समतिक्रान्ता (१९), व्यतीत्यालोक-तमसी (१९), ध्वनिना सोऽनुगृह्यते (४७) नादस्य क्रमजन्यत्वात् (४८), स धर्मः स्फोटनादयोः (४९), ग्रहणोपाधिभेदेन (७५), प्राकृतस्य ध्वनेः कालः (७६), वृत्तिभेदे तु वैकृताः (७७), ध्वनयः समुपोहन्ते (७७), क्रियते ध्वनिभिर्वादाः (७८), कैश्चिद् ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः प्रकल्पितः (८१), ध्वनिप्रकाशिते शब्दे (८३), नादैराहितबीजायामन्त्येन ध्वनिना सह (८४), रूपभेदं ध्वनेः क्रमात् (९२), ध्वनित्वेन प्रकल्पिताः (९३) निमित्तैर्विकृतो ध्वनिः (९४), न भेदो ध्वनिशब्दयोः (९६), तथैव स्फोटनादयोः (९७), नादभेदाद् विभाव्यते (१०१), ध्वनयोऽन्यैरुदाहृताः (१०२), ध्वनिमात्रं तु लक्ष्यते (१०४), नादा वृत्तेर्विशेषकाः (१०५), करणे ध्वनयोऽपरे (१०६), श्रुतिरूपैः पृथग्विधैः (११५) इति ।

अन्तःकरणस्थितो बुद्धिस्थितो वा शब्दो ध्वनीनां कारणं समुपजायते। बुद्धीन्द्रियादिषु शब्दसंस्कारो जायते। बुद्धिभेदाद् अभिन्नस्य शब्दस्य भेदोऽपि भवति। तत्रेमे श्लोकाः समालोचनीयाः—तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् (४६), बुद्धिभेदात् (४५), वितर्कितः पुरा बुद्ध्या (४७), यथैकबुद्धिविषया (५२), यथा प्रयोक्तुः प्राग् बुद्धिः (५३), व्यवसायो ग्रहीतृणाम् (५३), आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते (८४), पूर्वं बुद्धिः प्रवर्तते (९०), नियतो बुद्धिषु क्रमः (९१), अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः (११४), या च बुद्धौ व्यवस्थिता (११७), शब्दमन्तरवस्थितम् (१३१) इति। संस्कारस्तु—पूर्वाहितसंस्कारः (१२१), न विना शब्दभावनाम् (१२२), इन्द्रियस्यैव संस्कारः (७९), विषयस्य तु संस्कारः (७९), विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः (८०), इन्द्रियस्यैव संस्कारः शब्दस्यैवोभयस्य वा (७८), तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः (१३२), शब्दः संस्कारहीनो यः (१४८), ज्ञानसंस्कारहेतवः (१०) इति ।

शब्दोत्पत्तिप्रकारप्रसङ्गे पाणिनीयशिक्षा 'आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया, मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्, मारुतस्तूरसि चरन् मन्दं जनयते स्वरम्' इत्याकारकमाधत्ते वर्णनम्। वाक्यपदीये स शब्दोत्पत्तिप्रकार इत्थमवगन्तव्यः— लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना, स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते (१०८), करणैरुपजन्यते (१०२), स मनोभावमापद्य तेजसा पाकमागतः, वायुमाविशति प्राणमथासौ समुदीर्यते (११३), अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः, तद्धर्मेण समाविष्टस्तेजसैव विवर्तते (११४), प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते (११५), आद्यः करणविन्यासः

—

प्राणस्योर्ध्वं समीरणम्, स्थानानामभिघातश्च न विना शब्दभावनाम् (१२२), करणेभ्यो विवृत्तेन (४७), अनेकतीर्थ. (१४३) इति।

इत्थं तावत् प्राणो वर्णान्, पदानि, पदार्थान्, वाक्यानि, वाक्यार्थांश्चाभिव्यनक्ति। किन्तु वर्णव्यतिरिक्तं पदम्, पदव्यतिरिक्तं च वाक्यं नाभ्युपगम्यते। तत्रायं संग्रहोऽधिगन्तव्यो वाक्यपदीये—न वर्णव्यतिरेकेण पदमन्यच्च विद्यते, वाक्यं वर्णपदाभ्यां च व्यतिरिक्तं न किञ्चन (७२), पदभेदेऽपि वर्णानाम् (७१), वाक्येषु पदमेकं च (७१), पदे न वर्णा विद्यन्ते (७३), वाक्यात् पदानामत्यन्तम् (७३), वर्णवाक्यपदेषु ये (१०१), वर्णवाक्यपदादिषु (१०१), पदभेदेऽपि वर्णानामेकत्वं न निवर्तते (७१), यस्मिन्नुच्चावचा वर्णाः (२१), भावानाम् (३२; १००; १४४), भावतत्त्वं तु विज्ञाय (१४५), वाक्येषु पदमेकं च भिन्नेष्वप्युपलभ्यते (७१), व्यज्यमाने तथा वाक्ये (९०), वाक्याभिव्यक्तिहेतुभिः (९०), रूपमात्राद्धि वाक्यार्थः (१३६) इति।

पदपदार्थवाक्यवाक्यार्थविषयकवर्णनोत्तरमिदानीं ज्ञेयज्ञातृज्ञानविषयकसामग्रीम् आकलयामः—अतीतानागतज्ञानम् (७), स्वमिव ज्ञानम् (३९), आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते (५०), भेदानुकारो ज्ञानस्य (८६), ज्ञानं ज्ञेयव्यपाश्रयम् (८६), वायोरणूनां ज्ञानस्य (१०७), अथायमान्तरो ज्ञाता (११२), स मनोभावमापद्य (११३), न सोऽस्ति प्रत्ययः (१२३), अनुविद्धमिव ज्ञानम् (१२३), अवबोधस्य शाश्वती (१२४), सा हि प्रत्यवमर्शिनी (१२४), ज्ञाने स्वाभाविके नार्थः (१३५), धर्मो ज्ञानस्य हेतुश्चेत् (१३५) इति।

परिणामविवर्तवादौ प्रसिद्धौ। वाक्यपदीयकारेण यद्यपि विपूर्वको वृतुधातुः सप्तकृत्वः प्रयुक्तः, तथापि नैव सर्वे प्रयोगा विवर्तमभिप्रयन्ति—विवर्ततेऽर्थभावेन (१), ज्योतिः शुद्धं विवर्तते (१८), करणेभ्यो विवृत्तेन (४७), तेजसैव विवर्तते (११४), विवर्तमाना स्थानेषु (११७), एतद् विश्वं व्यवर्तत (१२०), अविभागाद् विवृत्तानाम् (१४५) इति।

शब्दस्फोटध्वन्यादिविषये वाक्यपदीयकारात् प्राग् आसन् बहूनि मतानि लोकप्रथिष्ठानि। निरुक्तमहाभाष्ययोरपि स्थाने स्थाने तदुल्लेखः। वाक्यपदीयकारेण तेषु कतिचन वाक्यपदीये स्मृतानि—प्रवादा बहुधाः मताः (८), अस्तीत्याहुः (४५), भेदमेके प्रचक्षते (४५), केचिदेकत्ववादिनः (७०), केचिन्नानात्ववादिनः (७०), तत्र यन्मुख्यमेकेषाम् (७४), तत्रान्येषां विपर्ययः (७४), क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम् (७८), संस्कारः स क्रमो ध्वनेः (८०), ध्वनेर्ग्रहणमिष्यते (८१), कैश्चिद् ध्वनिरसंवेद्यः (८१), स्वतन्त्रोऽन्यैः प्रकल्पितः (८१), कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः (९३), ध्वनयोऽन्यैरुदाहृताः (१०२), कैश्चिद् दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः (१०७), अस्तं यातेषु (१३४) इति।

सौकर्येण विषयावबोधाय महाभाष्यकारवद् वाक्यपदीयकारोऽपि सत्यामपि पद्यबद्धतायां ग्रन्थस्य स्थले प्रभूता उपमा उदाहरणानि चोपस्थापयतीत्यहो कौशलं तन्निबन्धनस्य। दृश्यन्तामिह निदर्शनानि—यथा तथा (१५), प्रतिबिम्बवत् (२०), प्राणिनामिव (२८), मणिरूप्यादिविज्ञानम् (३५), आचण्डाल मनुष्याणाम् (४०), चैतन्यमिव (४१), हस्तस्पर्शादिवान्धेन (४२), अरणिस्थं यथा ज्योतिः (४६), भेदवानिव जायते (४८), प्रतिबिम्बं यथान्यत्र (४९), तत्प्रवृत्तिमिवान्वेति (४९), आण्डभावमिवापन्नः (५०), यथैकबुद्धिविषया मूर्तिः (५२), यथा प्रयोक्तुः (५३), ग्राह्यत्वं ग्राहकत्वं च............तथैव (५५), समाधानाञ्जनादिभिः (७९), यथैव...........सन्तमसेऽपि वा (८९), विकारे क्षीरबीजयोः (९१), प्रकाशवत् (९४), ग्रहणग्राह्योः सिद्धा.... यथा (९७), गन्धादीनां प्रकाशकम् (९८), तैलोदकादिभेदे तत् प्रत्यक्षं प्रतिबिम्बके (९९), वज्रादर्शजलादिषु (१००), पर्वतादिसरूपाणाम् (१००), दूरात् प्रभेव दीपस्य (१०४), घण्टादीनां च शब्देषु (१०४), ज्वाला ज्वालान्तरादिव (१०६), अभ्राणीव प्रचीयन्ते (१११), व्यजनाद् वायुरिव (११६), अनुविद्धमिव ज्ञानम् (१२३), काष्ठकुड्यवत् (१२६ स्वोपज्ञवृत्तौ), दृश्यतेऽलातचक्रादौ (१३०), स्वप्नवच्छुतौ (१४५) इति। विषये तूर्णावगाहनाय भूयिष्ठाः क्रियाः प्रयुक्ताः। ताश्च श्लोकसंख्यातः शतद्वयाधिकाः। तत्र सार्धशतसंख्यातोऽधिकाः सोपसर्गाः, पञ्चाशच्च निरुपसर्गाः। वाक्यपदीये निबन्धन-(निबध्यमानोपबन्धनोपनिबन्धन)-शब्द एवैकस्तादृशो यो मुहुर्मुहुः प्रयुज्यते वाक्यपदीयकारेण। केवलं ब्रह्मकाण्डेऽसावेकादशकृत्वो निबध्यते, व्यवस्थाशब्दस्तु सप्तकृत्वः।

व्याकरणदर्शनप्रधानेऽस्मिन् ग्रन्थे कतिचन सुभाषितांशा अनायासेनैव सन्दृब्धाः—इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः (१६), ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् (३०), धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः, न तांल्लोकप्रसिद्धत्वात् कश्चित् तर्केण बाधते (३१), पितृरक्षःपिशाचानां कर्मजा एव सिद्धयः (३६), आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्, अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते (३७), इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये, आचण्डालं मुनष्याणामल्पं शास्त्रप्रयोजनम् (४०), हस्तस्पर्शादिवान्धेन विषमे पथि धावता, अनुमानप्रधानेन विनिपातो न दुर्लभः (४२), आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते (८४), न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते, अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते (१२३), श्रुतिस्मृत्युदितं धर्मं न लोको व्यतिवर्तते (१३४) इति।

वाक्यपदीयकारस्येमानि पद्यानि सुभाषितत्रिशत्याः सुभाषितपद्येभ्यो न सन्ति न्यूनमूल्यानि। यत् तत् पुण्यतमं ज्योतिः (१. २२), प्रकाशं यमुपासते (१. १९) इत्यादयो वाक्यपदीयकारस्य कारिकाः सुभाषितत्रिशत्याः 'नमः शान्ताय तेजसे' (१. १), ज्योतिः परं ध्यायताम् (३. १४) इत्यादिसुभाषितपद्यैः समं नूनं बिभ्रति सादृश्यम्। कालशक्तिमुपाश्रिताः (१. ३) इतीयं कारिका वाक्यपदीयकारस्य नितरां साम्यं धत्ते सुभाषितत्रिशत्याः 'कालाय तस्मै नमः' (३. ४१) इत्यनेन श्लोकेन।

सत्यप्येवम्, सुभाषितत्रिशतीकारो भर्तृहरिर्व्याकरणपाण्डित्यपरिमण्डितो नाभाति शृङ्गारशतके (२. ५) 'अपाकरिष्णुः' इति पदं प्रयुञ्जानः। 'अलङ्कृञ्निराकृञ् ' (पा० ३. २. १३६) इत्यनेन पाणिनीयेन सूत्रेण नेष्णुज् भवितुमर्हतीत्यपाणिनीयता प्रयोगस्य। कथमत्रेष्णुच्प्रत्यय इत्यत्र विषये मौनमालम्बते तट्टीकाकारो रामचन्द्रबुधेन्द्रः। धारागृहाणि (२. ८७) इत्यत्र वासराणि (३. २८) इत्यत्र च पुंस्त्वमुचितम्। एवं तावदस्य सुभाषितत्रिशतीकारस्य वैयाकरणत्वं न सिद्ध्यति।

वाक्यपदीये 'अन्यथाकृत्य' (१. ८९) इत्यत्राप्यपाणिनीयत्वमाशङ्कन्ते बुधाः। 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' (३. ४. २७) इत्यनेन णमुलेव क्रियत इति 'अन्यथाकारम्' इत्यस्यैव प्रयोगस्य साधुत्वम्, सिद्धाप्रयोगाभावे तु 'अन्यथाकृत्वा' इत्येव स्यात्, न तु 'अन्यथाकृत्य' इति। 'ऊर्यादिच्विडाचश्च' (१. ४. ६१) इत्यत्रोर्यादिगणेऽन्यथाशब्दस्य पाठो नास्ति। 'साक्षात्प्रभृतीनि च' (१. ४. ७४) इति साक्षात्प्रभृतिगणे यद्यप्यन्यथाशब्दो नास्ति पठितः, तथापि तस्याकृतिगणत्वाच्च्व्यर्थेऽन्यथा-शब्दस्य गतिसंज्ञा तत्रोहनीया।

यद्यपि सुभाषितत्रिशत्यां वाक्यपदीये च ग्रन्थान्तरेभ्यो बहूनि पद्यानि संगृहीतानीति ज्ञायते विद्वद्भिः, तथाप्युभयोः कवीन्द्रता योगीन्द्रता च सुस्फुटा। उभावेव वैदिक-धर्मावलम्बिनौ। किन्तु चीनदेशीय इत्सिङ्गनामा यात्रिकस्तद्देशीयस्य ह्वेन्त्साङ्गयात्रिकस्य भारतयात्रायाः पञ्चाशद्वर्षोत्तरं भारतमुपेतो लिलेख यच्चत्वारिंशद्वर्षेभ्यः प्राग् भारते (६५१ खीस्ताब्दे) वैयाकरणो भर्तृहरिर्बौद्धः पञ्चत्वं गत इति। बौद्धो यात्रिक इत्सिङ्गः सप्तमखीस्ताब्दस्यान्तिमे चरणे भारतमायातः। तदानीं काशिकावृत्तिरध्ययनाध्यापनपदवीं प्ररूढाऽऽसीदिति तदुल्लेखेन निश्चीयते। शतद्वयवर्षेभ्यः प्राक्, न्यूनतया च शतवर्षेभ्यः प्रागवश्यं रचिता भवेदसौ। तत्र 'शिशुक्रन्द' इति सूत्रवृत्तौ स्मृतो वाक्यपदीयग्रन्थो नूनं काशिकावृत्तेर्वर्षतकद्वयात् प्राग् रचितो भवेत्।

कोऽयं पुनर्बौद्धो वैयाकरणो भर्तृहरिर्यः सप्तमखीस्ताब्दस्य तृतीयचरणारम्भे पञ्चत्वमुपागत इति जिज्ञासोदयो नैसर्गिकः।

इत्सिङ्गयात्राकाले शास्त्रशिक्षायाः सुप्रथिता केन्द्रद्वयी व्यराजत—नालन्दा वलभीति। उत्तरभारतीयेषु राज्येषु वलभ्यां मैत्रकाणां राज्यं बृहत्तममासीत् सेनापतिभटार्कस्थापितम्। सुप्रसिद्धा धारानगरी पश्चिममालवदेशान्तर्गता किल वलभीराज्याधीनाऽभूद् इति निश्चयेन शक्यते वक्तुम्। इह वलभ्या महासामन्तस्य श्रीधरसेनद्वितीयस्य दानपत्राणि समधिगतानि। चीनदेशीयेन यात्रिकेण ह्वेन्त्साङ्गेन षष्टिवर्षेभ्यः प्राग् मृतस्य तत्पुत्रस्य धर्मपरायणबौद्धस्य शीलादित्यस्य मालवशासकत्वम्, आनन्दपुरसौराष्ट्रराज्ययोस्तद्वशङ्गतत्वं च विज्ञापितम्। अनुशीलादित्यं मैत्रकाणां राज्यं द्विधा विभक्तम्—पश्चिममालवदेशरूपेण, वलभीदेशरूपेण चेति। प्रथमस्तावच्छीलादित्यवंशजैः शासितः, द्वितीयश्च तदनुजस्य खरग्रहस्य पुत्रैः।

खरग्रहस्योत्तराधिकारी श्रीधरसेनस्तृतीयो वलभ्याः शासनतन्त्रं स्वायत्तीकृतवांश्चरणान्ते षष्ठखीस्ताब्दस्य। तस्य पौत्रः श्रीधरसेनश्चतुर्थोऽभूत् महाराजाधिराजपरमभट्टारकपरममाहेश्वर-चक्रवर्तीत्यादिविरुदालङ्कृतः। अस्य पितुः स्वस्य च राज्यकाले वलभीवास्तव्यो महावैयाकरणो महाब्राह्मणः स्वामिसूनुर्भट्टिः सरस्वतीं समाराधयामास। व्याकरणप्रधानं स्वनाम्ना प्रसिद्धं रावणवधनामकं महाकाव्यं चारीरचत्। यद्यप्यस्मिन् व्याकरणप्रधाने महाकाव्ये द्वित्राणि सुभाषितपद्यान्यपि विलोक्यन्ते ( २. १६, १९, २०; १. २३), तथाप्यस्य रचयितुर्महावैयाकरणत्वमेव प्राधान्यतः सिद्ध्यति।

पञ्चमशताब्दीमध्यत एव वलभ्यां जैनबौद्धधर्मौ प्राबल्यमुपेतौ। तदानीं तत्र धर्म-देशनग्रन्थानां संग्रहाय लेखनाय च काचन समितिः समायोजिताऽभूत्। शीलादित्यात् प्रभृति सम्राजो हर्षवर्धनस्य समकालिकं ध्रुवभट्टापरपर्यायं ध्रुवसेनद्वितीयं यावद् वलभीशासकाः परमबौद्धा अभूवन्। इत्सिङ्गेन श्रीधरसेनतृतीयस्य पुत्रस्य ध्रुवभट्टस्य यद्यपि निन्दा कृता, तथापि तस्य बौद्धधर्मपरायणता तु सङ्कीर्तितैव। स खलु ६२९ खीस्ताब्दात् ६४१ खीस्ताब्दं यावद् वलभ्याः शासकोऽभूत्। तत्पुत्रस्य परमभट्टारकस्य श्रीधरसेनचतुर्थस्य शासनकाले महावैयाकरणो भट्टिरयं बौद्धधर्मं गृहीत्वा निधनं गत इत्सिङ्गेन भर्तृहरिपदेन स्मृतः। वलभ्यां तदानीं प्राकृतभाषाप्राधान्याद् भर्तृहरिशब्दगतं भर्तृपदं भट्टिपदेन व्यपदिष्टम्। तच्च स्वामिवाचकत्वात् समादरास्पदं मन्यते स्म। इत्थम्, इत्सिङ्गस्मृतो महावैयाकरणो बौद्धो भर्तृहरिर्भट्टिपदवाच्यः, न तु वाक्यपदीयकार इति सिद्धम्।

तृतीयो भर्तृनाथेत्यपरनामा भर्तृहरिर्गोरक्षनाथसम्प्रदायदीक्षितो लोकगीतप्रसिद्धो भर्तृहरिर्निर्वेदनाटकनायको वैराग्यपन्थेति नामकस्य सम्प्रदायस्य प्रवर्तकश्च। उज्जयि-न्यामेकादशखीस्ताब्दे विक्रमादित्यः (चन्द्रगुप्तो द्वितीयः) राज्यमचीकरत्। तस्यैवायमग्रजः सम्भाव्यते। वैराग्यशतकस्य कर्तुर्भर्तृहरेर्गोरक्षनाथसम्प्रदायदीक्षितत्वं बाढं प्रतीयते। 'किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः' इत्येकसप्ततितमे श्लोके स गोरक्षनाथसम्प्रदायदृशा वेदस्मृतिपुराणशास्त्रादिपठनं फल्गु मन्यते, न कमपि लाभं विलोकते (तुल० सिद्धसिद्धान्तपद्धतौ ६. ७३–७५ संख्याकाः श्लोकाः)। स सर्वत्र गङ्गा-गङ्गाधरभक्तिं प्रकटयति, वाराणस्यां वसतिं चिकीर्षति, पर्यन्ते च परब्रह्मणि लयं कामयते। नूनमेष सुभाषितत्रिशत्याः सङ्ग्राहको रचयिता चाभ्युपगन्तव्यः।

इत्थं तावद् महावैयाकरणः कविर्हरिवृषभ-हरि-भर्तृहेमेति नामान्तराभिधेयो वाक्यपदीयकारो भर्तृहरिर्बौद्धवैराग्यसम्प्रदायानुगताभ्यां भर्तृहरिभ्यां सर्वथा भिन्नः प्राक्तनश्च सिद्ध्यति। अस्य 'दैवी वाग् व्यवकीर्णेयम्' (१) इत्यस्याः कारिकायाः 'दैवी वाक्' इति पदद्वयं दण्डिना परिगृहीतं काव्यादर्शे 'संस्कृतं नाम दैवी वाक्' इति परिष्कुर्वता।

इत्सिङ्गनामधेयस्य यात्रिकस्य वर्णनानुसारेण तदानीन्तनैरध्येतृभिर्भर्तृहरिशास्त्रं (त्रिपादीत्यपरपर्याया महाभाष्यदीपिका) त्रिसहस्रश्लोकात्मकं च वाक्यपदीयमिति ग्रन्थद्वयी

समभ्यसनीया भवति स्म । वाक्यपदीयकारसमकालिकेन केनचिद् धर्मपालाख्येन वैयाकरणेन तत्र चतुर्दशसहस्रात्मकश्लोकेषु काचन टीका टीकितेति तद्वर्णनेनैवावगम्यते, न तु साम्प्रतमुपलभ्यते । वाक्यपदीयस्यापि सहस्रत्रयसंख्याकाः श्लोका नासाद्यन्ते सम्प्रति । वाक्यपदीयकारेण स्वतो रचिता विचारगभीरस्य स्वकीयग्रन्थस्य काण्डद्वयं यावत् स्वोपज्ञा वृत्तिः । सवृत्तिकस्य ब्रह्मकाण्डस्य व्याख्याता वर्तते कश्चिद् वृषभदेवः । वाराणसेयसंस्कृतविश्वविद्यालयात् प्रकाशितेऽम्बाकर्त्रीति व्याख्यायुते ब्रह्मकाण्डे हरिवृषभकृता स्वोपज्ञवृत्तिरेव गृहीता । यद्यपि ब्रह्मकाण्डे हेलाराजेन शब्दप्रभेत्याख्या व्याख्या विरचिताऽऽसीत्, तथापि साम्प्रतं तस्या अनुपलम्भान्नेह सा गृहीता । हरिवृषभकृतवृत्त्याधारेण सर्वतन्त्रस्वतन्त्रैर्महावैयाकरणैः पण्डितश्रीरघुनाथशर्मभिरम्बाकर्त्रीति नूतनं व्याख्यानं प्राक्तनसकलव्याख्यानातिशयितमकारि । यद्यपि मूलसंस्कृतग्रन्थानां विक्रयो न भवति तथा रभसा यथा लोकभाषाग्रथितानां लोकभाषाव्याख्यातानां च, तथाप्यम्बाकर्त्र्या वैशेष्यादस्य ग्रन्थस्य प्रथमं संस्करणं लघ्वेव मुद्रणातीतत्वमापन्नम् । चतुर्भ्यो वर्षेभ्यो जिज्ञासवो लब्धवर्णाश्चानारतमेतस्य द्वितीयसंस्करणप्रकाशनाय प्रणोदितवन्तः । सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयात् प्रकाश्यमानम्, अनुसन्धानसहायकानामन्यतमेन पण्डितश्रीरामगोविन्द-शुक्लेन संशोधितम्, परिवर्धितं च द्वितीयं संस्करणमिदं महतामोदेन प्रस्तूयते जिज्ञासूनां विद्वज्जनानां च पाणिपल्लवसम्पुटे । एतस्य प्रकाशनेन संस्कृतजगद् ध्रुवमुपकृतं भविष्यतीति विश्वसिति ।

विजयदशम्याम्,<br>
२०३३ वैक्रमाब्दे<br>
(२-१०-७६ खीस्ताब्दे)

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**<br>
तत्कालीन-निदेशकः<br>
अनुसन्धानसंस्थानस्य<br>
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# उपोद्घातः
## [ प्रथमसंस्करणस्य ]

वाराणसेयसंस्कृतविश्वविद्यालयेन प्रकाश्यमानस्याम्बाकर्त्र्याख्यव्याख्यासहितस्य वाक्यपदीयस्योपोद्घातरूपेण भवता किञ्चिल्लिखितव्यमिति व्याख्यातृवर्यैः पण्डितवर-श्रीरघुनाथशर्मभिः स्वयमभिहितोऽहं तद्वैदुष्ये स्वश्रद्धाप्रदर्शनबुद्ध्या सत्स्वपि बहुषु योग्यतरेषु तत्कर्मणीदानीं प्रवर्ते।

तत्रभवान् भर्तृहरिरिति महदिदं नाम भारतीयविद्याया इतिहासे। यद्यपि तेषां जीवनकालोऽद्यापि विद्वद्भिर्न निश्चितः, तथापि भगवतः पतञ्जलेस्तिरोधानानन्तरं व्यतीतेषु बहुषु वर्षशतकेषु तेषामाविर्भावो बभूवेति विदितमेतत् सर्वेषां व्याकरणशास्त्रेतिहासविदाम्। अस्मिन् महति कालान्तरे पाणिनीयसम्प्रदायानुसारिणो बहवो वैयाकरणा भारते समभवन्नित्यत्र सन्देहो नास्ति; परन्तु महान् विषादविषयोऽयं यत् प्रायेण तेषां तद्ग्रन्थानां वा नामान्यपि नानुश्रूयन्ते। आचार्यभर्तृहरिभिः स्वकीये सवृत्तिके वाक्यपदीये बहूनां पूर्वाचार्याणां तत्कृतीनां च केचित्, परे, अपरे, वृत्तिकाराः, इतिहासः, पुराकल्पः, आगम इत्यादिभिः सामान्यार्थबोधकैः शब्दैर्निर्देशः कृतो दृश्यते। द्वित्राः पञ्चषा वा आचार्या नामग्राहं स्मृताः। तत्र बैजिसौभवहर्यक्षैः संग्रहप्रतिपक्षभूतैः शुष्कतर्कानुसारिभिर्महाभाष्यं विप्लावितमित्युक्त्वा,

**पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः।**
**स नीतो बहुमार्गत्वं चन्द्राचार्यादिभिः पुनः॥** (वा० प० २/४९)

इति वदता तत्रभवता यद्यपि स्वगुरोर्नाम न गृहीतम, तथापि व्याख्यात्रा पुण्यराजेन चन्द्राचार्यादिभिरित्यादिग्रहणाद् वाक्यपदीयकारैः स्वगुरुराचार्यवसुरात एवाभिप्रेत इत्यभिहितम्।

**न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम्।**
**प्रणीतो गुरुणाऽस्माकमयमागमसंग्रहः॥** (वा० प० २/४९०)

इति वदन् तत्रभवान् भर्तृहरिर्वाक्यपदीयस्यास्य मूलं स्वगुरुणैव संगृहीतमिति स्पष्टमुक्तवान्। एवं स्वाव्यवहितपूर्वकालवर्तिषु व्याकरणशास्त्रापकर्तृषु तदुपकर्तृषु च केषुचिदाचार्येषु स्मृतेषु सत्स्वपि ततोऽपि प्राचीना महाभाष्यापेक्षयाऽर्वाचीनाः के के वैयाकरणा आसन्, के के तैर्ग्रन्था विरचिता इत्यस्माकं स्वाभाविकं कुतूहलं न शान्तं भवति। वाक्यपदीये पूर्वग्रन्थेभ्यो बहवः सन्दर्भा गृहीता दृश्यन्ते। तेषु भूयांसो व्याकरणग्रन्थेभ्य एव समुद्धृताः स्युरिति समुद्धृतसन्दर्भाणां शब्दार्थपर्यालोचनयाऽनुमातुं शक्यते।

पाणिनीयव्याकरणसम्प्रदाये तत्रभवद्भर्तृहरिविरचितं वाक्यपदीयं महतीं प्रसिद्धिं प्रापेति विदितमेवैतत् सर्वेषां विदुषाम्। अस्य ग्रन्थरत्नस्याविर्भावात् प्रभृति तद्गतानि पद्यमयानि गद्यमयानि वा वाक्यानि बहुभिराचार्यैः स्वकृतिषु समुद्धृतानि दृश्यन्ते। तत्र स्वाभाविकमेतद् यज्जिनेन्द्रबुद्धि-कैयट-भट्टोजिदीक्षित-नागोजीभट्टप्रभृतिवैयाकरणा महा-वैयाकरणतत्रभवद्भर्तृहरिविरचितं वाक्यपदीयमुपजीव्यत्वेन स्वीचक्रुरिति। अवधारणार्हं त्विदं यत् प्रायेण सर्वेष्वप्यास्तिकेषु नास्तिकेषु च दर्शनग्रन्थेषु साहित्यादिशास्त्रग्रन्थेषु च हरिकारिका विविधानां तत्त्वानां प्रमाणत्वेन मण्डनार्थं खण्डनार्थं वा समुदाहृता दृश्यन्त इति।

महामाहेश्वराचार्याभिनवगुप्तपादा न केवलमीश्वरप्रत्यभिज्ञाविमर्शिनी-ईश्वरप्रत्यभिज्ञा-विवृतिविमर्शिनी-तन्त्रालोकादिप्रत्यभिज्ञादर्शनग्रन्थेषु, अपि तु ध्वन्यालोकलोचनादिसाहित्य-ग्रन्थेष्वपि वाक्यपदीयसन्दर्भान् स्वाभिप्रायोपोद्बलनार्थं शतशः समुपन्यस्यन्ति।

आचार्यजयन्तभट्टाः स्वकीयन्यायमञ्जर्यां शब्दाद्वैत-स्फोटवादशब्दनित्यत्वादिवैया-करणसिद्धान्तान् हरिकारिकासमुद्धरणपूर्वकं यथावत् प्रतिपाद्यैव पश्चात् तत्खण्डने प्रवर्तन्ते।

आचार्यमण्डनमिश्राः स्वीयस्फोटसिद्ध्यादिग्रन्थेषु, सर्वतन्त्रस्वतन्त्राचार्यवाचस्पति-मिश्राः स्वकीयेषु भामत्यादिविविधशास्त्रविषयकेषु ग्रन्थेषु च वाक्यपदीयं तत्र तत्र स्मरन्ति।

बहुषु शास्त्रेषु विरचितस्वतन्त्रप्रामाणिकग्रन्थो भोजराजः स्वकीये शृङ्गारप्रकाशाख्ये विपुले साहित्यविषयकग्रन्थे वाक्यपदीयकारिकाः शतशः समुदाहरति।

वादिदेवसूरिनामा जैनाचार्यः स्वकीये स्याद्वादरत्नाकरे न केवलं हरिकारिकास्तत्र तत्र समुद्धरति, अपि तु ता व्याकरोति, स्वदर्शनविरोधे सति तत्प्रतिपादितान् सिद्धान्तान् निराकरोति च।

बौद्धाचार्यः शान्तरक्षितः स्वविरचिते तत्त्वसंग्रहे काश्चिद् हरिकारिका यथातथं संगृह्णाति, काश्चित् त्वर्थत उपजीव्य तदर्थबोधिका स्वकारिका रचयति।

आचार्यकमलशीलेन च स्वकीयायां तत्त्वसंग्रहपञ्जिकायां शान्तरक्षितसंगृहीता हरिकारिका व्याख्याताः।

किं बहुना, वाक्यपदीयकारिकाः स्वल्पं भूयसा वा परिगृहीतवतां प्राचीनाचार्याणां तद्ग्रन्थानां च गणना कर्तुं नं शक्यते। एतावतैव भारतीयविद्याया इतिहासेऽस्य ग्रन्थ-रत्नस्य विशिष्टं स्थानमनुमातुं शक्यते।

काण्डत्रयात्मकस्य वाक्यपदीयस्य मुख्यो भागः कारिकारूपः। प्रथमद्वितीयकाण्डगत-कारिकाणां तत्रभवद्भर्तृहर्युपज्ञा वृत्तिरुपलभ्यते। वृत्तिसहितानां कारिकाणामेव वाक्यपदीय-संज्ञेत्यत्र प्रमाणानि सन्ति। तानि च विद्वद्वरश्रीचारुदेवशास्त्रिभिः स्वकीयवाक्यपदीयप्रथम-

काण्डसंस्करणोपोद्घाते (पृ० १६-१७) सुष्ठु संगृहीतानीति तत एवावधार्याणि। तृतीयकाण्डस्य प्रकीर्णसंज्ञकस्य भर्तृहरिविरचिता वृत्तिर्नोपलभ्यते। सा विरचितैव नाभूदिति प्रतिभाति।

**काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः।**
**प्रबन्धो विहितोऽस्माभिरागमार्थानुसारिभिः।।**
**तच्छेषभूते काण्डेऽस्मिन् सप्रपञ्चे स्वरूपतः।**
**श्लोकार्थद्योतनपरः प्रकाशोऽयं विधीयते।।**

इति वदतस्तृतीयकाण्डव्याख्यातुर्हेलाराजस्यापि तृतीयकाण्डगता हर्युपज्ञा काचिद् वृत्तिरविदितैवासीदिति प्रतिभाति। अन्यथा 'काण्डद्वये यथावृत्ति' इति, तृतीयकाण्डविषये च 'श्लोकार्थद्योतनपरः प्रकाशोऽयम्' इति च न ब्रूयात्। प्रकाशाख्या च हेलाराजस्य तृतीयकाण्डव्याख्या बाढं स्वतन्त्रा पूर्वव्याख्यानाश्रिता च विलसति। तृतीयकाण्डस्य हर्युपज्ञवृत्त्यभावादेव कैश्चित् प्राचीनाचार्यैरपि तस्य वाक्यपदीयसंज्ञकात् काण्डद्वयात् पृथक्कृतित्वं भ्रमादवधारितम्। यथा तथा वा भवतु। सर्वथा प्रथमद्वितीयकाण्डगतकारिकाणां प्रथमा व्याख्या भर्तृहरिणैव स्वयं विरचितेत्येतावत्तु सिद्धं भवति। तत्समाश्रयणेन हेलाराजः प्रथमकाण्डस्य शब्दप्रभाख्यां व्याख्यां रचयामासेति कथयति स स्वयं स्वकीयायां प्रकाशाख्यायां तृतीयकाण्डव्याख्यायाम्। हेलाराजस्यागाधं पाण्डित्यं तद्विरचितप्रकाश-परिशीलनेनानुभवितुं शक्यते। अतो महद् दुर्भाग्यमिदमस्माकं सर्वेषां यत्तदीया शब्दप्रभाऽधुना नोपलभ्यत इति। तदीयाऽविदितनामधेया द्वितीयकाण्डव्याख्याऽप्यधुना पूर्वसद्भावनिश्चय-मात्रशेषा। किञ्चिदवशिष्टसौभाग्या वयं यत्तदीया प्रकाशनाम्नी तृतीयकाण्डव्याख्या तत्र तत्रांशतः सुरक्षिता दृश्यत इति।

वाक्यकाण्डस्य प्राचीनव्याख्यातृषु पुण्यराजः समुल्लेखमर्हति। हर्युपज्ञवृत्त्याश्रिता पुण्यराजव्याख्येति प्रतिपदं स्पष्टं भवति। वृत्तेरेव संक्षेपरूपा पुण्यराजव्याख्या। प्रसादस्तस्य मुख्यो गुणः। किं पुण्यराजेन प्रथमकाण्डस्यापि व्याख्या कृतासीदित्याकाङ्क्षा स्वरसत एव समुल्लसति नो हृदयेषु। यया शैल्या स द्वितीयकाण्डव्याख्यां प्रारभते तयाऽनुमीयते यत् ततः पूर्वं किञ्चिद् वृत्तमिति। किं वृत्तं स्यादन्यदतः पूर्वकाण्डव्याख्यायाः ? एवं हि द्वितीयकाण्डव्याख्याया उपक्रमः—'एवं शब्दस्य प्रयोजनसहितं स्वरूपादिकं लेशतो निर्णीतम्। तस्य च साधारण्येन वाचकत्वं व्यवस्थापितम्। इदानीं मतभेदेन केषाञ्चित् पदं वाचकमन्येषां वाक्यमिति वाचकात्मनो वाक्यस्वरूपस्य तावद्वितत्य स्वरूपप्रतिपादनाय द्वितीयकाण्डप्रारम्भः' इति। एवं पुण्यराजेन प्रथमकाण्डस्यापि व्याख्या कृतासीदिति बाधभयं विनानुमातुं शक्यते। किञ्चातिगभीरं प्रथमकाण्डमुपेक्ष्य पुण्यराजस्य द्वितीयकाण्डमात्रव्याचिकीर्षायां व्याक्रियायां च मूलाभावः। सा तु व्याख्याऽद्योपलभ्यत इति तु न।

या प्रथमकाण्डव्याख्या काश्यां सन् १८८७ वर्षे Benares Sanskrit Series—नाम्न्यां संस्कृतग्रन्थावल्याम् 'वाक्यपदीयं पुण्यराजकृतप्रकाशाख्यटीकासहितं प्रारभ्यते' इत्युपक्रमवाक्यपूर्वकं प्रकाशिताऽभूत्, सा वस्तुतो न पुण्यराजकृतेति प्रथमकाण्डव्याख्याया अन्ते विद्यमानायाः पुष्पिकाया एव स्पष्टं प्रतीयते। सा च पुष्पिकेत्थं पठ्यते—'इति महावैयाकरणहरिवृषभविरचितवाक्यपदीयप्रकाशे आगमसमुच्चयो नाम ब्रह्मकाण्डं प्रथमं समाप्तम्' इति। अत्र पुण्यराजस्य नाम कुत्रापि नोल्लिखितम् ? न वा प्रथमकाण्डव्याख्यायाः प्रारम्भे कुत्रचित् तन्नाम लिखितं दृश्यते। द्वितीयकाण्डव्याख्यान्ते दृश्यमानापि पुष्पिका दृश्यतां तुलनार्थम्। तत्र ह्येवं पठ्यते—'इति पुण्यराजकृता वाक्यपदीयद्वितीयकाण्डटीका समाप्ता' इति। अत्र पुण्यराजस्य नाम स्फुटमुल्लिखितं दृश्यते।

वस्तुस्थितिस्त्वियं यत् काश्यां मुद्रिता प्रथमकाण्डव्याख्या भर्तृहरिविरचिता वृत्तिरेव यत्र तत्र संक्षिप्ता। हर्युपज्ञवृत्तेः काश्यां मुद्रिताया व्याख्यायाश्च परस्परं सारूप्यं सूक्ष्मपरीक्षणेन विशदीकृतं विद्वद्वरैः श्रीचारुदेवशास्त्रिभिः स्वकीयोपोद्घात इति तत एवावगन्तव्यम्।

प्रायेण कारिकाबद्धाः शास्त्रग्रन्था व्याख्यासाहाय्येन सुबोधा भवन्तीति प्राचीनेयं भारतीयपरम्परा। वाक्यपदीयकारिकाणां ग्रन्थकर्त्रैव विरचिताया वृत्तेस्त्वयं विशेषो यत् सा व्याख्यारूपापि स्वतन्त्रग्रन्थसदृशी असाधारण्या इतरशास्त्रकृच्छैलीविलक्षणया शैल्या विरचितेति व्याख्यागम्या चेति। नात्र पुण्यराजहेलाराजौ अस्माकं सहायकौ, यतस्ताभ्यां विरचिते व्याख्ये लुप्ते। तयोः समयेऽन्या वाक्यपदीयव्याख्याः प्रचलिता आसन्निति तयोरुपलभ्यमानाभ्यां कृतिभ्यामवसीयते; परन्तु तास्वेकापि नाद्योपलभ्यते। एवं स्थिते महत् सौभाग्यमिदमस्माकं सर्वेषां यत् सवृत्तिकस्य वाक्यपदीयस्य वृषभदेवकृता पद्धत्याख्या व्याख्या समुपलभ्यत इति। तस्याश्च सारः सन् १९३४ वर्षे विद्वद्वरैः श्रीचारुदेवशास्त्रिभिर्लाहौरनगरे प्रकाशितः। तदा प्रभृति वाक्यपदीयप्रथमखण्डं न तथा दुर्बोधम्, यथा ततः पूर्वमासीदित्यनुभवसिद्धमिदमध्येतृणाम्। यद्यपि वृषभदेवस्य समयोऽधुनाऽप्यविदितः, तथापि प्राचीनाचार्येष्वेव सोऽस्माभिर्गणनीयः। वृषभदेवेनापि बह्वीः पूर्वव्याख्या दृष्ट्वैव स्वकीया व्याख्या प्रणीता, यतः स्वव्याख्याप्रारम्भे कथयति सः—

**यद्यपि टीका बह्व्यः पूर्वाचार्यैः सुनिर्मला रचिताः।**
**सन्तः परिश्रमज्ञास्तथापि चैनां ग्रहीष्यन्ति ॥** इति।

महद् विषादास्पदमिदं यद् वृषभदेवदृष्टासु बह्वीषु सुनिर्मलासु टीकासु नैकाप्यद्य समुपलभ्यत इति।

ग्रन्थस्यास्य व्याकरणशास्त्र आकरग्रन्थतुल्यत्वाद् युक्तं यद् बहुत्र तस्य पाठ्यक्रमेषु सन्निवेशः सञ्जात इति। तस्य च दुरवगमत्वेन पीडितानां विद्यार्थिनां बोधसौकर्यसम्पादनबुद्ध्या वा, ग्रन्थस्य निजोत्कर्षातिशयेन तद्व्याख्यया स्ववैदुष्यप्रतिष्ठापनबुद्ध्या वा कैश्चिदाधुनिकै-

र्विद्वद्भिरपि तद्व्याख्याने प्रयत्नः कृतः। तत्र मद्दृष्टासु व्याख्यासु कालक्रमानुसारेण पण्डितद्रव्येशझाविरचिता टीका प्रथमं समुल्लेखमर्हति।

ततः सन् १९३७ वर्षे काशीसंस्कृतसीरीजपुस्तकमालायां प्रकाशिता न्याय-व्याकरणाचार्यपण्डितश्रीसूर्यनारायणशुक्लैर्विरचिता भावप्रदीपाख्या व्याख्या गणनामर्हति। अधुना च प्रकाश्यते तृतीयेयं पण्डितवरश्रीरघुनाथशर्मप्रणीता अम्बाकर्त्र्याख्या नवीना व्याख्या। तिसृणामथैतासां व्याख्यानां स्वरूपं संक्षेपतो निरूपयितुमधुना प्रयत्यते।

तत्र श्रीद्रव्येशझाविरचितायां टीकायां केवलं कारिकाणामेव व्याख्यानं कृतम्। तत्र तत्र काश्यां प्रकाशिताया व्याख्यायाः समाश्रयणं कृतम्। व्याख्याकारैः कारिका-वृत्त्योरेककर्तृकत्वभिन्नकर्तृकत्वविषये वा सवृत्तिकानां कारिकाणां वाक्यपदीयसंज्ञाविषये वा काचिच्छङ्का नोद्भाविता। प्रायेण कारिकाणां यथाश्रुतार्थमुक्त्वा सन्तोषः कृतः। तत्रभवतो भर्तृहरेर्मनसि किं किमर्थवैचित्र्यमासीदिति समुत्प्रेक्षणे प्रयास एव न कृतः।

स्वर्गीयपण्डितश्रीसूर्यनारायणशुक्लैर्यत् प्रयोजनमुद्दिश्य स्वव्याख्या विरचिता, तदित्थं तैरेव प्रतिपादितम्—'तस्य परमोपादेयतामालोच्य तत्तत्परीक्षाध्यक्षैर्व्याकरणाचार्य-परीक्षायां निवेशिततया तस्य यथार्थमर्थावबोधाय सरलव्याख्यामन्विष्यद्भिः छात्रैस्तदलाभेन प्रार्थितेन मया वाक्यपदीयभावप्रदीपनाम्नी व्याख्या विरचय्य विश्वेश्वरचरणकमलयोः समर्प्य भवतां करकमलयोरुपहारीक्रियते' इति। विद्यार्थिनामुपकाराय विरचिता विदुषा-मप्युपकारिणीत्यत्र मुख्यं कारणं ग्रन्थकर्तुर्न्याये व्याकरणेऽन्यदर्शनेषु च प्रकाण्डं पाण्डित्यमेव। अधुनाऽस्माभिरस्या व्याख्यायाः प्रातिस्विकं स्वरूपमवगन्तव्यम्।

श्रीचारुदेवशास्त्रिभिः सन् १९३४ वर्षे सवृत्तिकं वृषभदेवविरचितव्याख्यासारसहितं च वाक्यपदीयं संस्कृत्य प्रकाशितमिति पूर्वमवोचाम। वृत्तिसहितानामेव च कारिकाणां वाक्यपदीयसंज्ञेति च तैः प्रमाणैः साधितम्। ततो वर्षत्रयादन्तरं स्वर्गीयश्रीसूर्यनारायणशुक्लैः स्वकीया व्याख्या प्रकाशिता। तैः पूर्वप्रकाशिता वृषभदेवव्याख्यासारसहिता तत्रभवतो भर्तृहरेर्वृत्तिरवश्यं दृष्टा स्यात्, तथैव ततोऽपि पूर्वं भ्रमात् पुण्यराजकृतित्वेन काश्यां प्रकाशिता टीकापि तैर्दृष्टा स्यात्; परन्तु तैर्वृत्तेर्वाक्यपदीयान्तर्गतत्वं स्वीकृतं न वेति न प्रतीयते। सर्वथा तैर्वृत्तिः प्रकाशितैव न। यस्य प्रकाशनमेव न कृतं तस्य व्याख्यान-स्यावसर एव नोदेतीति तैर्वृत्तेर्व्याख्या न कृता। काश्यां भ्रमात् पुण्यराजकृतित्वेन प्रकाशिताया व्याख्याया विषये तेषां किं मतमासीदित्यस्माभिर्वक्तुं न शक्यते। तैः प्रथमकाण्डगतकारिकाणां वाक्यपदीयभावप्रदीपनाम्नी व्याख्या कृता।

येऽस्मादृशा वृत्तिसहितानामेव कारिकाणां वाक्यपदीयत्वमभ्युपगच्छन्ति; तेषां मते केवलकारिकाणां व्याख्या न वाक्यपदीयव्याख्या; किन्तु वाक्यपदीयांशस्य व्याख्या भवितुमर्हति। तत्रभवता भर्तृहरिणा निखिलः स्वाभिप्रायः कारिकासु नाभिव्यक्तीकृतः, असम्भवात्। कारिकासु मुख्यं वस्त्वभिधाय तस्य प्रपञ्चो वृत्तौ कृतः वृत्तिकारिकयोरुभयो-

रपि व्याख्याने एव भर्तृहरेरभिप्राय: कात्स्र्न्येन विवृतो भवति। भावप्रदीपस्य व्याख्यानशैली कयोश्चित् कारिकयोर्व्याख्याया: परीक्षणेनैवावगता भविष्यतीति तदधुना क्रियते।

तत्र 'प्राप्त्युपायोऽनुकारश्च' (वा० १५) इति कारिकागतो भावप्रदीपो दृश्यताम्। प्रथमं तावत् तस्य प्राप्त्युपाय-अनुकार-समाम्नात-अनेकवर्त्म इति कारिकागतपदानामर्थ उक्त:। तदनन्तरं ममाहमित्यहङ्कारसमतिक्रममात्रं ब्रह्मण: प्राप्तिरित्युक्तम्। इदं ब्रह्मप्राप्ति-लक्षणं पूर्वं काश्यां मुद्रितायां व्याख्यायां हर्युपज्ञवृत्तौ चोपलभ्यत इति ततो गृहीतमिति प्रतिभाति। अस्य लक्षणस्य समर्थनार्थं पञ्चदशीगतचित्रदीपत: श्लोक उद्धृत:। इदं च लक्षणं व्याकरणप्रयोजनकथनप्रसङ्गे 'चत्वारि शृङ्गा' इति श्रुतिवाक्यं समुद्धृत्य महता देवेन यत् साम्यमुक्तं भाष्यकृता, तदनुगुणमिति प्रतिपादितम्। ततो ब्रह्मण: सकाशात् प्रथमतो वेद एव विवर्तते, ततोऽध्येतृणामशक्ते: प्रविभक्त: पुनरुपसंहृतभेद: पुनश्च भिद्यत इति मतमवलम्ब्येयं कारिका उत्तरा चेत्युक्त्वास्यार्थस्य दृढीकरणाय भागवत-वायु-पुराण-सनत्सुजातीयेभ्य: श्लोका: समुद्धृता:। तदनन्तरं चतुर्विध एव वेदो ब्रह्मण: सकाशादाविर्भूत:, केवलं शाखाभेदोऽध्ययननिमित्त इत्यन्येषां मतमुपन्यस्तम्, तत्प्रमाणत्वेन च शौनकीयप्राति-शाख्यात् श्लोकद्वयमुद्धृतम्, शाबरभाष्याच्चैक: सन्दर्भ: समुदाहृत:। सर्वमिदं सरसं वैदुष्यद्योतकं प्रकृतकारिकार्थावबोधे सहायकं चेत्यत्र सन्देहो नास्ति; परन्त्वनेन तत्रभवतो भर्तृहरेरभिप्रायस्तद्वृत्त्यवलोकनाकगम्यमान: सम्यग् विवृतो न भवति।

तत्र ह्यादौ ब्रह्मप्राप्तेर्दश विकल्पा: समुपवर्णिता:। या कापि सा भवतु, तस्या: प्राप्त्युपायो वेदराशिरित्युक्तम्। ततो निरुक्तकारमतसमाश्रयणेन वेदानां साक्षात्कृतधर्मर्षि-दृष्टमन्त्रानुकारत्वं कारिकागतानुकारपदाभिधेयमित्युक्तम्। ततस्त्रिभि: प्रकारैरेकस्य वेदस्यै-कत्वानतिक्रमेणैव नानात्वावभास: प्रतिपादित:। तद्यथा— (१) एकस्य वेदस्याभिव्यक्ति-निमित्तात् क्रमलाभे संहिताक्रमविभागेन चरणसमाख्यया च प्रविभक्तमार्गत्वेन नानात्वम्, (२) वेदस्य यागाख्यैकाभिधेयत्वेनैकत्वं चरणभेदाच्च भेद:, (३) यथैकस्यायुर्वेदस्य कलौ शक्तिवैकल्यात् शल्यचिकित्साद्यङ्गविभागस्तथैकस्य वेदस्य कलौ शक्तिवैकल्यादपरि-माणशाखाभेद इति। अधुना पाठकैरवगन्तुं शक्यते तत्रभवद्भर्तृहरेरभिप्रायस्य कियानंशो भावप्रदीपे प्रदर्शितो भवतीति।

'अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्' (वा० १/१३) इति कारिकाया व्याख्या विचार्यताम्। स्वयं विरच्यमानाया वाक्यपदीयाङ्गभूताया अस्या: कारिकाया व्याख्यानावसरे तत्रभवान् भर्तृहरि: कथं 'अपर आह', 'अपरोऽर्थ:' 'अथवा' इत्यादिशब्दप्रयोगपुर:सरं परप्रयोक्तानर्थानाहेति प्रश्नोऽत्र समुल्लसति। नायमवसरस्तं प्रश्नं विचारयितुम्। यथावसरमन्यत्रास्य प्रश्नस्य समाधाने यत्न: करिष्यते। वृत्त्यनुसारेणास्यां कारिकायां प्रतिपादितमर्थजातं संक्षेपतस्त्विदम्— (१) अर्थानां व्यवहारनिमित्तं विवक्षा, विवक्षाया निबन्धनं शब्द:। (२) शब्द: सामान्यस्याथवा जाते: प्रतिपत्तिनिबन्धनम्।

(३) क्रियाकारकयो: परस्परसम्बन्ध एव व्यवहारे तत्त्वम्, स च वाच्यनिबन्धन:। (४) अर्थस्य जात्यादिसंसर्ग: प्रवृत्तिनिमित्तम्। (५) अर्थ: सत्त्वरूपो नामपदनिबन्धन:, प्रवृत्ति: क्रियारूपा आख्यातपदनिबन्धना। (६) व्यवह्रियमाणार्थो बुद्धिरूप:, तस्य च शब्दा एव निबन्धनम्। (७) शब्दानां तत्त्वमवैकल्यम्, तच्च व्याकरणादेवावगम्यत इति।

प्रकृतकारिकाया भावप्रदीपस्य चायं संक्षेप:—भाष्योक्ताऽसन्देहरूपप्रयोजनमाहेयं कारिकेति प्रथममुक्त्वा जातिगुणक्रियासंज्ञा अर्थानां व्यवहारे निबन्धनम्, स च व्यवहार: शब्दमूल:, शब्दस्य तत्त्वमवैकल्यरूपं व्याकरणादेवावगम्यत इति। यदि वृत्तिस्तत्रभवतोऽभिप्रायबोधिकेत्यभ्युपगम्यते, तर्हि भावप्रदीपेन वैदुष्यफलभूतेनापि सोऽभिप्राय: पूर्णतया न विवृत इति स्वीकर्तव्यं भवति। भावप्रदीपकारै: पूर्वं प्रकाशिता तत्रभवद्भर्तृहरेर्वृत्तिर्दृष्टैव स्यादित्यत्र भावप्रदीप एव लिङ्गानि समुपलभ्यन्ते। तथापि यत्तैर्वृत्तेरपि व्याख्या न कृता, न वा तत्समाश्रयणेन स्वव्याख्या विरचिता, तत्र हेतुर्न प्रतीयते।

तत्रभवता भर्तृहरिणा सवृत्तिके वाक्यपदीये प्रतिपादितानां तत्त्वानामवबोधाय कारिकाणां वृत्तेश्च प्रतिपदमर्थं बोधयन्ती दार्शनिकतत्त्वानि तुलनात्मिकया दृष्ट्या विवेचयन्ती च काचिद् व्याख्याऽपेक्षिता। वृषभदेवकृता पद्धत्याख्या च व्याख्यैतादृशीति विदुषां सुतरामुपादेया सा। तस्या: सारस्य प्रकाशने पण्डितश्रीचारुदेवशास्त्रिभिर्महान् विद्वदेकसाध्य: प्रयत्न: कृत:, सर्वेषां वाक्यपदीयं पिपठिषूणां च भूयानुपकार: कृत:। तत्प्रकाशनात्प्रभृत्येव तत्रभवतो भर्तृहरेरभिप्राय: किञ्चित् किञ्चिदवगम्यतेऽध्येतृभि:। यत्तस्या व्याख्याया: सार एव प्रकाशित: संस्कर्तृमहाभागैस्तत्रोपलभ्यमानहस्तलेखग्रन्थानां पाठाशुद्धिरेव मुख्यं कारणमिति प्रतिभाति। हस्तलेखानां पाठाशुद्धौ सत्यामपि यथाशक्ति संशोध्य निखिला सा विदुषां समक्षमुपस्थापनार्हेति मनसि निधायैतदुपोद्घातकर्ता तस्मिन् कर्मणि साम्प्रतं व्यापृत:। यथाशक्ति संस्कृता च सम्पूर्णा वाक्यपदीयपद्धतिरधुना पूनानगरस्थडेक्कनकालेजनामकसंस्थया प्रकाश्यते। प्रकाशितयापि तया न सर्वमपेक्षितं प्रकाशितं स्यात्।

यतो वृषभदेवकृता पद्धति: केवलं प्रथमकाण्डगतानामेव वृत्तिसहितानां कारिकाणां प्रतिपदव्याख्या। तेन विदुषा सवृत्तिकस्य द्वितीयकाण्डस्यापि व्याख्या कृता न वेति वक्तुं न शक्यते। तत्कृतद्वितीयकाण्डव्याख्याया हस्तलेखो न दृष्ट: कुत्रापि केनचित्। अस्माकं सौभाग्ये सति कुत्रचिदुपलभ्येत। द्वितीयकाण्डं च वाक्यकाण्डनामकं वाक्यस्यैव वाचकत्वमभ्युपगच्छतां वैयाकरणानां ग्रन्थरत्नभूते वाक्यपदीये विशिष्टं स्थानमधितिष्ठतीति स्वाभाविकमेतत्। अतस्तत्र प्रतिपादितान्यपि सर्वाणि वैयाकरणानि दार्शनिकानि च तत्त्वानि कयाचित् सम्प्रदायानुसारिण्या व्याख्यया विवेचितानि सन्ति सरसतया सर्वेषां ग्राह्याणि भविष्यन्तीत्यत्र क: सन्देह:।

एवं सवृत्तिकयोः प्रथमद्वितीयकाण्डयोर्हेलाराजेन यथावृत्ति कृतायां व्याख्यायां लुप्तायां सत्याम्, पुण्यराजकृते प्रथमकाण्डव्याख्यानेऽनुपलभ्यमाने वृषभदेवकृतपद्धतौ च प्रथमकाण्डमात्रविषयिकायां सत्यां महत्सौभाग्यमिदमस्माकं सर्वेषां यद् वाराणसेयसंस्कृतविश्वविद्यालये प्राध्यापकपदमलङ्कुर्वाणैर्वेदान्तविभागाध्यक्षैः प्रायेण सर्वेष्वपि शास्त्रेष्वप्रतिहतशक्तिभिर्विद्वद्वरश्रीरघुनाथशर्ममहाभागैर्विद्यार्थिनां विदुषां चोपकाराय निखिलस्यापि वाक्यपदीयस्य व्याख्यानभारः स्वस्कन्धे समारोपितः । तैर्विरच्यमानाया व्याख्याया अम्बाकर्त्रीति संज्ञा । प्रथमकाण्डगता सा समाप्तिं गतेदानीं प्रकाश्यते । व्याख्येयं सर्वैर्विद्वद्भिः सप्रमोदमभिनन्दिता भविष्यतीति सविश्रम्भं प्रतिजानात्ययं जनः ।

अम्बाकर्त्र्याः सर्वविद्वज्जनग्राह्यं स्वरूपमधुना संक्षेपेण विविच्यते । सम्प्रदायानुसारेण विरचितानां शास्त्रग्रन्थाना व्याख्यापि सम्प्रदायानुसारिणी भवितुमर्हतीति सर्वसम्मतमेतत् । गुरुशिष्यपरम्परयाऽधीतविद्यैः कृतपूर्वव्याख्यापरिशीलनैर्विद्वद्भिः प्रणीता व्याख्याः सम्प्रदायप्रकाशिन्यो भवन्ति । सम्प्रदायानुसारित्वे समानेऽपि व्याख्यातृव्यक्तिगतं वैशिष्ट्यं प्रायेण व्याख्यासु दृश्यते । यथा भामतीपञ्चपादिकयोः सम्प्रदायानुसारित्वे समानेऽप्याचार्ययोः श्रीवाचस्पतिमिश्रपद्मपादयोर्व्यक्तिवैशिष्ट्यकृतं व्याख्ययोरपि वैशिष्ट्यमुपलभ्यते, येनान्ततः प्रस्थानद्वयं प्रादुरभूत् । सवृत्तिकस्य प्रथमकाण्डस्यैकैव प्राचीना व्याख्या समुपलभ्यते । सा च वृषभदेवकृता पद्धतिरिति पूर्वमेव प्रतिपादितम् । सा सवृत्तिकं वाक्यपदीयं प्रतिपदं व्याचष्ट इति प्रकाशितात् सारादेवावगन्तुं शक्यते । सम्पूर्णायां पद्धतौ प्रकाशितायां तु विशदतरमवगन्तुं शक्ष्यते ।

अतोऽद्य वाक्यपदीयं व्याख्यातुं प्रवृत्तेन केनचिदपि विदुषा पद्धतेः समाश्रयणमवश्यं कर्तव्यं भवति । अन्यथा स्वकृतं व्याख्यानं भवेत् स्वतन्त्रम्, न तु सम्प्रदायप्रकाशकं ग्रन्थकर्त्रभिप्रायद्योतकं वा । विद्वद्वरश्रीरघुनाथशर्मभिर्विरचिताया अम्बाकर्त्र्यास्त्वयमेव विशेषो यत् सम्प्रदायानुसरणे सत्यपि स्वतन्त्रा सेति, येन ''हरिवृषभवचःपयोधिमग्नं निखिलं वाक्यपदीयरत्नजालम्'' समुन्नीत व्याख्यातृमहाभागैः । अस्य तत्त्वस्योदाहरणत्वेन द्वित्रकारिकागताम्बाकर्त्री निकटतो निरीक्ष्यते ।

तत्र ''नित्याः शब्दार्थसम्बन्धाः'' (वा० १/२३) इति कारिकागतायां वृत्तौ प्रतिपादितमर्थजातं मुख्यतः संक्षेपतश्चेदम्—(१)नित्यः शब्दः, नित्योऽर्थः, नित्यः सम्बन्ध इत्येषा शास्त्रव्यवस्था । (२) महाभाष्यप्रामाण्येन नित्यः शब्दो नित्योऽर्थ इत्याकृतिनिर्देशः । (३) यथा घटे द्रव्यत्वपृथिवीत्वघटत्वादीनामविरुद्धः समवायस्तथा वृक्षशब्देऽपि गुणत्वशब्दत्ववृक्षशब्दत्वादीनामविरुद्धः समवायः । (४) वृक्षशब्दादीनामवयवैरसमकालजन्मभिरयुगपदवस्थितैः शब्दान्तरं वृक्षशब्दादिरूपमारब्धुमशक्तैः कथं वृक्षशब्दाद्यभिव्यक्तिरित्याक्षेपस्योत्क्षेपणादिक्रियाभिव्यक्तिप्रक्रियासाम्योपन्यासेन प्रयत्नविशेषजनितभेदैर्वर्णैः प्रत्येकमस्फुट-स्फुट-स्फुटतर-स्फुटतमरीत्या पूर्वपूर्ववर्णाहितसंस्कारसहितेन चरमवर्णविज्ञानेनाभिव्यज्यते शब्द इति समाधानम् । (५) इयं प्रक्रिया शास्त्रान्तरे परिदृष्टाया

जात्यभिव्यक्तिप्रक्रियाया भिन्ना । (६) आकृतिमनभ्युपगच्छद्भिरनेकध्वन्यभिव्यङ्ग्या नित्या शब्दव्यक्तिरभ्युपगम्यते । (७) व्यवहारनित्यतया नित्या शब्दा इति केचित् । (८) भाष्यानुसारेणाकृतिनित्यत्वादर्थानामपि नित्यत्वम् । (९) शब्दार्थयोः सोऽयमिति यः सम्बन्धः, सोऽर्थदेशनस्य कर्तुमशक्यत्वादौत्पत्तिकः स्वभावसिद्धो न केनचित् कर्त्रा कश्चित् प्रतिपत्तारं प्रत्यज्ञातपूर्वस्तत्प्रथमं कृतः । (१०) इन्द्रियविषयवद्वा समयोपाधिर्योग्यता शब्दार्थयोः सम्बन्धः । (११) शब्दार्थयोः कार्यकारणभावः सम्बन्धः । (१२) नित्यत्वेन व्यवस्थितसाधुत्वेषु व्याकरणस्मृतिशास्त्रं प्रवृत्तमिति ।

निखिलमिदमर्थजातमम्बाकर्त्र्यां सम्पूर्णतया व्याख्यातम् । कामं तत्र तत्र वृषभदेवव्याख्यागतानि पदानि यथाश्रुतानि वा स्वल्पं परिवर्तितानि वा स्वव्याख्याया अङ्गानि कृतानि व्याख्यातृमहाभागैः ।

तद्यथा—''एवं व्याकरणप्रयोजनमभिधाय शास्त्रव्यवस्थाकथनद्वारा तेन प्रयोजनेन सहास्य प्रकरणग्रन्थस्य सम्बन्धमनुबन्धरूपतयाऽभिधातुमुपोद्घातं विरचयति'' (अ०क०, पृ० ४५) इति । प्रकृतकारिकासङ्गतिप्रदर्शनावसरे—'जात्युपरागरहितं वस्तु वस्तुसामान्यरूपतया सर्वासां पदशक्तीनां विषयीभूतानीति परस्परव्यावृत्त्यनवधारणे सति यदा सम्प्रमुग्धं भवति' (अ० क०, पृ० ४७) इति, 'सति सम्प्रमोहे' इति वृत्तिग्रन्थव्याख्यानावसरे—'उत्क्षेपणादीनामवयवत्वेनाभिमत एवैकः कर्मलक्षणो भावः पूर्वापरयोः परमाणुमात्रयोर्देशयोर्विभागसंयोगसमर्थः परेण देशेन संयोगाख्यं स्वकार्यं सम्पाद्य निवर्तते'' (अ०क०, पृ० ४८) इति, ''यद्यपि भ्रमणकर्मणो यः प्रथमक्षणस्तस्योत्क्षेपणाद् विशेषो नावधार्यते, तथापि तत्र भ्रमणत्वादिजातिसमवायेऽपि स जात्यनुरूपप्रत्ययोत्पादनेऽसमर्थः परमाणुमात्रे देशे आक्रमणमात्रस्योत्क्षेपणभ्रमणयोस्तुल्यत्वात्'' (अ० क०, पृ० ४८) इति चोत्क्षेपणादिक्रियाभिव्यक्तिप्रक्रियाव्याख्यानप्रसङ्गे, ''एवं प्रयत्नभेदे सत्यपि वृक्षवृकशब्दयोर्वकारस्य भेदो नोपलभ्यते, जनकप्रयत्नभेदात् तु भेदोऽस्त्येव, स तु दुरवधारः । तदनवधारणाच्च वकारमात्रश्रुतौ वृक्षशब्दत्वरूपजातिविशेषपरिच्छेदो नास्ति'' (अ०क०, पृ० ४९) इति वृक्षादिशब्दव्यक्तिप्रक्रियाविवेचने, अन्यत्र च वृषभदेवव्याख्या स्वव्याख्यायामन्तर्भाविता । न तु तेनाम्बाकर्त्र्याः स्वतन्त्रत्वे नवीनत्वे वा काचित् क्षतिरायाता । यतो वृषभदेवव्याख्यायाः प्रकाशितेऽप्रकाशिते वांशेऽनुपलभ्यमानानि बहूनि वस्तून्यम्बाकर्त्र्यां दृश्यन्ते ।

तद्यथा चूर्णिकाशब्दव्युत्पत्तिः, सम्भवाल्लाघवादानुरूप्याच्चाभिधानस्यापि शब्दाकृतिरूपत्वम्, 'सति वास्तुसम्प्रमोहे' इति वृत्तिग्रन्थस्य समुचितावतरणोपन्यासपूर्वकं व्याख्या, उत्क्षेपणादिक्रिया, वृक्षादिशब्दाभिव्यक्तिप्रक्रियाया वैयाकरणसम्प्रदायानुसारेण (न तु भावप्रदीप इव नैयायिकमतेन) विस्तरतो व्याख्यानम्, अभिव्यञ्जकैः स्वाश्रितानाश्रितोभयाभिव्यक्तेः सोदाहरणं निरूपणम्, शब्दाकृतिमनभ्युपगच्छतां युक्तिक्रमस्य विशदं प्रतिपादनम्, शब्दानामुत्पत्तौ सत्यामपि प्रयोक्तृभिरलब्धप्राथम्याः शब्दा व्यवहारस्य प्रवाहनित्यतया नित्या

इति मतस्य विशदं विवेचनम्, अर्थनित्यत्वविषये भाष्योक्तपक्षचतुष्टयस्य स्पष्टीकरणम्, शब्दार्थयोरस्येदम्भावे सत्यभेदलक्षणस्यौत्पत्तिकस्य प्रथमस्य, इन्द्रियविषयवत् प्रकाश्यप्रकाशकभावरूपसमयोपाधियोग्यताख्यस्य द्वितीयस्य, कार्यकारणरूपस्य तृतीयस्य च सम्बन्धस्य विस्तरत उपपादनमित्यादि सर्वं व्याख्यातृवर्यैर्मुनित्रयकृतिप्रभृतिशेखरान्तव्याकरणागमज्ञानसहितवेदान्तादिदर्शनज्ञानबलेन ललितया भाषयोपस्थापितमित्यम्बाकर्त्र्या वैशिष्ट्यं पोषयति।

'न सोऽस्ति प्रत्ययो लोके' (वा० १/१२३) इति कारिकागताम्बाकर्त्र्यधुना विचार्यताम्। कारिकेयं सुप्रसिद्धा बहुभिर्दार्शनिकैर्वैयाकरणैश्च स्वाभिप्रायसमर्थनार्थं तत्र तत्र स्वग्रन्थेषु समुद्धृता। अस्याः कारिकाया हर्युपज्ञा वृत्तिस्त्वप्रसिद्धशब्दानां प्रयोगेण प्रसिद्धशब्दानामप्रसिद्धेऽर्थे प्रयोगेण विचित्रया वाक्यरचनाशैल्या च न ग्रन्थकर्तुरभिप्रायं विशदं बोधयति। वृषभदेवकृतव्याख्यायाश्चांश एव प्रकाशित इति पूर्वमेवोक्तम्। एवं स्थिते व्याख्यातृमहाभागैर्वृषभदेवव्याख्यायामुपलभ्यमानान्युपयोगीनि वस्तूनि सङ्कलय्य स्ववैदुष्याहतान्यन्यानि च वस्तूनि तत्र संयोज्यैकः सम्पूर्णः सङ्गतश्चार्थो निष्कृष्टः, यो न केवलमस्याः कारिकायाः, अपि त्वन्यकारिकाणामप्यर्थावबोधने सहायको भवेत्। अयं च निष्कृष्टोऽर्थः, स्वव्याख्याया अवतरणरूपेण तैरुपन्यस्तः प्रदीपवन्निखिलां वृत्तिं निखिलामम्बाकर्त्रीं च प्रकाशयति। अवतरणे सुष्ठ्ववगते सति पूर्वं दुर्बोधा वृषभदेवव्याख्यादर्शनेनेषद्गम्या हर्युपज्ञवृत्तिर्बाढं स्पष्टा भवतीत्यम्बाकर्त्र्या भर्तृहर्यभिप्रायावबोधने महत् साहाय्यं कर्तुं शक्यते।

अम्बाकर्त्र्याः स्वरूपनिरूपणाय तृतीयमप्युदाहरणमुपन्यस्योपोद्घातमिमं समाप्तिं नेष्यामि। 'वाग्रूपता चेदुत्क्रामेत्' (वा० १/१२४) इति कारिका तद्गता वृत्तिश्च सर्वस्मिन् व्यवहारोपयोगिनि ज्ञाने शब्दाकारानुगमोऽस्तीति तत्त्वं प्रतिपादयतः। सर्वं ज्ञानं वाग्रूपमात्रानुगतम्। सुषुप्त्यवस्थायामपि सुखविषयके ज्ञाने सूक्ष्मो वाग्धर्मानुगमोऽभ्यावर्तते, निर्विकल्पकज्ञानमपि सूक्ष्मवागनुविद्धम्, अनुवाकस्य श्लोकस्य वा प्रथमग्रहणेऽपि शब्दानुवेधोऽस्ति, असत्यां वाग्रूपतायामुत्पन्नोऽपि प्रकाशः प्रकाशनक्रियायां कथमपि साधनरूपं न प्रतिपद्येत, वाक्यार्थविषयस्य पदार्थप्रत्यवमर्शस्य प्रत्ययवाग्रूपतानिबद्धत्वमिति संक्षेपतोऽस्यां कारिकायां प्रतिपिपादयिषितमर्थजातम्। दार्शनिकमिदमर्थजातम्, न केवलं व्याकरणविषयकम्। अंशतः प्रकाशितयापि वृषभदेवव्याख्यया तस्यावबोधे साहाय्यमवश्यमुपलभ्यते। परं त्वंशमात्रलाभादेव न तया वृत्तेः सर्वार्थावगमो भवति। यत् स्पष्टं न भवति, तद्वृत्तेः प्रतिवाक्यव्याख्याने प्रवृत्तयाऽम्बाकर्त्र्या स्पष्टीक्रियते।

वाक्यार्थविषयस्य पदार्थप्रत्ययवाग्रूपतानुषङ्गप्रदर्शने प्रवृत्ता 'भिन्नरूपाणां चानुपकारिणाम्' (पृ० २१२) इत्यादिवृत्तिर्न सुगमा। तत्र दृश्यमानानां वस्तुमात्रा अनुसन्धान-प्रत्यवमर्श-एकार्थकारित्व-शक्तिसंसर्गयोगोपग्रहादीनां तत्रभवद्भर्तृहरिशैलीवैशिष्ट्यद्योतकानां पारिभाषिकशब्दानां सरलया व्याख्यानेन सन्दर्भोऽयं विशदीकृतोऽम्बाकर्त्र्या। अन्ततश्च

'एवं चैषां चतुर्णां जन्मक्रमः—पूर्वं पदेभ्योऽर्थावसायः, ततस्तेषामेवार्थानामिदं तदिति वाग्रूपानुविद्धेन प्रत्ययेनाकारनिरूपणरूपः प्रत्यवमर्शः, ततस्तेषामेवार्थानां परस्परावच्छेदेनावधारणरूपमनुसन्धानम्, पदार्थविभागाभावेनैकस्मिन् वाक्यार्थे यः शक्तिसंसर्गयोगोपग्रहो बालस्य, सोऽपि व्यक्तवाग्रूपानुविद्ध एवेत्यत्रानुभव एव प्रमाणम्' (पृ० २१२-२१३) इत्युपसंहारेण प्रकृतं तत्त्वं सुगमं कृतम्।

अथवा कियद्वोदाह्रियतामम्बाकर्त्र्याः सौष्ठवप्रदर्शनार्थम्। निखिलापि सा साम्प्रदायिकस्वतन्त्रांशसम्मिश्रणरूपा वाक्यपदीयस्याध्ययनेऽत्यन्तमुपकारिणी भविष्यतीत्यत्र नास्ति सन्देहः। महत् सौभाग्यमिदं वाराणसेयसंस्कृतविश्वविद्यालयस्य यत् तत्रस्थप्राध्यापकैः प्राचीनानामपि विच्छिन्नपठनपाठनपरम्पराणां शास्त्रग्रन्थानां विशदसाम्प्रदायिकप्रामाणिकव्याख्यारचनेन पुनरुज्जीवनं क्रियत इति। प्रथमकाण्डगतेव द्वितीयकाण्डगताप्यम्बाकर्त्री प्रकाशिता भवत्वचिरादिति काशीविश्वनाथं प्रार्थयमानोऽहं विरमामीति शम्।

पूना,
७-६-६३

**को० अ० सुब्रह्मण्य-अय्यरः**

### द्वितीयसंस्करणगता

## संशोधकस्य विज्ञप्तिः

वैयाकरणेषु पाणिनेः, कात्यायनस्य, पतञ्जलेः परं यस्य नाम महता आदरेण गृह्यते, सोऽस्ति भगवान् भर्तृहरिः। अस्य जन्मकर्मादिसम्बन्धे श्रीमद्भिर्बलदेवोपाध्यायैर्महदुपक्रमेण साधितं यदाचार्यो भर्तृहरिः काश्मीरजः ख्रीस्तस्य पञ्चमे शतके वर्तमान आसीदिति। श्रीयुधिष्ठिरमीमांसकैस्त्वयं उज्जयनीयविक्रमादित्यस्याग्रजः ख्रीस्तात् पूर्वं प्रथमशतके आसीदित्युच्यते। तत्र न विचारस्यावसरः, यतस्तथैवानेकैर्विचारितत्वात्, प्रबलस्य प्रमाणान्तरस्यानुपलब्धेश्च।

अयं भर्तृहरिः कारिकाभागस्य तत्रत्याया वृत्तेश्च कर्ता। तत्र कारिकाभागस्य 'वाक्यपदीयम्' इति संज्ञा, वृत्तिस्तु तेनैव भागद्वये रचिता। तत्र प्रथमद्वितीयकाण्डं गुरोर्वसुरातस्य कृपया लब्धम्। तृतीयकाण्डं तु परिशिष्टरूपं स्वमत्या लिखितमिति न व्याख्यानमपेक्षत इति कृत्वोपेक्षितमिति।

श्रीसुब्रह्मण्य-अय्यरमहोदयास्तु वृत्तिसहितस्य ग्रन्थस्य वाक्यपदीयमिति संज्ञा, अतः केवलं करिकाया व्याख्यातारः, न वाक्यपदीयस्य समग्रस्येति वदन्ति; किन्तु वाक्यपदीयस्य व्याख्यातृभिः पुण्यराज-हेलाराज-फुल्लराजप्रभृतिभिर्वृत्त्यनुसारिण्येव व्याख्या कृता, न वृत्तेर्व्याख्यानं विहितम्, न च वृत्तिं वाक्यपदीयमिति कथ्यते। यदि कुत्रचिद् वृत्तेरुद्धरणे वाक्यपदीयमिति केनापि व्यवहृतम्, तदप्येककर्तृकत्वेन वृत्तेर्नामान्तराभावेनेति मन्तव्यम्।

अत्र वाक्यपदीयेऽनेकाष्टीकाः सन्ति। यासु १. हरिवृषभकृता वृत्तिः प्रथमकाण्डे द्वितीयकाण्डस्य कतिपयभागे च, २. हरिवृषभकृता लघुवृत्तिः प्रथमकाण्डे, ३. पुण्यराजकृतः प्रकाशो द्वितीयकाण्डे, ४. हेलराजकृतः प्रकाशस्तृतीयकाण्डे, ५. फुल्लराजटीका तृतीयकाण्डस्य कतिपयकारिकासु, ६. द्रव्येशझाकृता टीका प्रथमकाण्डे, ७. सूर्यनारायण-शुक्लकृता भावप्रदीपव्याख्या ब्रह्मकाण्डे, ८. नारायणदत्तत्रिपाठिकृता टीका ब्रह्मकाण्डे प्रकाशिताः सन्ति। भर्तृहरिरचिता वृत्तिस्त्वधुनापि नोपलभ्यते।

श्रीचारुदेवशास्त्रिभिर्लाहौरमुद्रिते वाक्यपदीयब्रह्मकाण्डव्याख्यानेऽनेकैरुद्धरणैरिदं साधितं यद् वृत्तिकारो हरिवृषभो भर्तृहरिश्चाभिन्नौ। वाराणसेयचौखम्भापुस्तकालयान्मुद्रिता दामोदरशास्त्रिभिस्तदनु गङ्गाधरशास्त्रिभिः सम्पादिता लघ्वी वृत्तिरपि हरिवृषभकृतैवेति भाषासाम्येन विषयसाम्येन पुष्पिकासाम्येन च वक्तुं शक्यते।

परे तु महाभाष्येऽपि भर्तृहरिकृता दीपिका टीकाऽस्तीति कथयन्ति। महाभाष्य-पस्पशाह्निकस्यैव व्याख्याने तथोपलब्धमिति मम्मटकथनं सङ्गच्छते; किन्तु वाक्यपदीयेऽपि काचिद्वृत्तिरासीत्, या हेलाराजपुण्यराजप्रभृतिभिर्दृष्टा, तामाधारीकृत्यैव तास्ताष्टीकाः कृता इति भर्तृहरिकृतवृत्तेरनुपलम्भेऽप्यासीदिति निश्चितमिव भाति।

केचित्तु प्रायष्टीकाकारा ग्रन्थकारा वा लघुवृत्तौ निर्दिशन्ति यत्—एतद् पूर्वग्रन्थे विस्तरतोऽवलोकनीयम्, विस्तरस्तु ग्रन्थान्तरे इति। यथा नागेशेन मञ्जूषादौ, कौण्डभट्टेन भूषणसारे निर्दिष्टम्; किन्त्वत्र लघ्व्यां वृत्तौ किमपि निश्चायकं नास्ति।

अम्बाकर्तृकारदृष्ट्या तु हरिवृषभो लघुवृत्तिकारः, वृत्तिकारस्त्वाचार्यो भर्तृहरिः। अत एव 'प्रक्रिया जगतो यतः' इति प्रथमकारिकांशस्य व्याख्याने समानेऽपि यदपि 'जगतः प्रक्रिया' इत्यस्य जगदाख्या विकाराः प्रक्रियन्त इत्युक्तम्, तदपि न 'विवर्ततेऽर्थभावेन' इत्यनेन गतार्थत्वादित्युक्तं ११ पृष्ठे। षष्ठे पृष्ठे च व्याख्यानमपि विहितम्। एवं पञ्चदशपृष्ठे तृतीयकारिकाव्याख्यानशेषे हरिवृषभस्तु—इत्यादिना व्याख्यानभेदः पाठभेदश्च दर्शितः। तत्र हर्युपज्ञवृत्तित्वेन अस्या वृत्तेरुल्लेखः कृतः। चतुर्थकारिकायां 'हरिवृषभस्तु चिन्त्यः' इत्युक्तम्। अष्टमकारिकाव्याख्याने हरिवृषभेणेति पदं वृषभदेवस्य स्थाने प्रमादपतितमिति टीकादर्शनादेवावगम्यते। इत्थं व्याख्याकारदृष्ट्या हरिवृषभभर्तृहर्योर्भेदो दृश्यते। तत्र श्रीमद्भी रघुनाथशर्मभिः किमभिप्रेत्येदं कृतमिति न स्पष्टतो निर्णेतुं शक्यते, यत उभयोर्वृत्त्योः पुष्पिकायामभेदात्।

स्वोपज्ञटीकात्वेन कथ्यमानाया अस्या वृत्तेः 'वैखर्या मध्यमायाश्च' व्याख्याने निम्नलिखिताः कारिकाः प्रमाणत्वेनोद्धृताः सन्ति।

**स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा।**
**वैखरीवाक्प्रयोक्तॄणां प्राणवृत्तिनिबन्धना॥**
**केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी।**
**प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते॥**
**अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।**
**स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी॥**
**सेयमाकीर्यमाणापि नित्यमागन्तुकैर्मलैः।**
**अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते॥**
**तस्यां दृष्टस्वरूपायामधिकारो निवर्तते।**
**पुरुषे षोडशकले तामाहुरमृतां कलाम्॥**
**प्राप्तोपरागरूपा सा विप्लवैरनुषङ्गिभिः।**
**वैखरी सत्त्वमात्रेव गुणैर्न व्यवकीर्यते॥**इति।

एताश्च कारिका रत्नत्रये इत्थं दृश्यन्ते—

**स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा।**
**प्रयोक्तॄणामियं प्रायः प्राणवृत्तिनिबन्धना॥७३॥**

केवलं बुद्ध्युपादाना क्रमाद् वर्णानुपातिनी ।
अन्तःसङ्कल्परूपा तु न श्रोत्रमुपसर्पति ।।७४।।
प्राणवृत्तिमतिक्रम्य वर्तते मध्यमाह्वया ।
अविभागेन वर्णानां सर्वतः संहृतक्रमात् ।।७५।।
स्वयंप्रकाशा पश्यन्ती मायूराण्डरसोपमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ।।७६।।
यस्यां दृष्टस्वरूपायामधिकारो निवर्तते ।
पुरुषे षोडशकले तामाहुरमृताह्वयाम् ।।७७।।

एताश्च कारिका अष्टमशतके लिखितस्य काश्मीरशैवदर्शनस्य । एतैः प्रमाणैः पञ्चमशतके विद्यमानस्य भर्तृहरेः स्वमतसाधनं न समीचीनं प्रतिभाति ।

एतेन स्वोपज्ञवृत्तित्वेन लोके कृतप्रचारा हरिवृषभटीका भर्तृहरेरेवेति न निःशङ्कं वक्तुं शक्यते ।

अम्बाकर्त्रीटीकाकारास्तु श्रीमन्तो रघुनाथशर्माणो बलियामण्डलान्तर्गत-छाताग्रामवासिनः पाण्डेयकुलमौलिमणेः श्रीकाशीनाथशर्मणो द्वितीयपुत्राः सन्ति । एषां पितरः आजीवनमध्यापयन्तोऽनेकान् शिष्यांश्च योग्यान् विधाय काश्यां शिवसायुज्यमलभन्त । एते शर्ममहोदया विक्रमस्य १९५४ वत्सरे जाता व्याकरणे आचार्यपरीक्षामुत्तीर्य वाराणस्यां वेदान्तादिशास्त्राण्यपि पाठयन्तः काशीस्थेषु प्रतिभासम्पन्नेषु विद्वत्सु ख्यातिमुपगताः काशिकराजकीयसंस्कृतमहाविद्यालये तदनु वाराणसेयसंस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्षपदमलङ्कृत्याधुना अत्रैव विश्वविद्यालये सम्मानितप्राध्यापकपदे नियुक्ता समग्रं वाक्यपदीयं व्याख्यायाचलां कीर्तिं च संस्थाप्य भारतभुवमलङ्कुर्वन्ति ।

एषां प्रयासेन समग्रं समुपलभ्यमानं वाक्यपदीयं परिशोधितं विवृतं च शीघ्रमेव विदुषां करगतं भविष्यतीति महोल्लासविषयः ।

वाक्यपदीयब्रह्मकाण्डस्याम्बाकर्त्रीसहितस्येदं द्वितीयं संस्करणं श्रीमद्भिरनुसन्धान-निदेशकैः डॉ०भागीरथप्रसादत्रिपाठिमहोदयैराज्ञप्तेन मया प्रथमसंस्करणगतमुद्रणाद्यशुद्धीरपाकृत्य उद्धरणेषु यथासम्भवं स्थलनिर्देशम्, अनुच्छेदांश्च यथाध्येतृसुखप्रदं विधाय संशोधितम् । अत्र कर्मणि मम परममित्रैः श्रीमदुमाशङ्करत्रिपाठिभिः, शिष्यकल्पैः श्रीपरमेश्वरपाण्डेयैः साहाय्यं प्रदाय महानुपकारः कृत इति धन्यवादार्हास्ते सन्ति । अत्र विभागे प्रकाशनाधिकारिपदमलङ्कुर्वद्भिः डॉ० श्रीहरिश्चन्द्रमणित्रिपाठिभिर्मुद्रणकर्मणि कालविलम्बं परिहरद्भिर्यत् साहाय्यं कृतम्, तदर्थं ते साधुवादार्हाः सन्तीति शम् ।

**काश्याम्,**
अनन्तचतुर्दशी,
वै० सं० २०३३
(७-९-१९७६ ई.)

**रामगोविन्दशुक्लः**
तदानीन्तनोऽनुसन्धानसहायकः,
अनुसन्धान-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणिका

भर्तृहरिप्रणीतम्

# वाक्यपदीयम्

[ ब्रह्मकाण्डम् ]

हरिवृषभकृतया स्वोपज्ञया वृत्त्या
श्रीरघुनाथशर्मविरचितया
अम्बाकर्त्र्या व्याख्यया च संवलितम्

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।। १ ।।**

---

अम्बाकर्त्री

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
तेन येषां समुत्पत्तिस्तेभ्यो मे सततं नमः।।
मलिनं चिरकालसंस्थितं त्रुटितं च प्रतिभानवर्जितम्।
उपदेशकलामतिश्रितं विदधे भर्तृवचः सुनिर्मलम्।।
हरिवृषभवचः पयोधिमग्नं निखिलं वाक्यपदीयरत्नजालम्।
उदनयमवमज्ज्य यत् प्रयत्नान्ननु मातुः करुणैव तत्र हेतुः।।

इदं वाक्यपदीयं नाम प्रकरणग्रन्थो वाक्यपदस्वरूपप्रतिपादनपरस्तत्प्रसङ्गेन तदर्थप्रतिपादनपरश्च। अस्मिंश्च त्रीणि काण्डानि—ब्रह्मकाण्डम्, वाक्यकाण्डम्, पदकाण्डमिति। तत्र प्रथमे काण्डे शब्दसामान्यं स्फोटाख्यं ब्रह्म शब्दतत्त्वमर्थबीजमुपदर्शितम्। द्वितीयतृतीययोस्तु तद्विशेषौ वाक्यपदरूपौ। तत्रापि वाक्यस्यैवार्थबोधकत्वेन मुख्यत्वात् प्राङ्निर्देशः, पदस्य तु पश्चात्। तदिदं प्रकरणं 'द्वावुपादानशब्देषु' (वा. प. १, का. ४४) इति कारिकातः प्रवर्तिष्यते।

तत्र प्रेक्षावत्प्रवृत्त्यर्थं विषयप्रयोजनसम्बन्धाधिकारिरूपानुबन्धचतुष्टयप्रदर्शनमावश्यकम्। तत्र अपोद्धारपदार्था ये' (वा० १, का० २४) इति कारिकाद्वयेन प्रकरणस्य शब्दतदर्थलक्षणमभिधेयं प्रदर्शितम्। 'स्मृत्यर्थमनुगम्यन्ते' (वा० १, का० २६) इत्यनेन तु शब्दसाधुत्वविज्ञानं व्याकरणस्मृतिप्रयोजनमेव प्रयोजनत्वेन। मोक्षस्तु पारम्पर्येण फलम्। ताभ्यां सहास्य ग्रन्थस्य हेतुहेतुमद्भाव-

सर्वपरिकल्पातीततत्त्वं भेदसंसर्गसमतिक्रमेण समाविष्टं सर्वाभिः शक्तिभिर्विद्याविद्याप्रविभागरूपमप्रविभागं कालभेददर्शनाभ्यासेन मूर्तिविभागभावनया च व्यवहारानुपातिभिर्धर्माधर्मैः सर्वास्ववस्थास्वनाश्रितादिनिधनं ब्रह्मेति प्रतिज्ञायते।

---

सम्बन्धोऽर्थलभ्यः। तादृशफलकामस्तु अधिकार्यपि आर्थ एव। तत्र शब्दतत्त्वस्य ब्रह्मणः स्फोटाख्यस्य साक्षात्कारो व्याकरणेन, अनुपहितस्य तु विशुद्धस्य तस्य साक्षात्कार आगमेन तत्त्वमस्यादि-महावाक्यरूपेण लक्षणया, 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः। अत एवोक्तमत्रापि—'तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते' (वा० १, का० २२) इति। अत आगमवाक्यार्थावबोधार्थमपि छन्दसां मुखं व्याकरणमध्येयम्। ब्रह्मसाक्षात्कारादेव मोक्षः, तच्च परमं प्रयोजनम्। 'तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते' (वा० १, का० १३) इति चावान्तरप्रयोजनम्। अत आदौ ब्रह्मस्वरूपम्, तत्प्राप्त्युपायभूतस्य वेदस्य प्रामाण्यञ्च व्यवस्थाप्य तन्मूलकं व्याकरणशास्त्रमारम्भणीयमिति।

तस्मादकृतकं शास्त्रं स्मृतिञ्च सनिबन्धनाम्।<br>
आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम्॥

(वा० १, का० ४३)

इति शास्त्रारम्भः समर्थितः। अतो ब्रह्मस्वरूपमेव तावद् वक्तुमुपक्रमते—**अनादिनिधनमिति।**

ब्रह्मणो हि दशाद्वयी शास्त्रे प्रसिद्धा। एका विद्ययाऽप्रविभागदशाऽपरा चाविद्यया प्रविभागदशा। तत्र यद्यपि प्रविभागदशायां ब्रह्म विविधविकल्पगोचरम्, तथा हि—तस्यां दशायामेकस्यैव ब्रह्मणो धर्मधर्म्यादिरूपेण विकल्पः। 'घटोऽभूत्, भवति, भविष्यति' इत्यादिकालभेदेन, भिन्नजातिपुरस्कारेण च गोघटादिप्रत्ययः, कयोश्चिद् भेदप्रत्ययः कयोश्चिदभेदप्रत्ययः, क्वचिद् भावप्रत्ययः, क्वचिदभावप्रत्ययः, तथापि कार्यरूपेण प्रविभागाभावदशायां तादृशसर्वविकल्पातीतं ब्रह्मतत्त्वम्।

किञ्च तस्यां दशायां स्वस्माद् भेदाभेदाभ्यामनिर्वाच्याभिः सर्वकार्यानुकूलाभिः शक्तिभिरध्यासितम्। ताश्च शक्तयो ब्रह्मणि सर्गादिकार्यानुमेया वह्न्यादिशक्तिवत् सन्त्येव, न तु भेदाभेदाभ्यामनिर्वाच्यत्वात् शशविषाणवत् तुच्छभूताः।

किञ्च, ब्रह्मणि अविद्याशक्तिमूलिकास्ताः शक्तयः कार्यरूपेण ब्रह्मणः प्रविभागसम्पादिकाः, विद्याशक्तिश्च तत्राप्रविभागसम्पादिका। ततश्च ब्रह्मणो विद्याशक्तिमद्रूपं सर्वविकल्पातीतम्, अविद्याशक्तिमच्च सर्वकार्यानुकूलशक्तिभिः समाश्रितं विकल्पगोचरं चेति। यच्च ब्रह्मणो जगद्रूपेणाविवर्तावस्थायां सर्वविकल्पातीतं रूपं तदेवात्रानादिनिधनमिति निर्दिष्टम्। उत्पत्तिविनाशरहितमित्यर्थः।

एतच्चोपलक्षणं धर्मधर्म्यादिरूपप्रागुदाहृतसर्वविकल्पशून्यत्वस्यापि। अथवा जगद्रूपेण विवर्तावस्थायामपि ब्रह्म अनादिनिधनमेव।

न हि कार्यकारणात्मकस्य विभक्ताविभक्तस्यैकस्य ब्रह्मणः सर्वप्रवादेष्वपूर्वापरे प्रवृत्ति-निवृत्तिकोटी परिसंख्यायेते। न चास्योर्ध्वमधस्तिर्यग्वा मूर्तपरिवर्तप्रत्यङ्गानां क्वचिद-वच्छेदोऽभ्युपगम्यते। तत्तु भिन्नरूपाभिमतानामपि विकाराणां प्रकृत्यन्वयित्वाच्छब्दोप-ग्राह्यतया शब्दोपग्राहितया च शब्दतत्त्वमित्यभिधीयते। स्थितिप्रवृत्तिनिवृत्तिविभागा हि

---

तथा हि—ब्रह्मणो यः स्वकार्यभूतविषयाकारेणोत्पत्तिनिधनादिभिर्विविधविकल्पैः परिच्छेदः, सोऽविद्याशक्तिवशात् सत्य इव भासते। न तु सत्या एव तथा विकल्प्यमाना विषयाः, ब्रह्मणः श्रुतेन कूटस्थनित्यत्वेनोत्पत्तिनिधनादिरूपसत्यविकल्पासम्भवात्।

ननु यदि विवर्तदशायां प्रतीयमाना विषया न सत्यास्तदा कुतस्तत्प्रतीतिरिति चेत्, न, अनादौ संसारे यद् अभूत्, भवति, भविष्यतीत्यादिरूपं कालभेददर्शनं तदभ्याससञ्जातसंस्काराणां परिपाकवशात् कालोपाधिकस्तादृशः सर्वोऽपि कालव्यवहारः। किञ्च, मूर्तिमतां गोघटादीनां पृथग्देशग्रहणाभ्याससञ्जातसंस्कारपरिपाकवशेन च देशोपाधिकः सर्वोऽपि व्यवहारः, न तु गवादितत्त्वनिबन्धनः। गवादीनां विषयाणां ब्रह्मणो विवर्तभूतानां ब्रह्मणोऽव्यतिरेके ब्रह्मणो देशकालकृतविभागाभावेन तेषामपि तदभावात्। ब्रह्मणो देशकालकृतविभागाभावञ्च ब्रह्मविद आहुः—"प्रदेशोऽपि ब्रह्मणः सार्वरूप्यमनतिक्रान्तश्च विकल्पश्च इति"।

अस्यार्थः—ब्रह्मणः सार्वरूप्यं सर्वात्मकत्वमेवाध्यासिकमनतिक्रान्तः, तद्रूपः। चो हेतौ, यतो विकल्पः कल्प्यमान इति।

एवञ्च देशकालभेदेन व्यवहारानुपातिनो धर्मधर्म्यादिभावेन उत्पत्तिनिधनादिभिश्च विकल्प्यमाना एव विषया न तु तैर्व्यवह्रियमाणमपि ब्रह्म आदिनिधने अन्यान् वा विकल्पा-नाश्रयति, कूटस्थत्वेनाविकारित्वादिति विवर्तदशायामपि ब्रह्म अनादिनिधनमेव। एकमेव हि ब्रह्म कार्यञ्च कारणञ्च, अतो यथाक्रमं विभक्तं चाविभक्तं च सर्वेषु श्रुतिप्रमितवादेष्ववस्थितम्। तस्य च कार्यं प्रति प्रवृत्तिकोटिर्निवृत्तिकोटिर्वा यथाक्रमं पूर्वापरकालकल्पनाशून्या न परिसंख्यातुं शक्यते। न हि ब्रह्मणः सर्गप्रवृत्तेः प्राक् किञ्चिन्नासीत् सर्गनिवृत्तेश्च पश्चान्नास्ति किमपीति कल्पयितुमपि शक्यते, अनादित्वात् प्रवृत्तिनिवृत्त्योः कालपरिच्छेदासम्भवात्। एवञ्चानादिनिधनत्वं ब्रह्मणः साधु सिद्धम्।

तच्च ब्रह्म शब्दतत्त्वम्, शब्दात्मकमित्यर्थः। ननु प्रागुक्तं ब्रह्म सर्वविकल्पातीततत्त्वमिति। अधुना तु कथं तद्विपरीतमुच्यते शब्दतत्त्वमिति? इति चेत्, न, विकाराणां प्रकृत्यन्वयात् शब्दत्वोपपत्तेः। तथा हि घटकुण्डलादयो विकारा मृत्सुवर्णादिप्रकृत्यन्विता हि दृश्यन्ते। तथैवैते रूपादयो विषयाः शब्दरूपानुगता एव दृश्यन्ते। तदुक्तम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।

(वा० १, का० १२३)

शब्देन क्रियन्ते। तच्चाक्षरनिमित्तत्वादक्षरमित्युच्यते। प्रत्यक्चैतन्येऽन्तःसन्निवेशितस्य परसम्बोधनार्था व्यक्तिरभिष्यन्दते। एवं ह्याह—

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमनभिष्यन्दमानाम्।
उतान्ये विदुरन्यामिव च एनां नानारूपामात्मनि सन्निविष्टाम्॥ इति।

---

अत एषां प्रकृतिः शब्दतत्त्वमेव ब्रह्मेति।

ननु भिन्नस्वरूपाणां भिन्नेन्द्रियग्राह्याणाञ्च रूपादीनां कथमभिन्नरूपमभिन्नेन्द्रियग्राह्यञ्च शब्दतत्त्वं प्रकृतिः, उपादानोपादेययोः सारूप्यस्यैवोचितत्वादिति चेत्, न, रूपादीनां भिन्नरूपताया आविद्यकत्वात्, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुत्या प्रकृतेरेव सत्यत्वलाभात्। किञ्च, शब्देन वस्तु परिच्छिद्यते, अतः प्रकृतिविकृतिभावेन शब्दात्मकं वस्तु। तथा हि—यद्यर्थः शब्दात्मको न भवेत् तदा शाब्दे ज्ञाने न प्रतीयेत, किन्तु शब्देन शब्द एव प्रतीयेत, अन्येनान्यस्य प्रतीत्यसम्भवात्, स्वस्यैव स्वप्रतीतिजनकतायाः प्रत्यक्षे दृष्टत्वात्। प्रतीयते च शब्देन अर्थ इति शब्दप्रकृतिकतया शब्दात्मकोऽर्थः। किञ्च, शब्देन विषयविशिष्टं ज्ञानमभिलप्यते, मम घट इति ज्ञानं जातमिति। न चान्येनान्यस्याभिलापो युक्त इति शब्दात्मकोऽर्थो ज्ञानञ्चेति। किञ्च, सर्वेऽपि स्थितिप्रवृत्तिनिवृत्तिरूपा व्यवहाराः शब्देनैव क्रियन्त इत्यतोऽपि तेषां व्यवहाराणा तद्विषयाणां च मूलभूतं शब्दात्मकं ब्रह्मैवेत्यतोऽप्यत्र शब्दतत्त्वमित्युक्तिर्ब्रह्मणि युज्यते। अतः शब्दतत्त्वस्यैव रूपाद्यात्मना विवर्तः स्वीकर्तव्य इति शब्दतत्त्वं ब्रह्मेत्युक्तम्। वक्ष्यते चाग्रे शब्दप्रकृतिकत्वं जगतः—

'शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः'। (वा० १, का० १२१) इति,

'शब्देष्वेवाश्रिता शक्तिः'। (वा० १, का० ११९) इत्यादि च।

तच्च शब्दतत्त्वं ब्रह्म, अक्षराणां वर्णानां निमित्तत्वादक्षरमित्युच्यते, कार्यकारणयोरभेदोपचारात्। कथं ब्रह्मणोऽक्षराणां निमित्तत्वमिति चेदित्थम्—प्रत्यक् चैतन्ये ज्ञानरूपेऽन्तरविद्यया सन्निवेशिताः पदवाक्यरूपा वर्णाः परप्रत्यायनार्थं प्रयत्नेनाभिव्यज्यन्ते। सेयं वर्णव्यक्तिर्वर्णसंघातरूपा ब्रह्मरूपस्यात्मनोऽभिष्यन्द इत्युच्यते। इत्येवं ब्रह्मोपादानिका वर्णव्यक्तिर्घटव्यक्तिरिव मृदुपादानिका। एवं ह्याह—

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमनभिष्यन्दमानाम्।
उतान्ये विदुरन्यामिव च एनां नानारूपामात्मनि सन्निविष्टाम्॥

अस्यार्थः—सूक्ष्माम्, स्वकारणीभूतप्रत्यक्चैतन्यरूपब्रह्मात्मना सूक्ष्माम्। अर्थेनाप्रविभक्ततत्त्वाम् तेनैव रूपेण अर्थस्योपादानत्वात् , अर्थादभिन्नरूपाम्। एकाम् , तेनैव रूपेण

विवर्ततेऽर्थभावेन। एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहिता विवर्तः। स्वप्नविषयप्रतिभासवत्।

उक्तं च—"मूर्तिक्रियाविवर्तौ अविद्याशक्तिप्रवृत्तिमात्रम्, तौ विद्यात्मनि तत्त्वान्यत्वाभ्यामनाख्येयौ। एतद्धि अविद्याया अविद्यात्वम्" इति।

---

पदवाक्यवर्णभेदशून्याम्। उत अपि, अभिष्यन्दमानां वक्तुरिच्छानुवर्तिना प्रयत्नेनाभिव्यज्यमानाम्। क्वचित्तु 'अनभिष्यन्दमानाम्' इति पाठः। स तु अनभिष्यन्दमानामेकामिति पदसमन्वयेन व्याख्येयः। आत्मनि ज्ञानस्वरूपे पदवाक्यवर्णस्वरूपेण सन्निविष्टाम्, सन्निवेशेन आनुपूर्व्या प्रतीताम्। अन्ये ब्रह्मणोऽर्थतश्चानन्यामपि अन्यामिव, एकामपि नानारूपामिव एनां वाचं विदुरिति।

पूर्वार्द्धे सूक्ष्मत्वादिना विहिताया वाच उत्तरार्द्धेऽन्यत्वादिना पुनर्विधानादन्वादेशः। रूपादिविषयप्रतीतौ तद्वाचकशब्दानां सूक्ष्माणां श्रवणानर्हाणां रूपाद्यर्थेष्वनुगम इति प्राक् शब्दतत्त्वं ब्रह्म इत्युक्तम्।

इदानीं स्थूलवर्णाकारेण ब्रह्मैव रूपादिबोधार्थं विवर्तत इत्यक्षरमित्युक्तम्—विवर्ततेऽर्थभावेन इति। स्वरूपादप्रच्युतं सदर्थरूपतया प्रतीयत इत्यर्थः। एकस्य तत्त्वात् स्वरूपाद् अप्रच्युतस्य अधिष्ठानस्य आरोप्ये स्वभेदप्रतिभासपुरःसरं योऽसत्यस्याधिष्ठानविभागेन च प्रतीयमानस्यारोप्यस्य धर्मोपग्रहः स विवर्त इत्युच्यते, स्वप्नविषयप्रतिभासवत्।

तथा हि—यथा स्वप्नावस्थायामेक एव विज्ञानात्मा भिन्नजातीयानेकपदार्थावभासो जायते, न च विज्ञानस्य तदा स्वरूपहानं भवति, तथा सत्यनुभवाभावेन उत्थितस्य स्मरणानुपपत्तेः। तथा शब्दतत्त्वं ब्रह्माऽपि स्वरूपादप्रच्युतं सत् स्वाविद्यारूपया शक्त्या अर्थाकारेण प्रतिभासत इति भावः।

उक्तञ्च—"मूर्तिक्रियाविवर्तावविद्याशक्तिप्रवृत्तिमात्रम्, तौ विद्यात्मनि तत्त्वान्यत्वाभ्यामनाख्येयौ, एतद्धि अविद्याया अविद्यात्वम्" इति।

अस्यार्थः—गेहे घटः, क्षेत्रे गौरित्यादिना देशभेदावग्रहरूपेण यद् गोघटादिरूपाणामर्थानामवस्थानं स मूर्तिरूपो विवर्तः। यत्तु तेषामेव जायते नश्यति वा घट इत्यादिना उत्पादविनाशादिक्रियोपहितरूपेणावस्थानं स क्रियारूपो विवर्तः। स द्विविधोऽपि विवर्तोऽविद्याशक्तिरूपतया प्रवृत्तिरूपतया चावस्थाभेदेन भिन्न इति चातुर्विध्यं विवर्तस्य।

तथा हि—यदा मूर्तिविवर्तक्रियाविवर्तयोर्द्वयोरपि विपर्यासरूपं दर्शनं नास्ति, तदाऽविद्याशक्तिरूपो विवर्तः। यदा तु तयोर्दर्शनं तदा प्रवृत्तिरूपो विवर्त इति। तौ मूर्तिक्रियारूपौ द्वावपि विवर्तौ विद्यारूपे आत्मनि आविद्यकत्वाद् भेदाभेदाभ्यामनिर्वाच्यौ। एतादृशविवर्तजननमेवाविद्याया अविद्यात्वमिति।

प्रक्रिया जगतो यतः। तत एव हि शब्दाख्यादुपसंहृतक्रमाद् ब्रह्मणः सर्वविकार-प्रत्यस्तमये संवर्तादनाकृतात्पूर्वं विकारग्रन्थिरूपत्वेनाव्यपदेश्याज्जगदाख्या विकाराः प्रक्रियन्ते। तथा ह्युक्तम्—

य: सर्वपरिकल्पानामाभासेऽप्यनवस्थितः।
तर्कागमानुमानेन बहुधा परिकल्पितः॥

---

'प्रक्रिया जगतो यतः' इति। यतो ब्रह्मणः शब्दतत्त्वाज्जगतः सकलस्यागमस्य त्रयीरूपस्य प्रक्रिया प्रथमत उत्पत्तिः।

अत्र जगत्पदं सकलागमेषु लाक्षणिकम्, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै' इति ब्रह्मण उत्पत्तेः पूर्वमेव वेदानामुत्पत्तिश्रवणात्, वक्ष्यते च।

अयं भावः—सर्वविकाराणां प्रलये वर्णमात्रापदाद्यानुपूर्वीशून्यमुपसंहृतक्रमं शब्दाख्यं ब्रह्मैवावतिष्ठते। सेयं ब्रह्मणोऽवस्था 'संवर्त' इत्युच्यते।

तल्लक्षणं तु—अनेकस्यैकत्रोपसंहारः 'संवर्त' इति; तद्विपरीतं तु एकस्यानेकरूपेण प्रतिभासो 'विवर्त' इति।

प्रलये च पदार्थानां नास्ति परस्परभेदेनावधारणमिति तदाऽनाकृतमव्याकृतं वा ब्रह्म उच्यते।

किञ्च, तदानीं शब्दाख्ये ब्रह्मणि विकाररूपा ग्रन्थयो रूपाद्यात्मका विषयाः कारणात्मना सन्तोऽपि भोगासम्पादकत्वादसन्त इवेति तदानीं तैरव्यपदेश्यं ब्रह्मेति तादृशाद् ब्रह्मणः सकलागमा एव पूर्वं जायन्ते वेदशब्देभ्यश्चार्था इति।

अत्र च पद्यार्थे एता अभियुक्तोक्तयः—

य: सर्वपरिकल्पानामाभासे(सो)ऽप्यनवस्थितः।
तर्कागमानुमानेन बहुधा परिकल्पितः॥

य: प्रत्यक्चैतन्यरूप आत्मा सर्वेषां परिकल्पानां रूपादिविषयविकल्पानामाभासेऽधिष्ठानतया सामान्यरूपेण विशेष्यतागोचरत्वेऽपि, अनवस्थितो विशेषरूपेण प्रकारतयाऽगोचरः। 'आभासोऽपि' इति पाठे 'तेन रूपेण तथा गोचरोऽपि' इति व्याख्येयम्। तर्कागमानुमानेन लिङ्गं विना केवलेन दृष्टान्तेन स्वयमुत्प्रेक्षारूपं ( कल्पनारूपं ) यत्प्रतिभानमसौ तर्कः। यथाऽऽत्मा सूर्यसहस्रप्रकाश इव विद्युद्विद्योतनमिवेत्यादिः। परपुरुषाद् गुर्वादिभ्यः श्रवणमागमः। सल्लिङ्गतः साधनमनुमानम्। एतैर्य आत्मा बहुधा बहुभी रूपादिविषयाकारैः परिकल्पितो विकल्पगोचरः कृत इत्यर्थः।

व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ।
सत्यानृते च विश्वात्मा प्रविवेकात् प्रकाशते॥
अन्तर्यामी स भूतानामाराद् दूरे च दृश्यते।
सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षुभिरुपास्यते॥

---

व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ।
सत्यानृते च विश्वात्मा प्रविवेकात् प्रकाशते॥

यो विश्वात्माऽविद्यया निजशक्त्या विश्वरूपेण विवर्तनाद् विश्वोपादानतया विश्वरूपोऽपि भेदसंसर्गौ विषयभेदं विषयसंसर्गञ्च व्यतीतोऽतिक्रान्तः, 'नेह नानास्ति किञ्चन', 'न तु तद् द्वितीयमस्ति', 'असङ्गो नहि सज्जते' इत्यादिश्रुतेः। भावाभावौ च व्यतीत इति योजना।

अयं भावः—विवर्तदशायां सतां रूपादिविषयाणामस्तित्वरूपा भावरूपता स्वाकारेण विवृत्तसद्रूपब्रह्मोपधानादेव न स्वतः। संवर्तदशायामसताञ्च रूपादिविषयाणामभावरूपता नास्तित्वरूपा ब्रह्मसत्ताकारोपहितस्वरूपनिषेधरूपत्वात्। तौ च रूपादीनां भावाभावौ ब्रह्मणि दशाभेदेन कल्पितौ; वस्तुतस्तु ब्रह्म तादृशदशाद्वयविनिर्मुक्तमिति।

यद्वा दृश्यमानस्य रूपादेरसत्यत्वात्तद्भिन्नस्य ब्रह्मणोऽसंसर्गितया धर्मैरनवधार्यमाणत्वात् सत्तामतिक्रान्तं ब्रह्म, प्रत्यक्चैतन्यरूपतया स्वप्रकाशतया चोपलभ्यमानत्वेन असत्तामप्यतिक्रान्तं ब्रह्म। क्रमाक्रमौ। किञ्चासङ्गित्वादेव कालदेशोपाधिकं क्रममक्रमञ्च व्यतीतं तत्। सत्यानृते च, किञ्च व्यावहारिकं सत्यं प्रपञ्चरूपं स्वात्मनि मायया कल्पितम्, अनृतं च प्रातिभासिकं स्वाप्नप्रपञ्चादि, समतिक्रान्तं ब्रह्म। एवं सर्वविकल्पान् व्यतीतोऽपि विश्वात्मा प्रविवेकाद् युक्त्याऽन्नमयादिकोशेभ्यः पञ्चभ्यो विवेचनात् पृथक्करणात्, स्वरूपेण प्रकाशते, नान्यथा इत्यर्थः।

अन्तर्यामी स भूतानामाराद् दूरे च दृश्यते।
सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षुभिरुपास्यते॥

स प्रागुक्त आत्मा भूतानां सर्वेषां प्राणिनाम्, अन्तर्यामी अन्तरवस्थाय प्रवर्तकः, आरात् समीपे स्वात्मरूपत्वात्, दूरे च परस्मिन् दृश्यते, एक एवोपलभ्यते। सोऽत्यन्तमुक्तः, तस्य मुक्तिर्हि अन्तं कालकृतं परिच्छेदमतिक्रान्तेत्यत्यन्तमुक्त इत्युच्यते। सदा मुक्त इत्यर्थः। स च स्वमोक्षाय मुमुक्षुभिरुपास्यते, निष्कामकर्मानुष्ठानेन समाधौ साक्षात्कारेण वा सेव्यत इत्यर्थः।

प्रकृतित्वमपि प्राप्तान् विकारानाकरोति सः ।
ऋतुधामेव ग्रीष्मान्ते महतो मेघसंप्लवान् ।।
तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ।
अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकम् ।।
तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामा विकारिणः ।
मारुतादिव जायन्ते वृष्टिमन्तो बलाहकाः ।।

---

प्रकृतित्वमपि प्राप्तान् विकारानाकरोति सः ।
ऋतुधामेव ग्रीष्मान्ते महतो मेघसंप्लवान् ।।

य एते प्रधानपरमाण्वादयोऽपि कारणानि महदादीनां प्रकृतित्वं प्राप्ताः, तानप्यसावेव विश्वात्मा जनयति। अत एवात्र ते विकारशब्देनोक्ताः । यथा ऋतुधामा, ऋतवो वसन्तादयस्तेषां सारभूतं तेजो यस्य स ऋतुधामा सूर्यः, यद्वा ऋतवो वर्षरात्रयो वर्षदिनानि तेषां जनकं तेजो यस्य सः । अत्र वर्षं वृष्टिः । यद्वाऽत्र संवत्सर ऋतुः, तस्य सारभूता वर्षाः, तासां जनकं धाम यस्येति बहुव्रीहिणा ऋतुधामा सूर्य इति । स ऋतुधामा सूर्यो यथा ग्रीष्मान्ते महतो मेघसंप्लवान् ( अत्र संप्लवो व्याप्तिः ) व्यापकमेघान् जनयतीत्यर्थः ।

तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ।
अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकम् ।।

तस्याकाशादिवदेकमपि चैतन्यं कार्यकरणसंघातरूपोपाधिभेदेन बहुधा देवतिर्यङ्नरादिभेदेन प्रविभज्यते भिद्यते। तस्येति षष्ठी राहोः शिर इतिवद् व्यपदेशिवद्भावेन पृथक्त्वापदेशात्। उत्पातकाले वारिराशेरङ्गाराङ्कितमुदकमिवेति योजना।

तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामा विकारिणः ।
मारुतादिव जायन्ते वृष्टिमन्तो बलाहकाः ।।

अत्र गोत्रं सादृश्यम्, आकृतिर्जातिः । आकृतिगोत्रस्थात् जातिसादृश्यस्थितात्, जातिसदृशात् । जातिर्यथा व्यक्तिष्वनुगता तथेदमपि ब्रह्म सर्वविकारानुगतमिति जातिसदृशम्। तस्मादात्मनः, विकारिणोऽविद्यया विकृताद् व्यक्तिग्रामा घटपटादयः, मारुतविशेषाद् वृष्टिमन्तो बलाहका इव जायन्त इत्यर्थः ।

यद्यपि पूर्वत्रापि मेघदृष्टान्तमुखेन सर्वविकारप्रकृतित्वं ब्रह्मण उक्तम्, तथापि पूर्वत्र ऋतुधाम्नो मेघकारणत्वमुक्तम्, अत्र तु मारुतानाम् ।

यद्वा पूर्वत्र यथा सूर्यस्य वसन्तादि-ऋतुसंवत्सरादिरूपविकारान्तहेतोर्मेघहेतुत्वमपि, एवं ब्रह्मणोऽपि सर्वप्रकृतित्वमित्युक्तम्, अत्र तु सर्वानुगतत्वेन जातितुल्यता सर्वकारणस्य ब्रह्मण उक्तेति विशेषः ।

त्रयीरूपेण तज्ज्योतिः परमं परिवर्तते।
पृथक्तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम्॥
शान्तविद्यात्मको योंऽशस्तदु हैतदविद्यया।
तया ग्रस्तमिवाजस्रं या निर्वक्तुं न शक्यते॥
सर्वतः परिवर्तानां परिमाणं न विद्यते।
तस्या या लब्धसंस्कारा न स्वात्मन्यवतिष्ठते॥

---

त्रयीरूपेण तज्ज्योतिः परमं परिवर्तते।
पृथक्तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम्॥

तत् पूर्ववर्णितम्, परमं लौकिकानामादित्याग्न्यादिज्योतिषामप्यवभासकं ज्योतिः, सर्वावभासकत्वादविद्यारूपतमोनिवर्तकत्वाच्च ज्योतिःशब्दाभिधेयम्, त्रयीरूपेण = ऋग्यजुःसामरूपेण प्रथमं परिवर्तते विवर्तते। पृथक्तीर्थप्रवादेषु भिन्नेषु = साङ्ख्यादिशास्त्रप्रवादेषु, दृष्टिभेदानाम् आत्मैकत्वानेकत्वप्रकृतिसत्यत्वासत्यत्वादिदृष्टिभेदानां निबन्धनं सम्भवकारणम्। य एते साङ्ख्यादिप्रवादास्ते त्रयीरूपेण विवृत्ताद् ब्रह्मण एव प्रस्तूयन्त इति तेषां दृष्टिभेदानां तदेव निबन्धनम्। अत एवाग्रे वक्ष्यति—

तस्यार्थवादरूपाणि निश्रिताः स्वविकल्पजाः॥ इति। (वा० १, का० ८)

शान्तं विद्यात्मकं योंऽशस्तदु हैतदविद्यया।
तया ग्रस्तमिवाजस्रं या निर्वक्तुं न शक्यते॥

ब्रह्मणि विद्याऽविद्याप्रविभागेणांशद्वयं परिकल्प्याह—शान्तविद्यात्मकमिति। शान्तं स्थूलसूक्ष्मकारणशरीरेषु सञ्जायमानविविधसंक्षोभशून्यम्, विद्यात्मकं नित्यविज्ञानात्मकम्, योंऽशः, तदु ह तदेव ह। अत्र हशब्दः शास्त्रप्रसिद्धिद्योतकः। एतत् प्रत्यक्चैतन्यम्, तया अविद्ययाऽजस्रं ग्रस्तमिव = आवृतमिव, अभ्रखण्डेनादित्यबिम्बमिव, याऽविद्या सत्त्वासत्त्वाभ्यामात्मभेदाभेदाभ्यां वा निर्वक्तुं न शक्यत इति योजना।

सर्वतः परिवर्तानां परिमाणं न विद्यते।
तस्या या लब्धसंस्कारा न स्वात्मन्यवतिष्ठते॥

तस्या अविद्याया परिवर्तानां = परिणामानां परिमाणम् = इयत्तया सङ्ख्यानं न विद्यते।

ननु प्राग् ब्रह्मणः परिवर्ता अर्था इत्युक्तम्, अत्र तु अविद्याया इति कथमुच्यत इति चेत्, श्रूयताम्—ब्रह्मणो नित्यकूटस्थत्वेनाविकारितया न ब्रह्मणो वस्तुतः परिवर्ता अर्थाः, किन्तु ब्रह्मणि अध्यस्ताया अविद्याया इति परिवर्तमानाविद्यासन्निधानेन ब्रह्मणः परिवर्ता इत्युक्तम्। याऽविद्या लब्धसंस्कारा लब्धप्रबोधा जीवेन कृतसाक्षात्कारा स्वात्मनि स्वस्वरूपे नावतिष्ठते।

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥

तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते ॥

ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम् ।
विवृत्तं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ॥ १ ॥

---

अयं भावः—यदाऽविद्यायाः शक्तयो ज्ञानवैराग्यनिरोधसंस्कारादयो लब्धपरिपाका भवन्ति, तदानेन परिकल्पितेनात्मना जीवेन मिथ्यात्वेन भासनात् स्वरूपप्रच्युतिरिव तस्याः, जीवन्मुक्तौ तस्याः प्रारब्धभोगार्थं संस्काररूपेण सत्त्वाभ्युपगमेऽप्यसत्यरूपेणेन्द्रजालवदवस्थानादिति ।

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते ॥

यथा तिमिरदोषदूषितलोचनः पुरुषो विशुद्धमप्याकाशं चित्राभिर्मात्राभिर्विषयैः सङ्कीर्णमिवाभिमन्यते । मीयन्ते = चक्षुरादिभिः प्रमीयन्त इति मात्रा रूपादयो विषयाः, तथेदममृतं नित्यं ब्रह्म निर्विकारमप्यविद्यया कलुषत्वमापन्नमिव भेदरूपं भिन्नं विवर्तते प्रतीयत इत्यर्थः ।

ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम् ।
विवृत्तं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ॥

शब्दतत्त्वमित्यत्र हेतुमाह—ब्रह्मेदमिति । इद जगत् शब्दनिर्माणं ब्रह्मैव । सर्वे रूपादयो विकाराः शब्दरूपतया निर्मीयन्तेऽनेनेति कर्तरि बहुवचनाल्ल्युट् । शब्दरूपतया रूपादयोऽनेन निर्मीयन्त इत्युक्त्या शब्दतत्त्वस्य ब्रह्मणः प्रकृतिरूपेणार्थेष्वनुगमो दर्शितः । शब्दशक्तिनिबन्धनं शब्दस्य वाऽभिधाऽऽख्या शक्तिः सा निबन्धनं ज्ञापककारणमस्य तत्तथा । अनेन अर्थस्य स्थिति-प्रवृत्तिनिवृत्तिविभागाः शब्देनाक्रियन्त इत्युक्तं भवति । तथा हि—अर्थस्य शब्द एव स्थितिः, शब्दादेव प्रवृत्तिः, शब्दे एव निवृत्तिर्लय इति । यदीदं न स्यात्, तदा शब्दशक्त्या न बोध्येतेति । अथवा ब्रह्मेदमिति इदमात्मकस्य जगतो ब्रह्माभेदः साध्यते । तत्र हेतुः शब्दनिर्माणमिति । यतः शब्देन निर्मितं तत इत्यर्थः ।

प्रकृतस्य हेतोः साधनायाह—शब्दशक्तिनिबन्धनमिति । शब्दशक्तयो यतस्तत्रार्थेष्वनुगता आसते, प्रलीयन्ते वा तत्र शब्दशक्तिष्वर्था विनाशकाल इति शब्दशक्तिनिबन्धनमिदं जगदित्यर्थः । किञ्चेदं जगत् शब्दमात्राभ्यः शब्दतत्त्वस्य ब्रह्मणो मात्राभ्यः, तत्तदर्थानुकूलशक्तिपरिच्छिन्नेभ्योंऽशेभ्यः, विवृत्तं विवर्तरूपेणोद्भूतम्, प्रलीयमानञ्च तास्वेव शब्दमात्रासु स्वोपादानकारणीभूतासु प्रविलीयत इत्यर्थः ।

**एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।**
**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ।। २ ।।**

यावद्विकारविकारिविषयमेकत्वरूपं पृथक्त्वरूपं वा सर्वं तत्प्रकृत्येकत्वानतिक्रमेणेत्येतदाम्नातम् । तद्यथा—'सलिल एवैको द्रष्टाऽद्वैत एक एवाभवत्' । तथा—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० उ० ६/२/१) इति । पुनश्चाह—'प्रणव एवैकस्त्रेधा व्यभज्यत' इति । तथा—'असद्वा इदमग्र आसीत् । किं तदसदासीत् । ऋषयो वाव तेऽग्रे तदसदासीत् । य ऋषयः प्राणाः' इति ।

---

अनादिनिधनं ब्रह्मेतीमां कारिकां स्याद्वादरत्नाकरे वादिदेवसूरिरित्थं व्याचष्टे— अनादिनिधनं हि शब्दब्रह्म, उत्पादविनाशाभावात् । अक्षरं चाकाराद्यक्षरस्य । निमित्तत्वात् । अनेन वाचकरूपता, अर्थभावेनेत्यनेन तु वाच्यरूपता सूचिता । प्रक्रियेति भेदाः । शब्दब्रह्मेति नामसङ्कीर्तनमिति ।

शान्तरक्षितस्त्वस्याः कारिकाया अर्थं स्वोपज्ञकारिकयाऽऽह—

नाशोत्पादसमालीढं ब्रह्म शब्दमयं परम् ।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते ।। इति ।

'अनादिनिधनं शब्दब्रह्मतत्त्वम्' इति वादिदेवसूरिसम्मतः पाठस्तु हरिवृषभदेवाद्यसम्मतोऽर्थे चासङ्गत इति हेयः ।

कारिकायाः समासार्थस्तु—यद् ब्रह्म आनदिनिधनम्, उत्पादविनाशरहितं सर्वविकल्पातीतं शब्दतत्त्वम्, अर्थानां शब्दोपग्राह्यतयाऽर्थेषु मृदादिवत् प्रकृतित्वेन शब्दानुगमात् शब्दतत्त्वम्, अक्षराणां वर्णानां निमित्तत्वादक्षरम्, अर्थभावेन अर्थरूपतया विवर्तते स्वरूपादप्रच्युतं प्रतीयते । यतः शब्दतत्त्वाद् ब्रह्मणो जगतः सकलागमानां प्रक्रिया प्रथमत उत्पत्तिरिति ।

यत्तु महावैयाकरणहरिवृषभकृते प्रकाशे अक्षरमित्यस्य विनाशरहितमित्यर्थमभिप्रेत्य तच्चानिमित्तत्वादक्षरमित्युक्तम्, तन्न युक्तम्; अनादिनिधनमित्यत्र निधनस्य प्रतिषेधेन पुनरुक्तेः । यदपि जगतः प्रक्रिया इत्यस्य जगदाख्या विकाराः प्रक्रियन्त इत्युक्तम्, तदपि न, 'विवर्ततेऽर्थभावेन' इत्यनेन गतार्थत्वात् ।।१।।

इदानीं ब्रह्मणः सर्वथाभेदरूपप्रतिषेधमाह—**एकमेवेति ।**

यत् शब्दतत्त्वं ब्रह्म एकमेवाम्नातम् । एकमेवाद्वितीयमित्यादिश्रुत्या पौनःपुन्येनोक्तम् । तथा हि—लोके ये घटरुचकादयो विकाराः, ये च मृत्सुवर्णादयो विकारिणस्तत्र विकारिणामेकत्वे विकाराणाञ्च परस्परं नानात्वेऽपि तत्सर्वं सर्वप्रकृतेर्ब्रह्मण एकत्वादेकमित्याम्नातम्, ब्रह्मणि एकत्वञ्च भेदव्यवच्छेदमात्रम्, न त्वेकत्वसंख्यायोगरूपम् । तथा च श्रुतयः—"सलिल एवैको द्रष्टाऽद्वैत एक एवाभवत्" इति, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति, "प्रणव एवैकस्त्रेधा व्यभज्यत" इति, "असद्वा इदमग्र आसीत्, किं तदसदासीत् । ऋषयो वाव तेऽग्रे तदसदासीत् । य ऋषयः प्राणाः" इति च ।

भिन्नं शक्तिव्यपाश्रयात्। एकत्वस्याविरोधेन शब्दतत्त्वे ब्रह्मणि समुच्चितां विरोधिन्य आत्मभूताः शक्तयः। तद्यथा भिन्नार्थप्रत्यवभासमात्रायामेकस्यामुपलब्धावर्थाकारकप्रत्यवभासमात्राः पृथिवीलोका इति। न हि ज्ञेयगतो वृक्षाद्याकारावग्रहो ज्ञानस्यैकत्वेन विरुध्यते। नास्याकारात् तदाकारस्यात्मभेदोऽस्ति,

---

अत्र ब्रह्मणः सलिलत्वेन रूपणं स्वच्छत्वात्। यथा विभुत्वादाकाशत्वेन रूपणम्। यथा वा विधारकत्वेन प्राणत्वेन रूपणम्। प्रणव एवैक इत्यत्र प्रणवशब्देन तदर्थोऽविवृत्त आत्मा, वाच्यवाचकयोरभेदात्। त्रेधा ऋग्यजुःसामरूपैः। ऋषयः प्राणा इत्यत्र प्राणा इन्द्रियाणि, दर्शनसाधनत्वात्। प्राणानामसत्त्वं च विकारत्वाद् ब्रह्मणः। श्रुतावद्वैतशब्दोऽभेदार्थकः, न तु द्वित्वनिषेधार्थकः; त्रिचतुरादिष्वपि तत्प्रसक्तेः; उत्तरसंख्याबाधात्।

**भिन्नं शक्तिव्यपाश्रयादिति।** शक्तिभेदाश्रयाद् भिन्नं भिन्नत्वेन प्रतीयमानं व्यवह्रियमाणं वेत्यर्थः। व्यपावत्रानर्थकौ छन्दोऽनुरोधेनोपात्तौ।

क्वचित्तु भिन्नशक्तिव्यापाश्रयादिति पाठः। स तु न युक्तः, हेतुपञ्चम्यन्तस्यास्य पूर्वत्र परत्र वाऽन्वयानुपपत्तेः। तथा हि—पूर्वत्रानन्वयः स्पष्ट एव। उत्तरत्रापि नान्वयः सम्भवति, स्वस्मिन् स्वशक्तिभ्यो भेदे भिन्नशक्त्याश्रयत्वस्याप्रयोजकत्वात्। यद्वा भिन्नशक्तिव्यापाश्रयादिति पाठे पञ्चम्यन्तस्य पूर्वत्रैवान्वयः, शक्तीनां भेदेऽपि तदाश्रयस्यैकत्वात्। अत्र शक्तिशब्देन कारणात्मना स्थिता घटादयः पदार्थाः, कारणगता तत्तत्कार्यानुकूला योग्यता वा विवक्षिता। ते चोभये भिन्नरूपा अपि परमकारणस्य ब्रह्मण आत्मभूता एवेति भिन्नशक्त्याश्रयत्वेनापि न तस्य भेदः।

अथवा यद्यभिन्नं प्रागुक्तरुतं ब्रह्म, तदा कथमयं भेदव्यवहार इत्याशङ्क्य समाधत्ते—भिन्नशक्तिव्यपाश्रयादिति। अत्र भेदव्यवहार इति शेषोऽध्याहर्तव्यः।

अयं भावः—शब्दतत्त्वे ब्रह्मणि यदेकत्वम्, तदविरोधेन परस्परं विरोधिन्यो ब्रह्मण आत्मभूता देशकालाविभागेन समुच्चिता अनिर्वाच्याः शक्तयः सन्ति। ताश्चैकजातीयत्वेन ब्रह्मण एकत्वं न विरुन्धन्ति। विरोधिसदसत्कार्योदयेन च तासां परस्परं वैलक्षण्यमनुमीयते, विरोधिप्रत्ययैश्च नानात्वमिति।

ननु कथं पुनरभिन्नस्य वस्तुनस्तद्रूपापरित्यागेन भिन्नरूपतेति, अनुमानविरोधेनाद्वैतागमस्याप्रामाण्यम्। अनुमानाकारश्च—ब्रह्म नाभिन्नम्, अविकारित्वे सत्यनेकाकारत्वेन प्रतीयमानत्वात्, गोघटादिवदिति चेत्, न, अर्थोपलब्धौ व्यभिचारात्। तथा हि—भिन्नस्य विलक्षणस्यार्थस्य प्रत्यवभासमात्राः प्रत्यवभासव्यक्तयो यस्यामुपलब्धौ = बुद्धौ तस्यां येऽर्थाः = अर्थानुरूपाः, प्रत्यवभासाः = प्रतिबिम्बकाः, ते न बुद्धिगतमेकत्वमतिवर्तन्ते। तद्यथा—पृथिवी इति, लोका इति। अत्र पृथिवीशब्देन पृथिव्यवयवभूता गोघटवृक्षादयो गृह्यन्ते, तदुपलब्धेरनेकाकारत्वात्, पृथिव्युपलब्धेरेकाकारत्वात्। एवं लोकपदेनापि न मनुष्यसमाजो गृह्यते, किन्तु तदवयवभूता देवदत्तादयः। तथा च यथा ज्ञानगतो वृक्षाद्याकारावग्रहो न ज्ञानस्यैकत्वेन विरुध्यते, नार्थाकाराज्ज्ञानाकारस्यात्म-

**अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः ।।३।।**

---

तेषामेकज्ञानतत्त्वानतिक्रमात् । तदेवमपृथक्त्वं पृथक्प्रत्यवभासानामपि मिथः सर्वशक्तीनाम् ।

अपृथक्त्वेऽपि शक्तिभ्य इति । न खलु जातिव्यक्तिव्यवहारवदन्याः काश्चिच्छक्तयो ब्रह्मणो व्यतिरेकिण्यो विद्यन्ते । तत्तु प्रकाशवत्प्रकाश्यावग्रहाभ्यो बहिस्तत्त्वाभ्य इवात्ममात्राभ्यस्तादात्म्येऽपि सति पृथक्तत्त्वमिवावसीयत इति ॥२।

कालाख्येन हि स्वातन्त्र्येण सर्वाः परतन्त्रा जन्मवत्यः शक्तयः समाविष्टाः कालशक्तिवृत्तिमनुपतन्ति । ततश्च प्रतिभावं वैश्वरूप्यस्य प्रतिबन्धाभ्यनुज्ञाभ्यां

---

भेदोऽस्ति, तेषामर्थाकाराणामेकज्ञानतत्त्वानतिक्रमात्, तथैवाद्वितीये ब्रह्मणि मिथः पृथक्त्वेन प्रत्यवभासमानानामपि सर्वशक्तीनामद्वितीयब्रह्मतत्त्वानतिक्रमेणापृथक्त्वमेव ।

**अपृथक्त्वेऽपि शक्तिभ्य इति ।** यथा खलु जातिव्यक्त्योः परस्परं भेदः, न तथा शक्तिभिः सह ब्रह्मणो भेदः; किन्तु यथा साङ्ख्यमते प्रकाशात्मचित्प्रतिबिम्बवदन्तःकरणमेकं सर्वविषयाकारेण परिणमनमप्येकाकारम् । न च ता वृत्तयः काश्चन ततो व्यतिरेकिण्यस्तस्माद् बहिर्भूताः, तथापि भिन्ना इव ततो गृह्यन्ते । एवं ब्रह्मणोऽपि शक्तयो विकारमात्राश्चापृथक्त्वेऽपि भिन्ना इव गृह्यन्त इति ।

समासार्थस्तु—यच्छब्दतत्त्वं ब्रह्म एकमेव श्रुतिष्वाम्नातं पौनःपुन्येनोक्तम्, शक्तिभ्योऽपृथक्त्वेऽपि = शक्तिभ्योऽपृथक्त्वेन वस्तुत एकत्वेऽपि मिथो भिन्नशक्त्याश्रयत्वेन **पृथक्त्वेनेव वर्तते** भिन्नमिव व्यवहारे प्रतीयत इति । यद्वा शक्तिभ्योऽपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते पृथक्तत्त्वमिव प्रतीयत इत्यर्थः ।

अयं भावः—शक्तिभ्यो ब्रह्मणोऽपृथक्त्वेऽपि शक्तिभेदकृत आरोपितः पृथक्त्वावभास इत्यर्थः । यथा प्रकाशस्यैकत्वेऽपि तत्तत्प्रकाश्याकारावग्रहकृत आरोपितः प्रकाशे पृथक्त्वव्यवहारः ।

वस्तुतस्तु प्रकाश्याकाराणामपि प्रकाशादभेदेन न मिथो भेदः, तदभिन्नाभिन्नस्य तदभिन्नत्वनियम इति न्यायादिति ॥२॥

ब्रह्मण एकत्वेऽपि शक्तिभेदे नियामकमाह— **अध्याहितकलां यस्येति ।**

यस्य ब्रह्मणोऽध्याहितकलाम् आरोपितभेदाम् । कलाऽत्र भेदः, कलतेरनेकार्थत्वात् । कालशक्तिमुपाश्रिता जन्मादयः षड्विकारा भावभेदस्य योनयो भवन्तीति योजना ।

अयं भावः— यद्यपि सर्वेऽपि विकाराः = कार्याणि स्वस्वकारणाधीनोत्पत्तयः, तथाप्यस्ति तेषां सर्वेषामप्युत्पत्तौ कालशक्तिः सहकारिकारणम् । कालशक्तिश्चैकत्वान्नित्यत्वाच्च सर्वासु तत्तत्कारणशक्तिषु जन्मवतीषु समनुगतेति तत्तत्कारणशक्तिकृतावच्छेदेन क्रमवानिव कालशक्तेरवभासोपगमो लक्ष्यते । तत्तत्कारणशक्तिपरिच्छिन्ना च क्रमवती कालशक्तिः काञ्चित् कारणशक्तिं

शक्त्यवच्छेदेन क्रमवानिवावभासोपगमो लक्ष्यते। सर्वेषां हि विकाराणां कारणान्तरेष्वप्यपेक्षावतां प्रतिबन्धजन्मनोरभ्यनुज्ञया सहकारिकारणं कालः। तस्य क्रमवद्भिर्मात्रारूपैः कर्तृशक्तिः प्रविभज्यमाना विकारमात्रागतं भेदरूपं तत्राध्यारोपयति तुलासूत्र इव संयोगिद्रव्यान्तरगुरुत्वप्रतिबन्धकाले दण्डलेखावच्छेदम्।

तत्रैवमभून्नाभूदित्यपूर्वापरस्य भावस्य पौर्वापर्यव्यवस्थाविकल्पे सति जन्मादयो विकाराः षट् परिणामानां सत्ताविकाराणां योनय उपप्लवन्ते। जातिसमुद्देशे तु सत्ताविभागे न्यक्षेण भावविकारा वक्ष्यन्ते ॥३॥

---

प्रतिबध्नाति, काञ्चित् शक्तिं चाभ्यनुजानाति। ततश्च प्रतिभावं क्रमेण वैश्वरूप्यम् = नानारूपत्वम् अनुभूयते। यथैकस्मिन् वृक्षे किसलयादिवैचित्र्यम्; एकस्मिन् वा किसलये रक्तत्वमार्दवादिविशेषाः। कालशक्तिकृते तत्तत्कारणशक्तिप्रतिबन्धाभ्यनुज्ञे च यथा। यथैकस्मिन् वृक्षे प्रथमं किसलयस्याभ्यनुज्ञा पल्लवस्य प्रतिबन्धः, ततः किसलयस्य प्रतिबन्धः पल्लवस्याभ्यनुज्ञा, अत एवेदं पदार्थानां वैश्वरूप्यम्। तत्तत्कार्याणां तत्तदुपादानकारणशक्तयश्च परतन्त्रा अदृष्टादिरूपजन्मवत्कारणान्तराधीनवृत्तय इति कालशक्तेर्नित्यत्वात् सदा सन्निधानेऽपि न सदा सर्वकार्यप्रसवः, कारणान्तराणां सदाऽसन्निधानात्। इयं च कालशक्तिर्भगवतः स्वातन्त्र्याख्या कर्तृत्वशक्तिः पदार्थानां निष्पादनोपसंहारयोग्यतारूपा। पदार्थानां निष्पादनं च स्वोपादाने कारणात्मनाऽवस्थितानामाविर्भावनम् उत्पत्त्यभ्यनुज्ञारूपम्, उपसंहारश्च तत्रैवोपादाने तिरोभावनरूपः स्थित्युत्पत्त्योर्द्वयोरपि प्रतिबन्धेनेति। सा च भगवतः कालाख्या कर्तृत्वशक्तिरभिन्नापि क्रमवद्भिर्मात्रारूपैः = तत्तत्कारणशक्तिरूपैः मीयन्ते निर्मीयन्ते पदार्था आभिरिति मात्राः शक्तयः प्रविभज्यमाना विकारमात्रागतं भेदरूपं संसर्गात् स्वस्मिन्नध्यारोपितं स्वाधिष्ठाने भगवत्यध्यारोपयति। यथा दण्डलेखा उन्मानेन, यः सूत्रद्वारा दण्डलेखासंयोगिनो द्रव्यान्तरस्य परिमेयद्रव्यस्य गुरुत्वप्रतिबन्धः = अधोनयनानुकूलगुरुत्वशक्तिप्रतिबन्धः, तत्काले परिमेयद्रव्यगतं परिच्छेदं तत्संयोगेन स्वस्मिन्नध्यारोपितं तुलासूत्रस्थानेऽध्यारोपयति। एवञ्च कालशक्तेरेकत्वेऽपि नानात्वं स्वसंसृष्टतत्तत्कारणशक्तिनानात्वप्रयुक्तं तत्राध्यारोपितेन च नानात्वेन ब्रह्मणो नानात्वमध्यारोपितमित्यायातम्। सर्वाश्च कारणशक्तयो भगवतः स्वातन्त्र्याख्यां कर्तृत्वशक्तिं कालाख्यां नातिवर्तन्ते; किन्तु तद्वृत्तिमनुपतन्त्येवेति नियतकाले प्रतिबन्धजन्माभ्यनुज्ञे सर्वेषां भावानामिति। एतच्च सर्वं हर्युपज्ञटीकावृषभदेवकृततट्टीकादर्शनमूलकम्।

एवं कालभेदे सति स्वरूपतोऽपूर्वापरस्यापि भावस्याभूदित्यतीतकालरूपेण नाभूदिति भविष्यद्वर्तमानकालरूपेण पौर्वापर्यव्यवस्थाविकल्पे सति कालकृताः सर्वेषामपि भावानां जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति षड्विकाराः = परिणामा भावभेदस्य क्रियाविशेषस्य पच्यादिरूपस्य ब्रह्मरूपसत्ताविकारविशेषस्य योनयोऽतीतभविष्यद्वर्तमानरूपैरपाक्षीत्-पक्ष्यति-पचतीत्यादिरूपैर्ज्ञापककारणानि, उपप्लवन्ते = सम्पद्यन्ते। तत्रापक्षयविनाशाभ्यां पूर्वक्रियाया अतीतत्वमपरस्याश्च भविष्यत्वं ज्ञाप्यते। जन्मस्थितिविपरिणामविवृद्धिभिस्तु वर्तमानत्वमित्यूह्यम्। एते च षड्भावविकारा जातिसमुद्देशे सत्ताविभागे कार्त्स्न्येन वक्ष्यन्ते।

**एकस्य सर्वबीजस्य यस्य चेयमनेकधा।**
**भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ।।४।।**

---

एकस्य हि ब्रह्मणस्तत्त्वान्यत्वाभ्यां सत्त्वासत्त्वाभ्यां चानिरुक्ताविरोधिशक्त्युपग्राह्यस्यासत्यरूपप्रविभागस्य स्वप्नविज्ञानपुरुषवदबहिस्तत्त्वाः परस्पविलक्षणा भोक्तृ-

---

समासार्थस्तु—यस्य ब्रह्मणोऽध्याहितकलां स्वसंसर्गितत्तदुपादानशक्तिभेदेनाध्यारोपितभेदां कालशक्तिमुपाश्रिताः, तत्तदुपादानशक्तीनां कारणान्तराधीनवृत्तिकानां सहकारिण्या कालशक्त्याऽभ्यनुज्ञाताः पच्यादिक्रियाणां जन्मादयः षड्विकाराः परिणामाः, भावभेदस्य क्रियाविशेषस्य पच्यादिरूपस्य ब्रह्मरूपसत्तासामान्यविकारस्य, योनयः अतीतभविष्यद्वर्तमानत्वादिरूपैः = अपाक्षीत्-पक्ष्यति-पचतीत्यादिरूपैः, ज्ञाने हेतवो भवन्तीति।

महावैयाकरणो हरिवृषभस्तु सतां भावविकाराणां योनय उपप्लवन्त इति व्याचचक्षे। तत्तु 'सत्ताविकाराणां योनय उपप्लवन्ते' इति हर्युपज्ञटीकाया वृषभदेवकृतेन क्रियाविशेषाणां पचादीनामिति व्याख्यानेन विरुद्ध्यते। किञ्च, कारिकायां 'भावभेदस्य' इत्यस्मिन् पदे भेदग्रहणं भावविशेषार्थकं क्रियाविशेषाग्रहणे भावसामान्यग्रहणे च नोपपद्यत इत्यवधेयम्।

हरिवृषभस्तु 'अव्याहताः कला यस्य' इति पाठमाश्रित्य अव्याहतास्तत्स्वरूपत्वेन नित्या अपि यस्य कलाः शक्तयः कालशक्तिमाश्रिता भावभेदस्य योनयो भवन्तीत्यन्वय इति वदन् ब्रह्मणि कालाख्या स्वातन्त्र्यशक्तिर्जन्माद्यनुकूलाश्च शक्तयो नित्याः सन्ति, जन्मादयश्च षड्विकारास्तासां परिणामाः। ते च क्रमवन्तः, जन्मादिशक्तीनां नित्यत्वेऽपि कारणान्तराणामपि कालातिरिक्तानामपेक्षणात्, कारणान्तराणाञ्चानित्यत्वेन सदाऽसन्निधानात्। कालशक्तिश्च सहकारिकारणं जन्मादिशक्तीनाम्। विकारगतं भेदं च कालशक्तावारोप्य कालभेदः। एवं स्वरूपतः पौर्वापर्यरहितस्यापि भावस्य कालशक्त्या पौर्वापर्यव्यवस्थायां कल्पितायां जन्मादयः षड्विकाराः कारणात्मना सतामेव भावानां जातत्वादिव्यवहारे योनयो भवन्तीत्यर्थमभिप्रैति।

हर्युपज्ञटीकायां तु—भगवतः कालाख्या शक्तिर्नित्या, सर्वेषां भावानां स्वस्वोपादानादिकारणगताः शक्तयस्त्वनित्याः, आश्रयानित्यत्वात्। तासां सहकारिकारणं कालः। उपादानादिशक्तयः कालशक्तिश्च कारणान्तराधीनवृत्तय इति न सदा जन्मादयः, कारणान्तराणां सदाऽसन्निधानात्। जन्मादयश्चोपादानादिशक्तीनां परिणामाः क्रमवन्तः। अत एव परिणामिन्यः शक्तयोऽपि क्रमवत्यः। तासां क्रमरूपैः कालशक्तेरपि तत्संसृष्टायाः क्रमवानिवावभासोपगमो लक्ष्यते।

एवं क्रमवद्भिः शक्तिरूपैः कालस्य कर्तृशक्तिः प्रविभज्यमाना स्वस्मिन्नध्यारोपितं विकारगतं भेदं स्वाधिष्ठाने ब्रह्मण्यध्यारोपयतीति रीत्या एकस्यापि ब्रह्मणो नानात्वमिति स्थितम्॥३॥

एवं सर्वतो भेदप्रतिषेधम् = स्वगतसजातीयविजातीयभेदप्रतिषेधं ब्रह्मण्यभिधायाऽभिन्नस्यापि तस्य सर्वतः सर्वत्र भेदव्यवहारहेतुतामाह—**एकस्येति**।

**प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।**
**एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् ।।५।।**

---

भोक्तव्यभोगग्रन्थयो विवर्तन्ते । तस्य च ग्रन्थ्यन्तररूपसमतिक्रमेण विवृत्तग्रन्थिपरिच्छेद-स्येयमनेकधा लोके व्यवहारव्यवस्था प्रकल्पते ॥ ४ ॥

ममाहमित्यहङ्कारग्रन्थिसमतिक्रममात्रं ब्रह्मणः प्राप्तिः । विकाराणां प्रकृतिभावापत्तिरित्यपरे ।

---

एकस्यापि सर्वबीजस्य । चोऽप्यर्थे । यस्य ब्रह्मण इयमनुभूयमाना भोक्तृभोक्तव्यरूपेण भोगरूपेण चानेकधा स्थितिर्विवर्तरूपा व्यवहारव्यवस्था इति योजना ।

ननूक्तं प्राक्—'प्रक्रिया जगतो यतः' इति । ततो गतार्थेयं कारिकेति चेत्, न, यतस्तत्र ब्रह्मणि सर्वोत्पत्तिहेतुता प्रदर्शिता, न तु स्थितिकाले सर्वभेदव्यवहारहेतुता । सा त्वत्र भोक्तृभोक्तव्यभोगव्यवहाररूपनिदर्शनोपन्यासमुखेन प्रदर्श्यते ।

अयं भावः—ब्रह्म यद्यपि एकमेवाम्नातम्, तथा तत्र भेदाभेदाभ्यां सत्त्वासत्त्वाभ्याञ्चानिर्वाच्या विरुद्धकार्यप्रसवानुमितविरोधा अप्येकस्मिन् ब्रह्मण्यधिष्ठाने यौगपद्येन वृत्तेरविरोधिन्यः शक्तयः सन्ति, "परास्य शक्तिर्विविधैव श्रूयते", "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतिशतेभ्यः । ताभिश्च शक्तिभिर्ब्रह्मणोऽसत्यो रूपप्रविभागः कल्पितः । तेषु च प्रविभक्तेषु रूपेषु जीवपदाभिधेयेषु भोक्तृभोक्तव्यभोगग्रन्थयोऽनादिभवसञ्चितानुभवजनितवासनाः स्वप्नविज्ञानपुरुषवदबहिस्तत्त्वाः । यथा स्वप्ने दृश्यमाना विज्ञानमयाः पुरुषाः प्रकृतेर्विज्ञानस्यैकत्वात् तदभिन्नाभिन्नस्य तदभिन्नत्वनियम इति न्यायेनैकत्वमजहतोऽपि मिथो भेदेन दृश्यन्ते व्यपदिश्यन्ते च, तद्वत् परस्परविलक्षणा अदृष्टवशाद् भोक्त्रादिरूपैर्विवर्तन्ते । सोऽयं ब्रह्मणो विवर्तः, तदुपाधिभूतानां तत्तद्वासनानुविद्धानां शक्तीनां तु परिणाम एव । तस्य च ब्रह्मणो ग्रन्थ्यन्तररूपसमतिक्रमेण स्थितानां ग्रन्थीनां वासनानां विवर्ते सतीयमनेकधा भोक्त्रादिरूपेण लोके व्यवहारव्यवस्था प्रकल्पत इति । इदं हर्युपज्ञटीकामनुसृत्य व्याख्यातम् ।

हरिवृषभस्तु—का सा कालशक्तिरत आह—**एकस्य सर्वबीजस्येति** । एकस्य सर्वबीजस्य ब्रह्मणस्तत्त्वान्यत्वाभ्यां सत्त्वासत्त्वाभ्याञ्चानिर्वाच्या शक्तिरूपा स्थितिरनेकधा भोक्तृभोक्तव्यभोगरूपेण लोकव्यवहाराय प्रवर्तत इत्यर्थ इति वदन् ब्रह्मोपाधिरूपशक्तिपरिणाममेव भोक्त्रादिकमभ्युपगच्छतीत्यतो नार्थभेदः, किन्त्वत्र व्याख्याने स्थितिपदस्य शक्तिरूपोऽर्थश्चिन्त्यः ।।४।।

एवं प्राप्यब्रह्मणः स्वरूपं प्रदर्श्य प्राप्त्युपायं कथयति—**प्राप्त्युपायोऽनुकारश्चेति** ।

तस्य ब्रह्मणः प्राप्त्युपायोऽनुकारश्च वेदः । स च यद्यपि एकः, तथापि कलौ नृणां शक्तिवैकल्यादनेकवर्त्मेव ऋग्यजुःसामरूपभेदेन तत्तच्छाखाभेदेन संहिता-पद-क्रमादिभेदेन च पृथक् पृथक् समाम्नात इति योजना ।

तत्र दर्शनेषु ब्रह्मणः प्राप्तिर्दशधा विकल्पिता । तथा हि—अद्वितीयात्मसाक्षात्कारेण ममाहमित्यहङ्कारतादात्म्याध्यासरूपग्रन्थिसमतिक्रममात्रं ब्रह्मणः प्राप्तिरित्यौपनिषदाः । प्रकृति-

वैकरण्यम्, असाधना परितृप्तिः, आत्मतत्त्वमात्मकामत्वमनागन्तुकार्थत्वम्, परिपूर्णशक्तित्वम्, कालवृत्तीनामात्ममात्रास्वसमावेशः सर्वात्मना नैरात्म्यमिति प्राप्तिविकल्पाः।

प्राप्त्युपायो ब्रह्मराशिः। यथाभ्युदयस्य दानतपोब्रह्मचर्यादिः। एवं ह्याह— "वेदाभ्यासात् परमान्तरं शुक्लमजरं ज्योतिरस्मिन्नेवापारे तमसि वीते विवर्तते" इति।

---

पुरुषान्यथाख्यात्या प्रकृतेश्चरिताधिकारत्वात् तं प्रति निवृत्त्या विकाराणां प्रकृतिभावापत्त्या भोगनिवृत्तिरूपोऽपवर्ग इति सांख्यपथानुगाः।

वैकरण्यं नाम बाह्याभ्यन्तरकरणानां यत्नपूर्वकनिरोधाभ्यासेन परिपक्वेन स्वभावतो विषयेभ्यो निवृत्तिरेव, तदेव ब्रह्मप्राप्तिरिति योगानुसारिणः। तथा हि—चक्षुरादिवृत्तिनिबन्धनो रूपादिग्रहः, ततश्च तत्प्राप्तये विविधाः समीहा अपि भवन्ति, ततस्ताभिः सुकृतदुष्कृतोपचयेन जात्यायुर्भोगरूपः संसारः। अतो बाह्यकरणानां चक्षुरादीनां पञ्चानां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च पञ्चानां पाण्यादीनां बुद्धिमनसोश्चाभ्यन्तरकरणयोर्निवृत्त्या संसारनिवृत्तिर्ब्रह्मप्राप्तिश्चेति युज्यते।

अबहिःसाधना परितृप्तिर्विषयलौल्याननुविद्धश्चेतस आनन्दानुभवावस्थाविशेष एव ब्रह्मप्राप्तिरित्यपि क्वचित्। संसारिणां बहिरनुकूलविषयसाधना या तृप्तिस्तद्व्यवच्छेदायाबहिःसाधनेत्युक्तम्।

क्वचित्तु—निरस्तसमस्तोपाधिपङ्कसम्पर्कमद्वितीयं स्वप्रकाशमात्मतत्त्वमेव ब्रह्मप्राप्तिरित्युच्यते। यत उपनिषत्सु वर्ण्यते—"यथेष्टया स्त्रिया परिष्वक्तो न किञ्चन वेद" इति। क्वचित्तु आत्मकामत्वमेव ब्रह्मप्राप्तिरिति, यतोऽनन्ताद्वितीये सच्चिदानन्दरूपे ब्रह्मणि साक्षात्कृते न शब्दादीन् विषयान् कामयते, तेष्वौत्सुक्यविगमात्।

अनागन्तुकार्यत्वं ब्रह्मप्राप्तिरित्यपि केचित्। अपरिच्छिन्नात्मसुखाननुभवेन केवलमागन्तुकं वैषयिकं सुखमर्थयत इति आगन्तुकार्थः पुरुषः, तस्य भावो नञा निषिध्यते। एतदुक्तं भवति—सर्वस्य भोक्तव्यस्य प्रकृतिपुरुषान्यथाख्यातिरवधिरिति शब्दादेर्विषयजातस्य भुक्तत्वान्न तदात्मसुखातिरिक्तं सुखमर्थयत इति।

केचित्तु परिपूर्णशक्तित्वं ब्रह्मप्राप्तिरिति। शक्तीनां परिपूर्णता चापरिच्छेदः साकल्यं चेत्युभयरूपम्। एषा च सगुणब्रह्मप्राप्तिर्हिरण्यगर्भभावापत्तिरूपा विराड्भावापत्तिरूपा वा।

केचित्तु—कालवृत्तीनामात्ममात्रास्वसमावेशो ब्रह्मप्राप्तिरिति।

अयं भावः—कालवृत्तीनां कालव्यापाराणाम्, आत्ममात्रासु आत्मशक्तिषु, असमावेशोऽसम्बन्धः, आत्मशक्तीनां कालव्यापारानियन्त्रितत्वमिति यावत्। माध्यमिकास्तु सर्वात्मना नैरात्म्यमेव ब्रह्मप्राप्तिरिति वदन्ति।

एवं दशसु विकल्पेषु या कापि ब्रह्मप्राप्तिर्भवतु, किन्तु तस्याः प्राप्त्युपायो वेदराशिः। यथाऽभ्युदयस्य दानतपोब्रह्मचर्यादिः, एवं ह्याह—"वेदाभ्यासात् परमान्तरं शुक्लमजरं ज्योतिरस्मिन्नेवापारे तमसि वीते विवर्तते" इति। अत्र ज्योतिःपदेन स्वप्रकाशमात्मतत्त्वम्। अजर-

अनुकार इति यां सूक्ष्मां नित्यामतीन्द्रियां वाचमृषयः साक्षात्कृतधर्माणो मन्त्रदृशः पश्यन्ति, तामसाक्षात्कृतधर्मभ्योऽपरेभ्यः प्रवेदयिष्यमाणा बिल्मं सामनन्ति स्वप्नवृत्तमिव दृष्टश्रुतानुभूतमाचिख्यासन्त इत्येष पुराकल्पः ।

आह खल्वपि—"साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽपरेभ्योऽसाक्षात्कृत-धर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः, उपदेशाय ग्लायन्तोऽपरे विल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च । "बिल्मं भिल्मं भासनं वा" इति । तस्य वेदो महर्षिभिः, एकोऽप्यनेकवर्त्मेव ।

---

मिति शरीरधर्मनिरासः । शुक्लपदेन च कारणकार्यकरणरूपशरीरत्रयरूपोपाधिनिरासः । आन्तरं हृदयाद्यन्तरुपलभ्यमानत्वात् । अपारं तमश्चाज्ञानरूपं पापसङ्घातरूपं च । वीते विगतेऽस्मिन्नेव जन्मनि, नान्यस्मिन् जन्मनि । विवर्तते प्रकाशत इत्यर्थः । ब्रह्मणोऽनुकारश्च वेदः । अत्रानुकार-पदेनालेख्यरूपः प्रतिच्छन्दकः । यद्वा प्रतिबिम्बम् ।

तदुक्तं वृषभदेवेन—वस्तुतो भेदाभावादनुकार इव वेदो ब्रह्मणः । यथा बिम्बप्रतिबिम्बयोर्न भेदः, तथा शब्दार्थयोरभेदाद् ब्रह्मवेदयोरपि न भेद इति ब्रह्मानुकारत्वोपचारो वेदे इति तदाशयः । प्रतिच्छन्दकत्वमपि ब्रह्मज्ञापकत्वाद् वेदे उपचरितमेव । यद्वा तस्येति पदं प्राप्त्युपायपदेनैवान्वेति, न त्वनुकारपदेन । तथा च न ब्रह्मणोऽनुकारत्वं वेदानाम्; किन्तु साक्षात्कृतधर्मर्षिदृष्ट-मन्त्रानुकारत्वमेव ।

अत एव हर्युपज्ञटीकायाम् 'अनुकार' इति प्रतीकमादायोक्तम्—यां सूक्ष्मां नित्या-मतीन्द्रियां वाचमृषयः साक्षात्कृतधर्माणो मन्त्रदृशः पश्यन्ति, तामसाक्षात्कृतधर्मभ्योऽपरेभ्यः प्रवेदयिष्यमाणा बिल्मं समामनन्ति स्वप्नवृत्तमिव दृष्टश्रुतानुभूतमाचिख्यासन्त इत्येष पुराकल्पः ।

आह खल्वपि—"साक्षात्कृतधर्माणो ऋषयो बभूवुस्ते परेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽपरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च । बिल्मं भिल्मं भासनं वा" । अत्र बिल्मपदेन स्वप्नवृत्तवत्प्रतिभातं मन्त्ररूपं वस्तु उच्यते । तथैवाग्रे—'बिल्मं भिल्मं भासनं वा' इति वक्ष्यमाणनिरुक्तवाक्यात् । पुराकल्पपदेन च पूर्वसर्गवृत्तप्रतिपादकं वचनम् ।

स्वप्नवृत्तमिवेति दृष्टान्तस्यायमभिसन्धिः—यथा स्वप्ने रूपरसादय इन्द्रियव्यापारेण विनैवानुभूयन्ते, इन्द्रियाणां चक्षुरादीनां तदानीं चेतसि प्रविलयात् । न च ते बहिस्तत्त्वाः । दृष्टश्रुतानुभवजनितवासनाविष्टस्वान्तःपरिणाममात्ररूपत्वात् तेषाम् । न च ते बाह्यरूपादिवद् अन्तरिन्द्रियव्यतिरेकेण स्वातन्त्र्येणाख्यातुं शक्यन्ते, किन्तु अन्तरिन्द्रियमेव तदा बाह्यरूपरसादिरूपेण कथ्यत इत्यतः स्वाप्नरूपादयो यथा बाह्यरूपादिप्रतिच्छन्दकाः, तथा वेदोऽप्ययं साक्षात्कृतधर्मर्षिदृष्ट-मन्त्रप्रतिच्छन्दक इवेति । दृष्टश्रुतानुभूतमाचिख्यासन्ते इत्यस्य दर्शनश्रवणाभ्यामनुभूतं वेदार्थमाख्यातुमिच्छन्त इत्यर्थः । उपदेशाय ग्लायन्त इत्यस्य स्वयं विदितं तादृगर्थं कथं साक्षादुपदेश्याम इति खिद्यमाना इत्यर्थः । उपदेशार्थः खेद इति तादर्थ्ये चतुर्थी । तस्य वेदो महर्षिभिरेकोऽप्यनेकवर्त्मेवेति ।

एकोऽयं वेदाख्यो दर्शनात्मनि स्थितो दृश्योऽर्थः, स महर्षिभिर्भेदेनाभेदस्य प्रतिपादयितुमशक्यत्वादभिव्यक्तिनिमित्ताल्लब्धक्रमे वागात्मरूपे प्रापित एकत्वानतिक्रमेण संहितापदक्रमभागेन प्रविभक्तमार्गोऽध्ययननिमित्तमध्येतॄणां चरणसमाख्यां व्यवस्थापयद्भिः समाम्नातः।

अपर आह—यथा वाग् देशभेदेन भिन्ना सत्यपि स्वरूपभेदे एकाभिधेयनिबन्धनत्वमव्यतिक्रान्ता। सैव च देशादिभेदप्रकल्पनव्यवस्थाहेतुः। एवं चरणभेदेऽप्येकार्थनिबन्धनत्वमव्यतिक्रान्तानि श्रुतिवाक्यानि। स्वरूपभेद एव चरणभेदप्रकल्पनव्यवस्थाहेतुरिति।

अपरे मन्यन्ते—यथाष्टाङ्ग आयुर्वेदः पुराकल्प एक एव आसीत् , स एव हि कलौ शक्तिवैकल्यान्नृणां प्रविभक्ताङ्गो दृश्यते। तथायमप्यपरिमाणमार्गशक्तिभेदो वेदो ब्रह्मराशिरिति ॥ ५ ॥

---

अयं भावः—एकोऽयं वेदाख्य ऋषीणां मन्त्रदृशामलौकिके दर्शने विषयत्वेन स्थितः स्फोटात्मा पदार्थः। स च भेदरहितस्य भेदेन प्रतिपादयितुमशक्यत्वेनाभिव्यक्तिनिमित्ताद् ध्वनेर्लब्धक्रमे समारोपितप्रविभागे वागात्मरूपे महर्षिभिः प्रापितः, वस्तुभूतस्वीयैकत्वानतिक्रमेण समारोपितेन संहितापदक्रमविभागेन प्रविभक्तमार्गः, अध्येतॄणामध्ययननिमित्तां चरमसमाख्यां व्यवस्थापयद्भिर्महर्षिभिः समाम्नातः।

एतदुक्तं भवति—यथा गौरित्येकपदपरिच्छेदिन्यामेकस्यां बुद्धौ पूर्वापरीभूतानेकवर्णाकारायामपि नानेकत्वं दृश्यस्य, एवं मन्त्रदृशामृषीणां वेदराशिपरिच्छेदिन्यामेकस्यां बुद्धौ नानेकत्वं दृश्यस्येति। छन्दोगादिरूपा चरणसमाख्या च छन्दोऽध्ययनादिनिमित्ता भवति। तथा च व्यवह्रियते—'अन्यां पृच्छ छन्दोग' इति। किञ्च, चरणसमाख्याऽप्यध्ययनस्य निमित्तं भवति। तथा हि—सति चरणरूपेण वेदप्रविभागेऽस्माकमियं शाखाऽस्माकमियं शाखेति पक्षपातादभिनिवेशेनाधीयत इति रीत्याऽध्ययननिमित्तं चरणसमाख्या। तदित्थं नित्यातीन्द्रियसूक्ष्मसंहृतक्रमस्फोटात्मकवाग्रूपस्य वेदस्यैकत्वम्, अभिव्यक्तिनिमित्तात् क्रमलाभे संहितापदक्रमविभागेन चरणसमाख्या च प्रविभक्तमार्गत्वेन नानात्वम्। तथा चैकत्वं ध्वन्यादिरूपाभिव्यक्तिनिमित्तेनारोपितञ्च नानात्वमित्यायातम्।

अन्यस्तु वेदस्यैकत्वं प्रविभागञ्चान्यथा प्रतिपादयति। तथा हि—यथा स्वरूपभेदे सत्येव देशभेदेनापि भिन्ना वाग् एकाभिधेयबोधे निबन्धनत्वमव्यतिक्रान्ता। स्वरूपतो भिन्ना वागेव च देशादिभेदप्रकल्पनव्यवस्थाहेतुः। वाग्भेदेनैव हि लोके देशो विभज्यते। प्रत्यक्षो हि पञ्चालानां वङ्गानाञ्च भाषाभेदः। एवमन्येषामपि। तथा चरणभेदेऽप्येकार्थनिबन्धनत्वमव्यतिक्रान्तानि श्रुतिवाक्यानि। यस्मात् तैरेव चरणैरेकं कर्म यागाख्यं कर्मराशिर्वैकः क्रियते। अनुक्तमपि यत्किञ्चिदेकत्र तदपरप्रामाण्यादपरत्र क्रियते। यद्वा ज्योतिरान्तरमेकमेव प्रतिपाद्यं सर्वासु

**भेदानां बहुमार्गत्वं कर्मण्येकत्र चाङ्गता ।**
**शब्दानां यतशक्तित्वं तस्य शाखासु दृश्यते ।। ६ ।।**

---

तत्र चतुर्धा भेदे सति एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम् , पञ्चदशधेत्येके, नवधाथर्वणो वेद इत्येवं प्रतिभागं बहवो मार्गाः । कर्मण्येकत्र चाङ्गता । सर्वशाखाप्रत्ययमेकं कर्म ।

---

शाखासूपनिषत्सु । तथा चैतदायातम्—वेदस्याभिधेयैक्येनैकत्वम् , स्वरूपभेदेन तत्प्रयुक्तचरणभेदेन च भेद इति ।

अपरे तु वेदस्यैकत्वं प्रविभागञ्चान्यथैवोपपादयन्ति । तथा हि—यथा पुराकल्पेऽष्टाङ्ग आयुर्वेद एक एवासीत् । आयुर्वेदस्याष्टौ अङ्गानि च—शल्यचिकित्सा, शालाक्यम्, कायचिकित्सा, भूतचिकित्सा, कौमारभृत्यम्, अगदतन्त्रम्, बाजीकरणतन्त्रम्, रसायनतन्त्रमिति । एवमष्टस्वङ्गेषु सत्स्वपि चिकित्सैवासीत् , आरोग्यमुद्दिश्य प्रवृत्तत्वात् । स एवायुर्वेदः साम्प्रतं कलौ नृणां शक्तिवैकल्यात् प्रविभक्ताङ्गो दृश्यते । एकेनैकेनैवाङ्गेन चिकित्सन्ते वैद्याः, अशक्त्या सर्वाङ्गापरिज्ञानात् । तथायमप्यपरिमाणमार्गशक्तिभेदो वेदो मन्त्रराशिरिति ।

तथा चेदमवसितम्—बहूनां कर्ममार्गाणामुपासनामार्गाणाञ्च तत्तत्फलानुकूलशक्तिमतां ततच्छाखासु विहितानां शक्तिभेदा अस्मिन् वेदाख्ये ब्रह्मणि विद्यन्ते । ते च सर्वेऽपि चरणभेदा मार्गभेदास्तच्छक्तिभेदाश्च पुराकल्पे शक्तिसाकल्याद् ज्ञेया अनुष्ठेयाश्चैकेनाप्यासन् ।

इदानीं तु कलौ नृणां शक्तिवैकल्यात् कश्चनैव चरणभेदो मार्गभेदः शक्तिभेदश्च ज्ञातुमनुष्ठातुञ्च शक्यत इति । तथा चाङ्गी वेद एकः, अङ्गानि तु तस्यापरिमितानीति स्वरूपतो वेदस्यैकत्वम्, अङ्गकृतं तु बहुत्वमिति ।

समासार्थस्तु प्रागुक्तया पदानां योजनया ज्ञेयः ।। ५ ।।

इदानीं वेदस्य स्वरूपकथनेन माहात्म्यमाह—**भेदानामिति ।**

तस्य वेदस्य भेदानां चतुर्णाम् ऋग्यजुःसामाथर्वणां शाखाबाहुल्येन बहुमार्गत्वम्, सर्वेषां मार्गाणां चैकत्र कर्मणि अङ्गता, शाखासु पठितानां तत्तच्छब्दानामर्थप्रत्यायनेऽभ्युदये च यतशक्तित्वम्, नियतकार्योत्पादकत्वेन नियतशक्तिकत्वञ्च दृश्यत इति योजना ।

अयं भावः—वेदस्य प्रथमं चत्वारो भेदा ऋग्यजुःसामाथर्वाख्याः । तत एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, पञ्चदशधेत्येके, नवधाऽऽथर्वणो वेद इत्येवं प्रतिभागं बहवो मार्गाः । किन्तु तेषां सर्वेषामपि मार्गाणामेकत्र कर्मणि अङ्गता । यतः सर्वशाखाप्रत्ययमेकमेव कर्म, सर्वाभिः शाखाभिरेकमेव कर्म प्रतीयते निष्पाद्यते च, तस्यां शाखायामनुक्तानामपि कर्माङ्गानां तदन्यशाखोपदिष्टानां तत्र करणात् । व्यवस्थापितं चेदं पूर्वोत्तरमीमांसयोः ।

**स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।**
**तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः ।। ७ ।।**

---

तद्यथा—सर्वभिषक्शाखाप्रत्ययमेकं चिकित्सितम्। शब्दानां यतशक्तित्वम्। तथार्थप्रत्यायने सामर्थ्यात्, तथाभ्युदयहेतुत्वात्। तस्य शाखासु दृश्यत इति। "देव-सुम्नयोर्यजुषि काठके" (पा०७/४/३८) "सिमस्याथर्वणेऽन्त उदात्तः" (फिट्० ४/७९) इत्येवमादि। येषां त्वयं शाखाप्रविभागो विच्छेदेन पुनः पुनर्भवतीत्यागमः, तेषां प्राक् प्रविभागादव्यभिचार एव संहृतक्रमाया वाच इत्येतद्दर्शनम्॥ ६॥

तत्र काश्चिच्छब्दनिबन्धनाः स्मृतयः; काश्चिदशब्दनिबन्धनाः शिष्टेषु प्रसिद्धसमा-चाराः। दृष्टप्रयोजनाश्चिकित्सितादिविषयाः। अदृष्टप्रयोजना भक्ष्याभक्ष्यगम्यागम्यवाच्या-

---

तद्यथा—सर्वभिषक्शाखाप्रत्ययमेकं चिकित्सितम्। सर्वेषां भिषजां शाखाभेदा अष्टावङ्गानि पूर्वोदितानि, तन्निमित्तकमेकं चिकित्सितम्, अङ्गान्तरे विहितायाश्चिकित्साया अङ्गान्तरविहितचिकित्साहेतुकं फलमुद्दिश्य तुल्यतया तुल्यकालं वा भिषग्भिरनुष्ठानात्, एकस्यैवारोग्यस्य सर्वेषामङ्गानां फलत्वात्। शाखासु शब्दानां नियतशक्तिकत्वञ्च नियतकार्यो-त्पादकत्वेन। तथा हि—येन रूपेण येन स्वरेण च युक्तो यः शब्दो यदर्थबोधनाय यस्यां शाखायामुक्तः, स तस्यामेव शाखायां तमर्थमभिधत्ते, न शाखान्तरे। अतोऽर्था-भिधानक्रियानियमेन शब्दस्य शाखासु शक्तिनियमः। येन स्वरेण च युक्त उक्तस्तत्स्वरयुक्त एव तच्छाखासाध्यकर्मफलाभ्युदयहेतुरित्यभ्युदये शक्तिनियमः। तद्यथा—'देवसुम्नयोर्यजुषि काठके' (पा० ७/४/३८) अनेन हि 'देवायन्त' इति 'सुम्नायन्त' इति च कृतात्वं यजुषि कठशाखायामेव स्वार्थे साधु, 'सिमस्याथर्वणेऽन्त उदात्तः' (फिट्० ४/७९) इत्येष स्वरनियमः काठके यजुष्येव आथर्वण एव चाभ्युदयहेतुः।

इदं त्ववधेयम्—वेदानां प्रविभागविषये दर्शनद्वयं वर्तते। तथा हि—केचिदेवं मन्यन्ते—अयं वेदो ब्रह्मणः सकाशाच्छाखादिभेदभिन्न एव विवर्तत इति। तेषां मत उपसंहृतक्रमभेदा वेदरूपा वाग् दुर्लभा। तथा च 'एकोऽप्यनेकवर्त्मेव' इत्युक्तिविरोधः। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति वेदवाच एकत्वोपवर्णनपराऽभियुक्तोक्तिरपि विरुध्येत। येषां तु दर्शनं ब्रह्मणः प्रथमतो वेद एकरूप एव विवर्तते, सोऽध्येतॄणामशक्ते-र्महर्षिभिः प्रविभक्तः। स प्रलयकाले पुनरुपसंहृतभेदो भवति, पुनश्च सर्गादौ ब्रह्मण एकरूपेण विवृत्तस्य कालक्रमेणाध्येतॄणामशक्तौ प्रविभाग इति। तेषां मत एव पञ्चमी षष्ठी च कारिका सूपपन्ना भवति॥६॥

स्मृतीनामपि प्रामाण्यप्रदर्शनाय वेदस्य स्मृतियोनित्वं दर्शयति—**स्मृतयो बहुरूपाश्चेति**।

बहुरूपाः शब्दनिबन्धना अशब्दनिबन्धनाश्च शिष्टसमाचाररूपाः स्मृतयः, स्मरणमूलकत्वाद्

वाच्यविषयास्तुल्ये विषये प्रसक्तविरोधा दृष्टप्रयोजनाभावे विकल्पिन्यः । शिष्टानां तु विप्रतिपत्तौ यत्र दृष्टं प्रयोजनमस्ति, तासामप्रामाण्यम् ।

---

दृष्टादृष्टप्रयोजनाः, तं वेदमेवाश्रित्य मूलत्वेन, वैदिकलिङ्गेभ्यस्तानि दृष्ट्वेत्यर्थः । वेदविद्भिः स्मृतिव्याख्यातृभिर्मीमांसकैर्वा स्मार्तकर्मकर्तृशिष्टप्रामाण्यकल्पनया प्रामाण्येन प्रकल्पिता इति योजना ।

अयं भावः—सन्ति बहुरूपाः स्मृतयः । यथा काश्चिच्छब्दनिबन्धना वेदमूला मनुयाज्ञवल्क्यादिस्मृतयः । काश्चिच्चाशब्दनिबन्धना अनुपलभ्यमानश्रुतिमूलाः शिष्टसमाचाररूपाः । प्रकारान्तरेणापि ता द्विविधाः—दृष्टप्रयोजना अदृष्टप्रयोजनाश्चेति । तत्र दृष्टप्रयोजनाश्चिकित्सास्मृतयश्चरकसुश्रुतादिप्रणीताः, औशनसादीनि नीतिशास्त्राणि अर्थशास्त्राणि च । अदृष्टप्रयोजनास्तु भक्ष्याभक्ष्यगम्यागम्यवाच्यावाच्यविषयाः । यथा—"पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव" इत्यादयो भक्ष्यविधिविषयाः, "मां स भक्षयिताऽमुत्र" इत्यादिनिन्दार्थवादानुमेया निषेधविषयाः "न मांसं भक्षयेत्" इत्यादयः ।

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद् यस्तयोः पुण्यफलं समम् ॥

इत्यादिरूपाश्च प्रत्यक्षाः । "साधारण्यः स्त्रियो गम्याः" इत्युर्वश्यर्जुनसंवादरूपविधिविषयाः, "ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा" इत्यादयः स्वदारेतरगमनप्रतिषेधविषयाः, "दोषा वाच्या गुरोरपि" इत्यादयो गुरुदोषवचनपराः, गुरोर्दोषा न वाच्याश्छात्रैरित्यर्थिकाश्च मन्वापस्तम्बादिप्रसिद्धाः । ता एतास्तुल्ये विषये प्रसक्तविरोधा आद्ययोर्द्वयोरुदाहरणयोर्दृष्टप्रयोजनाभावेन विकल्पिन्यः । अन्त्ये तु उदाहरणे दोषवचननिषेधस्य गुरोः प्रसादेन स्वाध्यायविघ्नप्रागभावपरिरक्षणरूपदृष्टफलस्य सत्त्वेन गुरुदोषवचनावचनयोर्न विकल्पः; किन्तु गुरुदोषवचनविरोधी प्रयत्न एव निषेधानुरोधेन कर्तव्यकोटौ परिशिष्यते ।

तथा चापस्तम्बधर्मसूत्रे—'गुरोर्दोषान्न सदसि वदेत्; किन्तु रहसि गुरुं प्रत्येव वदेत्, यदि तथा कृतेऽपि न निवर्तेत न शृणुयाद् वा गुर्वन्तरं गच्छेत्' इत्याद्यर्थकं वाक्यम् । तुल्ये विषये विरोधप्रसक्तौ दृष्टप्रयोजनसत्त्वेऽपि यत्र शिष्टानां विप्रतिपत्तिः=विरुद्धा प्रतिपत्तिः=अधर्म्यत्वप्रतिपत्तिः, तत्र दृष्टप्रयोजनानां स्मृतीनामप्रामाण्यम् । यथा—'न सुरां पिबेत्' इति धर्मस्मृतिः । 'औषधार्थे सुरां पिबेत्' इति चरकादिस्मृतिः । तत्र दृष्टप्रयोजनानां चरकादिस्मृतीनामप्रामाण्यम् । अंतः प्राणत्राणार्थे सुरायामौषधरूपेण पीतायां कृच्छ्रचान्द्रायणादिकमशक्तौ तत्प्रत्याम्नायो वा प्रायश्चित्तं विधेयमिति व्यवस्था । सुरापानादिरूपायाश्चिकित्साया रोगनिवृत्तिर्दृष्टं प्रयोजनम् । 'वैणवीं धारयेद् यष्टिम्' इत्यादिस्मृत्युक्तवाक्यविहितयष्टिधारणादीनामपि स्खलत्प्रतिष्ठानादिकमेव दृष्टं प्रयोजनम् । तथा च यद् दृष्टप्रयोजनप्रतिद्वन्द्विरूपेण विधीयते, तद् भक्ष्यादिकमदृष्टार्थमेव । यत्तु न तथा तद् दृष्टार्थमेव, यथा भैषज्यविषयसुरापानादिकम् । एवं धर्मशास्त्रविरोधे औशनसादिनीतिशास्त्राणामर्थशास्त्राणाञ्चाप्रामाण्यम् ।

**तस्यार्थवादरूपाणि निश्रिताः स्वविकल्पजाः ।**
**एकत्विनां द्वैतिनां च प्रवादा बहुधा मताः ।। ८ ।।**

---

अविप्रतिपत्तौ तु दृष्टप्रयोजनसम्भवेऽपि विकल्प एव। तद्यथा मण्डूकवधे प्रायश्चित्तस्य।

तमेवाश्रित्य लिङ्गेभ्य इति। श्रुत्याश्रितानि लिङ्गानि श्रुतिविहितानां स्मृतिविहितानां च कर्मणां कर्तृसामान्यं प्रवेदयन्ते। येषां हि श्रुतिविहितैर्दृष्टप्रयोजनैः कर्मभिरधिकारस्ते श्रुत्यैव स्मृतिविहितानामपि कर्मणां कर्तृत्वेनाख्यायन्ते। तद्यथा—"यजमानोऽतिथय आगताय महाजं वा महोक्षं पचेत्" इति। क्वचिच्च विषये लिङ्गानि दृष्टानि स्थालीपुलाकवच्छ्रुत्यर्थाविरोधिन्याः स्मृतेः प्रामाण्यकल्पनायालम् ॥ ७ ॥

अर्थवादानर्थवादप्रकाराणि श्रुतिवाक्यानि पौरुषेयाः प्रवादाः प्रायेणानुपतन्तो दृश्यन्ते।

---

यत्र तु तुल्ये विषये विरोधप्रसक्तौ दृष्टप्रयोजनसत्त्वेऽपि न शिष्टानां विप्रतिपत्तिः, यथा—मण्डूकवधे क्वचित् क्षीरभोजनं प्रायश्चित्तम्, क्वचित्तु आसक्तघृतं दधि प्रायश्चित्तं विहितम्। अत्र यद्यपि द्वयोरपि प्रायश्चित्तयोः प्राणरूपं दृष्टं प्रयोजनमस्ति, किन्त्वन्यतरस्मिन् शिष्टानां विप्रतिपत्त्यभावेन विकल्प एव।

तमेवाश्रित्य लिङ्गेभ्य इति।

अयं भावः—यद्यपि 'यजमानोऽतिथये आगताय महोक्षं वा महाजं वा पचेत्' इति स्मर्यते। न चात्र कश्चन पचेः कर्तृविशेषः स्मर्यत इति कर्तृविशेषाकाङ्क्षाया अपरिसमाप्तेरप्रामाण्यमस्याः स्मृतेः प्राप्तम्, तथापि—"तत्र राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत् तदह मानुषं हविर्देवानामेवमस्मा एतदातिथ्यं करोति" (श० ब्रा० ३/४/१/२) इति श्रूयते। अत्र श्रुतौ—'महोक्षं वा महाजं वा पचेत्' इति प्रागुक्तस्मृतिदृष्टशब्दार्थसाम्यरूपं लिङ्गं श्रौतस्य स्मार्तस्य चैतत्कर्मणः कर्त्रैक्यं प्रवेदयते, अतः श्रौते तत्कर्मवत् स्मार्तेऽप्येतस्मिन्ननिर्दिष्टकर्तृविशेषे कर्मणि वर्णत्रयमेव कर्तृ इत्यायातम्। एवं येषां श्रुतिविहितैर्दृष्टादृष्टप्रयोजनैः कर्मभिरधिकारस्त्रैवर्णिकानां ते श्रुत्यैव श्रुत्याश्रिततत्तल्लिङ्गद्वारा स्मृतिविहितानामपि कर्मणां कर्तृत्वेनाख्यायन्ते। यासाञ्चाष्टकादिस्मृतीनां श्रुत्याश्रितं लिङ्गं नोपलभ्यते, तासामपि श्रुत्याश्रितलिङ्गप्रवेदितकर्तृसामान्यानुज्ञातप्रामाण्यकस्मृत्यन्तरसमभिव्याहारपाठात् स्थालीपुलाकन्यायेन श्रुत्यर्थाविरोधे सति प्रामाण्यकल्पना वेदविद्भिः कृता। "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इत्यादिश्रुत्यर्थविरोधे तु "औदुम्बरी सर्वा वेष्टयितव्या" इत्यादिस्मृतीनां न प्रामाण्यकल्पना। अत्र कारिकायां प्रकल्पनमनुमानरूपम्। प्रकल्पिता इत्यस्यादौ प्रमाणत्वेनेति शेषो बोध्यः। एवं सर्वासां स्मृतीनां वेदमूलकत्वेन प्रामाण्यं दर्शितम् ॥ ७ ॥

इदानीं दर्शनभेदा अपि वेदादेवेत्याह—**तस्यार्थवादरूपाणीति**। अत्र निश्चिताः, निश्चित्य, निश्रिता इति पाठत्रयं वर्तते। तत्रेदमवधेयम्—निश्चित्य इति पाठो निश्चिता इत्यस्य

पुरुषबुद्धिविकल्पाच्च प्रवादभेदाः सम्भवन्ति। तद्यथा—"असद्वा इदमग्र आसीत्" इत्यग्निचयनस्थानोपस्तुत्यर्थोऽर्थवादः, तद्रूपपरिकल्पननिश्रितश्चायमेकान्तत्वप्रवादः—"असदसतो निरीहान्निरीहमपदादपदमनुपाख्यादनुपाख्येयमवस्तुकादवस्तुकं जायते" इति। अपूर्वापराभ्यां तु सत्त्वासत्त्वाभ्यामेक आत्मा विभज्यते।

---

स्थाने केनचित् कल्पित इत्यप्रामाणिकः। निश्रिता इति पाठस्तु अनन्वितार्थकत्वेन प्रामाणिक इति निश्रिता इति पाठ एव युक्तः।

तस्य वेदस्य, अर्थवादरूपाणि अर्थवादान् अर्थवादसदृशवाक्यानि च, निश्रिता नितरामाश्रिताः, एकत्विनां द्वैतिनाञ्च स्वविकल्पजाः स्वबुद्धिविकल्पजन्याः, बहुधा बहुप्रकाराः, प्रवादाः प्रभिन्ना वादा मता इति योजना।

अयं भावः—अर्थवादान् अर्थवादसदृशानि च श्रुतिवाक्यानि मूलत्वेन प्रकल्प्य तदनुसारिणः पौरुषेयाः प्रवादाः प्रायेण दृश्यन्ते। अर्थार्थः प्रयोजनार्थो वादोऽर्थवादः, तत्सदृशञ्च वाक्यमर्थवादरूपम्। अर्थवादसादृश्यञ्च प्रयोजनाभावेऽप्यारोपितधर्मैरुपवर्णनम्। कारिकायामर्थवादरूपाणीत्यत्र अर्थवादाँश्च अर्थवादरूपाणि चेत्येकशेषः। यथा 'गुणो यङ्लुकोः' इत्यत्र यङ्लुक्पदे यङ्यङ्लुकोरेकशेषः, अत एव यङि यङ्लुकि च गुण इत्यर्थः।

ननु यदि श्रौतपदवाक्याश्रितास्ते तदा कथं प्रवादा इत्युच्यन्ते, वेदमूलकत्वेन पौरुषेयत्वाभावादित्याशङ्क्याह—**स्वविकल्पजा** इति।

अयं भावः—सर्वेऽपि प्रवादाः स्वस्वविकल्पसमुत्थाः, विकल्पानां तु वेदवाक्यानि मूलानि, न च तेषां वेदवाक्यानां सोऽर्थः। ते तु प्रवक्तारः स्वस्वविकल्पानुसारेण तेषां वाक्यानां तत्तदर्थान् परिकल्प्य दर्शनभेदान् कल्पितवन्त इति। तद्यथा—"असद्वा इदमग्र आसीत्" (श० ब्रा० ६/१/१/१) इत्यग्निचयनस्थानोपस्तुत्यर्थवादः। अस्यार्थः—इदमग्निचयनस्थानम्, अग्ने चितेः प्राक्, असद्वै अशोभनमेवासीत्, 'ततो वै सदजायत' इति चितेरनन्तरमेव सत् शोभनमजायत इति। एतस्य त्वर्थवादस्यान्यथाऽर्थवत्तां कल्पयित्वाऽयं ब्रह्मण एकान्तत्वप्रसादो ब्रह्मणोऽसत्त्वनिरीहत्वानुपाख्यत्वादिधर्मनियमप्रवादः। तदुक्तम्—"असदसतो निरीहान्निरीहमपदादपदमनुपाख्यादनुपाख्येयमवस्तुकादवस्तुकं जायते" इति।

अत्र सर्वत्र प्रथमान्तपदेन कार्यं जगत्, पञ्चम्यन्तपदेन च तत्कारणं ब्रह्माभिप्रेतम्। कार्यस्य च कारणसधर्मता जगति दृष्टाऽत्रोच्यते। अत्र ब्रह्मणः सत्तानावेशनादसत इति। पद्यते प्राप्यते आश्रीयते गुणैरिति पदम्। गुणानाश्रयणादाह—अपदादिति। शब्दप्रवृत्तिनिमित्तधर्माभावाद् अनुपाख्यादिति। वसति यस्मिन् कस्मिंश्चिदाधारे इति वस्तु। ब्रह्मणोऽनाश्रितत्वादाह—अवस्तुकादिति। एतच्च सर्वमसत्त्वनिरीहत्वापदत्वादिकमद्वये ब्रह्मणि कल्पितमेव। यतोऽपूर्वापराभ्यां पूर्वत्वापरत्वरहिताभ्यां युगपद् व्यवस्थिताभ्यामिति यावत्। सत्त्वासत्त्वाभ्यामेक आत्मा ब्रह्माख्यो विकल्प्यते सदसद्रूपेण प्रतीयते। अतस्तदेव ब्रह्म असत्त्वरूपं सत्तानाविष्टरूपम् अनतिक्रामद् गवादिरूपेण प्रत्यवभासमानं सद्व्यवहारनिबन्धनम्। यदि ब्रह्मणः सर्गावधिकपूर्वापरकोट्योरसत्त्वं

तत्राद्वये कथं हि स्यात् सोपाख्यनिरुपाख्यता इति। तथा—"नासदासीन्नो सदासीत्", "तम एव खल्विदमग्र आसीत्" इति।

इदं फेनो न कश्चिद् वा बुद्‌बुदो वा न कश्चन।
मायेयं बत दुष्पारा विपश्चिदिति पश्यति॥
अन्धो मणिमविध्यत् तमनङ्गुलिरावयत्।
तमग्रीवः प्रत्यमुञ्चत् तमजिह्वोऽभ्यपूजयत्॥

---

मध्ये च सत्त्वं स्यात्, तदा सत्त्वतः सद्व्यवहारः स्यात्। न त्वेवमस्ति, किन्तु सत्तानाविष्टस्य ब्रह्मणो युगपदेव सत्त्वासत्त्वे उक्तरीत्या विकल्प्येते इति।

एवञ्चाद्वये ब्रह्मणि सोपाख्यत्ववन्निरुपाख्यत्वमपि कथं स्यात्? निरुपाख्यत्वस्य प्रतियोगिसापेक्षत्वेन प्रतियोग्यभावेऽभावात्। एवञ्च 'असदसत' इत्यादिकः पूर्वोक्तब्राह्मणमूलकः स्वविकल्पजः प्रवाद इति स्थितम्। एवम् "नासदासीन्नो सदासीत् तम एव खल्विदमग्र आसीत्" (मै०उ०५. २) इत्ययमपि चयनस्तुत्यर्थ एवार्थवादः।

अस्यार्थः—इदमग्निचयनस्थानमुत्पत्तेः प्राग् असद् नासीत् , असतः सत्त्वापादनायोगात्। अस्तीति व्यपदेशानर्हत्वेन सदपि नासीद् विद्यमानमपि, किन्तु इदमग्रे स्वोत्पत्तेः प्राक् तम एव अज्ञातत्वेनाज्ञानमेवासीत्। इत्थं चयनस्थानस्य स्वोत्पत्तेः प्रागपि सत्त्वप्रतिपादनेनात्मवन्नित्यत्वप्रदर्शनेन स्तुतिः क्रियत इति।

अस्य चार्थवादस्यान्यथाऽर्थं परिकल्प्य 'इदं फेन' इत्यारभ्य 'तमजिह्वोऽभ्यपूजयत्' इत्यन्तः षष्टितन्त्रग्रन्थः प्रवृत्तः।

इदं फेनो न कश्चिद् वा बुद्‌बुदो वा न कश्चन।
मायेयं बत दुष्पारा विपश्चिदिति पश्यति॥
अन्धो मणिमविध्यत् तमनङ्गुलिरावयत्।
तमग्रीवः प्रत्यमुञ्चत् तमजिह्वोऽभ्यपूजयत्॥

अस्यार्थः—इदं जगत् फेनो वा फेन इव, इवार्थे वाशब्दः। न कश्चिद् प्रकृतेरतिरिक्तः पदार्थः। बुद्‌बुदो वा बुद्‌बुद इव न कश्चन प्रकृतेरतिरिक्तः पदार्थः। यथा फेनबुद्‌बुदौ न जलादति-रिक्तौ, तथेदं जगदपि न प्रकृतेरतिरिक्तं वस्तुभूतमिति भावः। बतेति खेदे। इयं प्रकृत्यतिरिक्त-कार्यदृष्टिभोगप्रदत्वेनापवर्गविरोधितया दुष्पारा दुरन्ता माया मिथ्यादृष्टिहेतुभूतेति विपश्चित् पश्यति। मायात्वोपपत्तिश्च दृश्यमानतयाऽस्ति, परमार्थतो नास्तीति कृत्वा अन्धस्य मणिव्यधनमिव, अनङ्गुलेस्तत्र सूत्रप्रवेशनमिव, अग्रीवस्य तत्प्रतिमोकः = धारणम् इव अजिह्वस्य तन्मणिधारयितृपुरुषस्तुतिरिव अविक्रियात् परमेश्वराज्जगत्सर्ग इति।

किञ्चात्र मणिव्यधनं चक्षुष्मतश्चक्षुरादयस्तेऽन्धादिष्वसत्या इति दृष्टान्ते दृष्ट्वा अन्धत्वादिभिः सत्त्वरहितं व्यधनादिभिश्चासत्त्वरहितं प्रधानमिति सांख्यैः प्रतिपादितम्। एष च तुच्छत्वकल्पनाद्वयरूपः प्रवादः प्रागुक्तचयनस्तुत्यर्थार्थवादस्यान्यथाऽर्थकल्पनामूलकः।

तथा "आपो वा इदमग्र आसीत्" इति दर्शपूर्णमासविषयोऽर्थवादः ।

ततश्चायं प्रवादः–"प्रज्ञानरूपपाकश्चासंप्रख्यानरूपपाकश्चापां प्राणो रसः । खल्वावर्ती चानावर्ती च" इति । तदेवं तदेकरूपं सर्वप्रबोधरूपं सर्वप्रभेदरूपतायां समवतिष्ठते ।

द्वैतिनः खल्वप्याहुः—"नित्याश्चानित्याश्च मात्रायोनयः, यासु रूपि चारूपि च, सूक्ष्मं च स्थूलं चेदं भुवनं विषक्तम्" इति । तथा—

उभौ सखायौ सयुजौ सुपर्णौ समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ।।

---

तथा—"आपो वा इदमग्र आसीत्" इति दर्शपूर्णमासविषयोऽर्थवादः ।

अस्यार्थः—इदं पार्थिवं जगत् सृष्टेः प्राग् जलमेवासीत् । ततश्च समग्रस्यास्य पार्थिवस्य ब्रह्माण्डस्य जलोपादानकत्वोपवर्णनेन जलरूपपयोदधिप्रधानद्रव्यसाध्यदर्शपूर्णमासकर्मणां स्तुतिः क्रियते ।

एतस्माच्चार्थवादादन्यार्थकल्पनयाऽयं प्रवादः प्रसृतः—"प्रज्ञानरूपपाकश्चासंप्रख्यानरूपपाकश्चापां प्राणो रसः । खल्वावर्ती चानावर्ती च" इति ।

अस्यार्थः—तासामपां पच्यमानानामेकोंऽशश्चैतन्यरूपेण प्रज्ञानरूपः पाकोऽस्येति प्रज्ञानरूपपाकः । योऽयमपरोंऽशः स पृथिव्यादिरूपेण असंप्रख्यानरूपः, अचैतन्यरूपः पाकोऽस्येति असंप्रख्यानरूपपाक इति । किञ्चापामेव पच्यमानानां प्राणो रसो बलिष्ठः सार इति । तदेवं चिदचिदात्मकस्य प्राणिनो देहस्याप्यत्वमुक्तम् । स खलु प्राणो जीवनकाले आवर्ती शरीरान्तरावर्त्तनशीलः, मृत्युकाले चानावर्तीति स्वभावद्वयं प्राणस्य दर्शितम् ।

वस्तुतस्तु तदेकरूपं ब्रह्मैव सर्वप्रबोधरूपं सर्वप्रभेदरूपतायां गवाद्याकारैः प्रत्यवभासते, न तु जलस्य प्रज्ञानरूपपरिपाकः ।

इममेवार्थवादमाश्रित्य द्वैतिनः खल्वप्याहुः—"नित्याश्चानित्याश्च मात्रायोनयः, यासु रूपि चारूपि च सूक्ष्मं च स्थूलं चेदं भुवनं विषक्तम्" इति ।

अस्यार्थः—मात्राणां विषयाणां योनयो नित्याः परमाणुरूपाः, अनित्या द्व्यणुकादिरूपाश्च भवन्ति । यासु रूपि तेजोजलभूमिरूपम्, अरूपि वायुरूपं वाय्वाकाशरूपं वा भुवनं विषक्तं विशेषेण स्थितमिति । तथा—

उभौ सखायौ सयुजौ सुपर्णौ समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ।।

इदमर्थवादरूपम् = अर्थवादस्येव रूपमस्येति व्युत्पत्त्याऽर्थवादसदृशं वाक्यम्, स्तुतिरूपप्रयोजनाभावात् । यद्यपि "द्वा सुपर्णा सयुजा सखाया" इति । ऋङ्मन्त्रे पाठभेदः, तथापि तदर्थानुसार्ययं श्लोकः ।

अस्यार्थः—उभौ सुपर्णौ जीवेश्वररूपौ चेतनत्वेन सखायौ सदृशौ सयुजौ संयुक्तौ सहवासिनौ समानमेकं वृक्षं शरीरं कालेन व्रश्चनाद् वृक्षः शरीरम्, परिषस्वजाते आलिङ्ग्य स्थितौ । तयोरन्य एको जीवः, स्वादु पिप्पलं कर्मफलम् । इदञ्चास्वादुनः पापफलस्याप्युपलक्षणम् । अत्ति = भुङ्क्ते । अन्य ईश्वरोऽनश्नन् = अभुञ्जान एव कर्मफलमभिचाकशीति अभितो द्योतते, स्वप्रकाशज्ञानरूपत्वादिति ।

**सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा ।**
**युक्ता प्रणवरूपेण सर्ववादाविरोधिना ।।९।।**

---

"इन्द्रियग्रामश्चान्तर्यामी च बुद्धिश्च क्षेत्रज्ञश्च" इति ।

अथापरे—"विवृत्ताविवृत्तं बहुधानकं चैतन्यम्" इत्याहुः ।

तदेजति तन्नैजति तद्दूरे तद्वदन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ इति ॥८॥

यतश्चैते सर्वविकल्पातीत एकस्मिन्नर्थे सर्वशक्तियोगाद् द्रष्टृणां दर्शनविकल्पाः, तत एव खलु—

---

हरिवृषभेण तु—'सयुजौ इत्यस्य समानयोगौ बुद्धीन्द्रियरूपौ, येनैवेन्द्रियं युज्यते विषयेण बुद्धिश्च तेनैवेति, पुरुषान्तर्यामिणौ वा, युजेः सम्पदादिपाठाद् भावे क्विप्। 'सखायौ' इति समानख्यानौ यथेन्द्रियबुद्धी अध्यवस्यतो विषयं तथा पुरुषान्तर्यामिणाविति । यतो विषयाकारेणेन्द्रियं परिणमते, इन्द्रियवृत्त्या बुद्धिस्तत्प्रतिबिम्बं पुरुष उपैतीति समानख्यातियोगो बुद्धीन्द्रिययोः पुरुषान्तर्यामिणोश्च ।

हरिणा तु 'उभौ' इत्यस्य इन्द्रियग्रामश्चान्तर्यामी चेत्येकोऽर्थः, बुद्धिश्च क्षेत्रज्ञश्चेति तु द्वितीयोऽर्थ इत्युक्तम्। अत्र क्षेत्रज्ञः सांख्यीयः पुरुषः ।

अथापरे विवृत्ताविवृत्तभेदेन बहुधानकं बहुप्रकारकं चैतन्यमित्याहुः । धानाशब्दोऽत्र बीजपरः । बह्व्यो धानाः कार्याणां बीजभूताः शक्तयोऽत्र सन्तीति बहुधानकं चैतन्यम्। तदेजति तन्नैजति । तत्र विवृत्तमेजति, अविवृत्तं नैजति, विवृत्तं दूरे, अविवृत्तं स्वात्मभूतत्वादन्तिके, विवृत्तं सर्वस्यान्तः, उपादानत्वात्। अविवृत्तं बाह्यतः, असङ्गत्वात्। पूर्वत्रोदाहरणे 'उभौ सखायौ' इत्यत्र तु विवृत्तं बुद्धीन्द्रियशब्दाभ्यामुक्तम्। अविवृत्तं क्षेत्रज्ञान्तर्यामिशब्दाभ्यामिति ॥८॥

यतो य एते दर्शनभेदरूपा विकल्पा भिन्नरूपानुपातिनोऽसत्याश्च सर्वविकल्पातीते एकस्मिन्नर्थे ब्रह्मणि सर्वशक्तियोगात् कल्पिताः, अतोऽभिन्नत्वादाह—**सत्या इति ।**

अस्यार्थः—सत्या विशुद्धिर्विशुद्धा, धर्मधर्मिणोरभेदात्। उपाधिपरिच्छेदरूपाशुद्धिशून्या, विद्यैव ज्ञानस्वरूपं ब्रह्मैव, एकपदागमा एकं पदं प्रणवरूपमागमो ज्ञानसाधनं यस्याः सा। तदुक्तं वेदे—"ॐमित्येतदक्षरमुद्गीथमुपासीत्" इति । प्रणवस्य तद्वाचकत्वात् तदालम्बनत्वाच्च । तत्र = वेदे उक्ताः ।

अन्ये तु दर्शनविकल्पा न वेदतात्पर्यविषयभूता भिन्नत्वे सति विरोधितया परस्पराहतत्वादिति भावः । एकपदागमा इत्यत्र हेतुमाह—युक्ता प्रणवरूपेणेति । योगश्चात्र वाच्यवाचकभावरूपः । ब्रह्मस्वरूपभूताया विद्यायाः सत्यत्वे हेतुमाह—सर्ववादाविरोधिनेति ।

अयं भावः—अद्वैतिभिः पारमार्थिकसत्त्वं ब्रह्मण एव स्वीक्रियते, व्यावहारिकसत्त्वं तु सर्ववादगोचराणां पदार्थानामिति । अद्वैतवादस्य सर्ववादाविरोधित्वमिति शब्दानुसारिणी व्याख्या ।

इहैवैकस्मिन् सर्वरूपे ब्रह्मणि यः परिकल्पः, स विरुद्धरूपाभिमतेभ्यः परिकल्पान्तरेभ्यो न भिद्यते।

अपि खलु ब्रह्मविद आहुः—''प्रदेशोऽपि ब्रह्मणः सार्वरूप्यमनतिक्रान्तश्चाविकल्पश्च'' इति।

तथा ''सर्वं दर्शनमन्यूनमविकल्पं सविकल्पमिवायमत्रान्तरः पुरुषोऽभिमन्यते'' इति। अत्र प्रणवः सर्वाभ्यनुज्ञाविषयः सर्वश्रुतिरूपः प्रकृतिसर्वनाम सर्वदर्शनोदय-

---

हरिणा तु स्वाशय एवमुद्घोषितः—'सर्ववादाविरोधिना' इति च तत्सम्मतः पाठः। तत्र पूर्वार्धो व्याख्यात इति तस्यार्थो यथाशास्त्रं प्रतीयमानः पूर्व एव। उत्तरार्धव्याख्यापरो ग्रन्थस्तु—इहैवैकस्मिन्............इत्यादि।

अयं भावः—ब्रह्मणो वस्तुगत्या एकत्वम्, सर्वरूपत्वन्तु सर्वेषां तत्राध्यासात्, अतस्तत्र यः खलु परिकल्पो विकल्प्यमानो धर्मः, स विरुद्धरूपत्वेनाभिमतेभ्यः परिकल्पान्तरेभ्यो न भिद्यते। सर्वेषां विकल्पानां तत्र कल्पितत्वात्, आश्रयैक्येनैक्यात्।

अत्र ब्रह्मविदां संवादमाह—अपि खलु ब्रह्मविद आहुः—प्रदेशोऽपीत्यादि। अत्र प्रदेशपदेन तत्परिच्छिन्नः प्रदेशो घटपटादिर्गृह्यते। योऽयमेकस्य प्रदेशस्य प्रदेशान्तरेभ्यो वेदविकल्पः, अयमस्मादन्य इति; स ब्रह्मणः सार्वरूप्यं नातिक्रान्तः। अर्थाद् ब्रह्मणः सर्वाध्यासाधिष्ठानत्वात् सर्वरूपत्वेन ब्रह्मरूपतया सर्वेषामेकत्वाद् घट इति पटविलक्षणः सन् नास्तीत्यर्थः।

अविकल्पश्च स्वाध्यासाधिष्ठानाविकल्पो ब्रह्मरूपतया घटत्वादिरूपविकल्पशून्यश्चेत्यर्थः। तथाऽयमपि ब्रह्मवाद एव। यदाहुः—सर्वं दर्शनमित्यादि। सर्वं दर्शनं सर्वे सिद्धान्ताः, अन्यूनम्, अविकल्पम्, स्वाध्यासाधिष्ठानभूतब्रह्मणोऽन्यूनत्वादविकल्पत्वाच्च। तथाप्ययमान्तरः पुरुषः कर्मात्मा कर्माधीनो जीवोऽविद्यया सविकल्पमिव कल्प्यमानविविधधर्मयुक्तमिवाभिमन्यत इत्यर्थः। अत्राभिमानो भ्रान्तिः। एतावता ब्रह्मप्रतिपादकप्रणवरूपस्य सर्ववादाविरोधित्वमुक्तं भवति। किञ्चात्र वेदेषु, प्रणवः सर्वाभ्यनुज्ञाविषयः, सर्वेषां वादानामभ्यनुज्ञा अनुमतिर्विषयः प्रतिपाद्यो यस्य स तथाभूतः, तेन तद् ब्रह्म आत्मानं यथा यथा दर्शनभेदाः कल्पयन्ति, तथा तथाऽयं प्रणवोऽभ्यनुजानातीत्यर्थः। सर्वश्रुतिरूपः, यतः प्रणवो वेदस्वरूपेण विवृत्तः, वेदे च सर्वदर्शनविकल्पनिबन्धनभूता अर्थवादाः सन्तीति। प्रकृतिसर्वनाम प्रकृतित्वेन कल्पितानां प्रधानपरमाणवादीनां तदभिन्नं रूपम्, यतो भिन्ना अपि घटपटादयोऽर्थाः सर्वनामार्थभेदेन स्थिताः, अत एव भिन्नेष्वप्येकं सर्वनाम प्रयुज्यते।

किञ्च यथा पुंस्त्वादीनि लिङ्गानि नपुंसकेऽभेदेन स्थितानीति लिङ्गसर्वनाम नपुंसकम्, तथा च स्वरसर्वनाम एकश्रुतिरिति, तथा प्रकृतिसर्वनाम प्रणव इति। सर्वदर्शनोदयप्रत्यस्तमययोनिः

**विधातुस्तस्य लोकानामङ्गोपाङ्गनिबन्धनाः ।**
**विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ।।१०।।**

---

प्रत्यस्तमययोनिः सर्वविरुद्धार्थोपग्राही सर्वथेदं ब्रह्माभ्यनुजानाति सर्वथा च प्रतिषेधति। न च प्रतिषेधाभ्यनुज्ञयोरस्य प्रवृत्तितत्त्वं विकल्पते।

तथा ह्याहुः—

तदेतदेकं नैकं च तथोभे नाप्युभे न च।
कर्मस्था विषमं ब्रूयुः सत्त्वस्थाः समदर्शिनः ॥ इति ॥ ९ ॥

वेदो हि लोकानां प्रकृतित्वेन चोपदेष्टृरूपत्वेन च विवर्तेषु व्यवस्थासु च विधाता।

प्रणव एव वेद इत्येके। स हि सर्वशब्दार्थप्रकृतिरिति। एतस्मिंश्च दर्शने

---

सर्वेषां दर्शनानामुदययोनिः, प्रत्यस्तमययोनिश्च, सर्वश्रुतिरूपत्वात्। तत एव च सर्वविरुद्धार्थोपग्राही। यथा प्रधानात् कार्यमव्यतिरिक्तमिति सांख्यदर्शनम्, परमाणुभ्यः कार्यं व्यतिरिक्तमिति न्यायदर्शनं मिथो विरुद्धम्, तदुपग्राही च प्रणवः। सर्वथेदं ब्रह्माभ्यनुजानाति। यथा दर्शनभेदा ब्रह्मरूपं विकल्पयन्ति, तथा प्रणव एव श्रुतिरूपेण विवृत्तः सन्नभ्यनुजानातीत्यर्थः। किञ्च, श्रुतिरूपेण विवृत्त एव प्रणवस्तेन रूपेण विकल्पितं ब्रह्म प्रतिषेधति। न च प्रतिषेधाभ्यनुज्ञयोरस्य प्रणवस्य प्रवृत्तिनिमित्तभूतं तत्त्वं ब्रह्म विकल्पते = भिद्यत इत्यर्थः।

तथा ह्याहुः—तदेतदेकमिति। तदेतद् ब्रह्म स्वरूपत एकम्, विवर्तरूपेण नैकम्। तथा तद् ब्रह्म उभे प्रकृतिपुरुषरूपाभ्याम् , नाप्युभे आत्मशक्तिरूपायाः प्रकृतेः पुरुषानतिरेकात् , शक्ति-शक्तिमतोरभेदात्। तत आत्मन एकत्वादनेकत्वादुभयात्मकत्वादनुभयत्वाच्च। कर्मस्थाः कर्मतः फलमिच्छन्तः कर्मणि स्थिताः, विषमं नानाभेदभिन्नं जगदाहुः, भेदबुद्धिं विना कर्तृत्व-भोक्तृत्वाद्यसम्भवात्। सत्त्वस्थाः सत्त्वार्थे ब्रह्मज्ञाने स्थिता ब्रह्मज्ञानिनस्तु समदर्शिनः, नानाभेदभिन्नस्य जगतो ब्रह्मण्यध्यस्तत्वात्, ब्रह्मदृष्टयः समत्वादिति भावः ॥ ९ ॥

न केवलं दर्शनप्रवादा एव वेदाद् विनिर्गताः, किन्तु ज्ञानसंस्कारहेतवो विद्याभेदाः शकुनज्ञानादयस्तदङ्गेभ्यो ज्यौतिषादिभ्यः स्वप्नविपाकयोनिज्ञानादयश्च तदुपाङ्गेभ्यः स्मृतिपुराणादिभ्यो विनिर्गता इत्याह—**विधातुस्तस्य लोकानामिति।**

लोकानां विधातुः प्रकृतित्वेन स्रष्टुर्व्यवस्थापयितुश्च तस्य वेदस्य, वेदो हि लोकानां विवर्तोपादानत्वेन व्यवस्था उपदेष्टृरूपत्वेन च विधाता। तदग्रे वक्ष्यते—''छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत'' (वा० १, का० १२१) इति।

प्रणव एव वेद इत्येके। स हि सर्वेषां शब्दानामर्थानाञ्च प्रकृतिरिति। एतस्मिंश्च दर्शने विद्याभेदाः सर्वेऽपि प्रणवात्मतया स्थितं वेदतत्त्वं नातिक्रामन्ति, किन्तु प्रणवात्मकवेदस्वरूपा एव। तदाहुः—''सर्वा वाचो वेदमनुप्रविष्टाः'', ''नावेदविन्मनुते ब्रह्म किञ्चित्'' इति।

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**
**प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः ।।११।।**

विद्याभेदाः प्रणवात्मतया वेदतत्त्वं नातिक्रामन्ति । तदाहुः—"सर्वा वाचो वेदमनुप्रविष्टाः", "नावेदविन्मनुते ब्रह्म किञ्चित्" ।

तथा "विधिर्विधेयस्तर्कश्च वेदः" इति । प्रणवाङ्गोपाङ्गेभ्यश्च श्रुतिस्मृतित्रय्यन्तादिभ्यो विद्याभेदाः प्रभवन्ति सम्यग्ज्ञानहेतवः पुरुषसंस्कारहेतवश्च । ज्ञानात्मकत्वाद्वा पुरुषस्यैव संस्कारहेतवः ।

वेदाख्यस्य प्रसिद्धस्य ब्रह्मणोऽङ्गेभ्यो ज्यौतिषादिभ्यः शकुनज्ञानादय उपाङ्गेभ्यश्च स्वप्नविपाकयोनिज्ञानादयो विद्याभेदाः प्रसिद्धा लोके ।। १० ।।

तस्य शब्दब्रह्मणो हि यतः स्वरूपसंस्कारः साधुत्वप्रतिपत्त्यर्थः, तदासन्नं साक्षादुपकारि । उपकारविशेषकृता ह्यासत्तिः समाख्याता । ऊह्यं चाम्नायान्तरम् ।

अयं भावः—सर्वा वाचः सर्वा विद्याः, वेदं प्रणवमनुप्रविष्टाः, प्रणवस्य सर्वशब्दार्थप्रकृतित्वस्य प्रागुक्तत्वात् । अवेदवित् प्रणवतत्त्वानभिज्ञः किञ्चिदपि ब्रह्म न मनुते नावबुध्यत इत्यर्थः । प्रणवस्य परापरब्रह्मवाचकत्वात्, तत्प्रतीकत्वाच्चेति ।

तथापरे—"विधिर्विधेयस्तर्कश्च वेदः" इति वदन्ति । तत्र विधिर्विधायकं वाक्यं ब्राह्मणरूपम् । तद्धि मन्त्रान् कर्मणि विनियुङ्क्ते इति विधायकम् । विधेयो मन्त्रः, विधिना ब्राह्मणेन विनियुज्यमानत्वात् । तर्को वेदार्थमीमांसा । तथा च विधि-विधेय-तर्करूपैर्विवृत्तस्य प्रणवात्मकस्य वेदस्य अङ्गेभ्यः श्रुतित्रय्यन्तादिभ्यः, उपाङ्गेभ्यश्च स्मृतिभ्यो विद्याभेदाः प्रभवन्ति ।

अत्र श्रुतिरर्थवादः, लोकेऽप्रसिद्धत्वाद् वेदे केवलं श्रूयमाणत्वात् । त्रय्यन्ता उपनिषदः । आदिशब्देन श्लोकाः । यदुच्यते—तदप्येते श्लोका भवन्तीति । स्मृतिस्तु व्याकरणचिकित्सादिलक्षणा मन्वादिलक्षणा च, अविशेषात् ।

केचित्तु व्याकरणादिस्मृतीनामङ्गत्वं चिकित्सादिस्मृतीनां चोपाङ्गत्वम्, मन्वादिस्मृतीनां श्रुतिमूलत्वात् तदर्थानुवादित्वाच्च श्रुतित्वमेवेति वदन्ति ।

यद्वा प्रसिद्धस्य ब्रह्मणो = वेदस्य विधिमन्त्रार्थवादत्रय्यन्तादिरूपस्याङ्गेभ्यो ज्यौतिषादिभ्यः शकुनज्ञानादयः, उपाङ्गेभ्यश्च स्मृतिपुराणादिभ्यः स्वप्नविपाकयोनिज्ञानादयो विद्याभेदा लोके प्रसिद्धाः प्रतायन्ते = प्रभवन्ति ।

अद्वैतात्मविज्ञानरूपसम्यग्ज्ञानहेतवस्त्रय्यन्तादिरूपाः, संस्कारो धर्मः, तदभिव्यक्तिहेतवो मन्वादिस्मृतयः पुराणानि च । ज्ञानश्च संस्कारश्चेति द्वन्द्वः । यद्वा ज्ञानस्य संस्कार इति षष्ठीतत्पुरुषः । ज्ञानस्य संस्कार एव पुरुषसंस्कारः, उत्पन्नज्ञानातिशया हि संस्कृता उच्यन्त इति ।। १० ।।

तदेवं सम्यग्ज्ञानहेतुतया वेदान्तं प्रदर्श्य तदङ्गतया व्याकरणवर्णनमारभते—**आसन्नं ब्रह्मण इति ।**

इदमूह्यमिदमनूह्यमिति न्यायादवस्थिते सम्यग् विपरिणतौ लिङ्गवचनादीनां व्याकरणं निबन्धनमिति, आम्नायान्तरप्रतिपत्तिहेतुत्वादासन्नमिति व्यपदिश्यते।

तपसामुत्तमं तपः। यानि लोके तपस्त्वेनाख्यातानि ब्रह्मचर्याधःशयनोदवास-चान्द्रायणादीनि, ये च पवित्रतमाः स्वाध्यायास्तेषामिदं दृष्टादृष्टविशेषफलहेतुत्वा-दभिख्याततमं तपः।

---

बुधा व्याकरणं तस्य ब्रह्मण आसन्नं तपसामुत्तमं तपः, छन्दसां प्रथममङ्गमाहुरिति योजना।

तस्य ब्रह्मणो वेदस्य शब्दस्वरूपस्य, आसन्नं साक्षादुपकारि। उपकारविशेषकृता हि आसत्तिः समाख्याता। उपकारश्चात्र वेदशब्दानां व्याकरणेन स्वरूपसंस्कारः प्रकृतिप्रत्यय-विभागान्वाख्यानरूपः, न तु विशिष्टोत्पत्तिरूपः, अपौरुषेयत्वेन नित्यत्वाद् वेदस्य। संस्कारेण च वेदशब्दानां साधुत्वावसायरूप उपकारः। व्याकरणेन ऊह्यं चाम्नायान्तरमित्यूहरूपोऽप्युपकारो वेदस्य व्याकरणेन। यथा प्रकृतौ सौर्ययागे ''सूर्याय त्वा जुष्टं निर्वपामि'' इति श्रूयते। विकृतौ आग्नेययागे तु ''प्रकृतिवद् विकृतिः कर्त्तव्या'' इत्यतिदेशबलात् ''अग्नये त्वा जुष्टं निर्वपामि'' इत्यूहरूप उपकारो व्याकरणेन वेदस्य इत्यतोऽत्यासन्नं वेदस्य व्याकरणम्।

ननु मीमांसयैवोहः क्रियत इति किं तत्र व्याकरणेनेति चेत्, न, इदमूह्यम्, इदमनूह्यमिति मीमांसापरिशोधितन्यायाद् व्यवस्थाप्यते, लिङ्गवचनादीनां सम्यग् विपरिणामस्तु व्याकरणेन क्रियत इत्येवमूहे व्याकरणस्योपयोगात्। एवञ्च इदमूह्यमिदमनूह्यमिति विषयविभागो मीमांसाया वाक्यार्थनिरूपणद्वारेण क्रियते, न तु ऊह्यमानस्य मन्त्रस्य स्वरूपपरिज्ञानम्। अवस्थिते तु विभागे सम्यगविपर्ययेण यथापठितलिङ्गावगतेन न्यायेन लिङ्गवचनोपादाने व्याकरणं निमित्तम्। एवमूह-रूपाम्नायान्तरप्रतिपत्तिहेतुत्वाद् व्याकरणं वेदस्यासन्नमित्युच्यते। यतः सन्त एवैते ऊहरूपा वेदखण्डा आलस्यादिनाऽनाम्नाता व्याकरणेनानुमीयन्ते।

**तपसामुत्तमं तप इति**। यानि लोके तपस्त्वेनाभिख्यातानि—ब्रह्मचर्यम्, अधःशयनम्, भूमिशायिता, उदवासः, चान्द्रायणमित्यादीनि; ये च पवित्रतमाः स्वाध्यायाः पुरुषसूक्तादयः, तानि सर्वाणि अदृष्टफलहेतुत्वात्तपस्त्वेनाभिख्यातानि। व्याकरणं तु दृष्टादृष्टविशेषफलहेतुत्वाद-भिख्याततमं तपः। व्याकरणस्य दृष्टं प्रयोजनं पदपदार्थावसायः, अदृष्टं तु 'स्वर्गे लोके च काम-धुग्भवतीति' इत्यादिनोक्तम्। ब्रह्मचर्यादीनां तपस्त्वं तु गौतमेनोक्तम्—''ब्रह्मचर्यम्, सत्यवचनम्, सवनेषूदकोपस्पर्शनम् , आर्द्रवस्त्राधःशायिता, अनाशक इति तपांसि'' इति। अत्र सवनेषु प्रातर्मध्याह्नसायाह्नेषु उदकोपस्पर्शनं स्नानम्। आर्द्रवस्त्राधःशायिता, अत्र तल्प्रत्ययस्य द्वयोर्योगः। आर्द्रवस्त्रता, अधःशायिता इत्यर्थः। एकवचनं तु आर्षम्। अनाशक इति शरीरस्यानाशको नियमो हितमितमेध्याशनरूपः। उक्तं चेदम्—''तपसाऽनाशकेन'' इति श्रुत्यंशं विवृण्वद्भिर्मिश्र-पादैर्भामत्यां तुरीयसूत्रभाष्यव्याख्यावसरे।

**प्राप्तरूपविभागाया यो वाचः परमो रसः ।**
**यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः ।।१२।।**

यस्याक्षरसमाम्नायस्य ज्ञानमात्रेण सर्ववेदपुण्यफलावाप्तिरागमेन स्मर्यते, तच्छन्दसां प्रथममङ्गम्, प्रधानत्वात् । एवं ह्याह—"प्रधानं च षट्स्वङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति" इति ॥ ११ ॥

अभिन्नात् संहृतक्रमादन्तःसन्निवेशिनः शब्दतत्त्वाद्वर्णपदवाक्यलक्षणं रूपविभागं स्थानादिभेदेन प्राप्ताया वाचः, अभिधेयत्वेन वा गवादिरूपविभागोपग्रहं नित्येनार्थसम्बन्धेन प्राप्ताया वाचः । वाच एव वा विभागा गवादित्वेनावतिष्ठन्ते । गवादयश्च बाह्यार्थरूपा इव विभागाः पुनः श्रुतिरूपत्वेन परिणमन्ते । तथा एके कार्यकारणभावमेव शब्दार्थयोः सम्बन्धं मन्यन्ते । एवं ह्याह—

नामैवेदं रूपत्वेन ववृते रूपं चेदं नामभावेऽवतस्थे ।
एके तदेकमविभक्तं विभेजुः प्रागेवान्ये भेदरूपं वदन्ति ॥

प्रथमं छन्दसामङ्गमिति । यस्याक्षरसमाम्नायस्य ज्ञानमात्रेण सर्ववेदपुण्यफलावाप्तिरागमेन स्मर्यते, तच्छन्दसां प्रथममङ्गम्, प्रधानत्वादङ्गेषु षट्सु । प्रधानत्वं चास्य वेदरूपत्वात् । अतस्तन्मूलकं व्याकरणम् , "प्रधाने च कृतो यत्नः फलवान् भवति" इति । 'फलवान्' इत्यत्रातिशायने मतुप् । फलातिशयवान् इत्यर्थः ॥ ११ ॥

व्याकरणमेव प्रकारान्तरेण स्तौति—**प्राप्तरूपविभागाया इति ।**

अभिन्नात् संवृतक्रमाद् ज्ञानरूपेणान्तःसन्निवेशिनः शब्दतत्त्वाद् वर्णपदवाक्यलक्षणं रूपविभागं प्राप्ताया वाचः । यद्वा स्वाभिधेयानित्यगवादिरूपविभागोपग्रहं नित्येनार्थसम्बन्धेन प्राप्ताया वाचः । यद्वा परस्परव्यावृत्ता गवादयः पदार्था वाचोरूपविभागाः । यत एषा वागेव गवाद्यर्थरूपेण विवर्तते । एवं ते गवादयो रूपविभागास्तया प्राप्ताः ।

अयं भावः—सैव वाग् गवादिपदार्थरूपेण परिणमते । ते गवादयस्तत्रैव वाचि प्रलीना वाग्रूपेण व्यवतिष्ठन्त इति शब्दार्थयोः कार्यकारणभावसम्बन्धः । बाह्यः शब्दः कार्यम्, वाग्रूपेणान्तर्निलीना गवादयः कारणम् । अन्तःस्थितः शब्दः प्रागुक्तः कारणम्, बाह्या गवादयः कार्यमिति । तदेवं कार्यकारणभावमूलक एव शब्दार्थयोर्ज्ञाप्यज्ञापकभावः । तदुक्तम्—

नामैवेदं रूपत्वेन ववृते रूपं चेदं नामभावेऽवतस्थे ।
एके तदेकमविभक्तं विभेजुः प्रागेवान्ये भेदरूपं वदन्ति ॥ इति ।

इदं सूक्ष्मवागात्मनाऽन्तःस्थितं नामैव, रूपत्वेन=गवाद्यर्थाकारेण ववृते=विवृत्तम्, परिणतमिति यावत्, गवाद्यर्थस्य व्यावहारिकत्वात् । रूपं चेदं गवादिकमर्थजातं प्रलीयमानं नामभावेऽवतस्थे नामरूपेणान्तःस्थितम् । एवं तद् नामरूपमविभक्तं विभागात् प्रागेकं तत्त्वम्, एके वादिनो विभेजुः पश्चाद् विभक्तमिति मेनिरे । अन्ये तु वादिनः प्रागेव=प्रागपि, भेदरूपं नामार्थयोर्भिन्नमेव तत्त्वमिति वदन्ति ।

परमो रस इति। वाचकत्वादभ्युदयहेतुत्वाच्च व्यवस्थितसाधुभावः शब्दसमूहोऽभिधीयते। एवं ह्याह—"ऋजीषमेतद्वाचो यः संस्कारहीनः शब्दः" इति।

यत्तत्पुण्यतमं ज्योतिः। इह त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः। तद्यथा—"योऽयं जातवेदा यश्च पुरुषेष्वान्तरः प्रकाशो यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशस्तत्रैतत् सर्वमुपनिबद्धं यावत् स्थास्नु चरिष्णु च" इति। तस्य मार्गोऽयमाञ्जसः।

---

एवं वर्णपदवाक्यरूपैस्त्रिधा प्राप्तरूपाया वाचः सूक्ष्माया यः परमो रसः=परमः सारः, व्यवस्थितसाधुभावो यः शब्दसमूहस्तद्रूपः, तस्य वाचकत्वादभ्युदयहेतुत्वाच्च। असाधुस्तु शब्दसमूह ऋजीषं किट्टापरपर्यायम्, यथा निष्पीडितस्य इक्षुदण्डस्य रसः सारम्, अन्यत्तु ऋजीषम्।

**यत्तत्पुण्यतमं ज्योतिरिति**। साधुशब्दसमूह एव पुण्यतमम् = पवित्रतमम्, ज्योतिः = प्रकाशः, प्रकाशाप्रकाशयोरुभयोरप्यर्थयोः प्रकाशत्वात्।

अयं भावः—इह संसारे त्रीणि ज्योतींषि = त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः। तद्यथा—योऽयं जातवेदाः, यश्च पुरुषेष्वान्तरः प्रकाशो ज्ञानरूपः, यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशः। यत्र शब्दाख्ये प्रकाशे एतत्सर्वं यावत् स्थावरजङ्गममभिधेयत्वेन कार्यत्वेन च उपनिबद्धं सम्बद्धम् , तत् तृतीयम्। तदेवं त्रिष्वपि प्रकाशेषु शब्दाख्यं ज्योतिरेव पुण्यतमम्। तस्य = शब्दाख्यस्य पुण्यतमस्य ज्योतिषः। अयम् इदं व्याकरणम्, विधेयस्य मार्गस्य लिङ्गमाश्रित्य पुंस्त्वनिर्देशः। आञ्जस ऋजुर्मार्गो ज्ञानोपायः।

अयं भावः—दुरधिगमः खलु शब्दराशिः प्रतिपदं शब्दपारायणेन। तदुक्तं भाष्ये—"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं शब्दपारायणं प्रोवाच। इन्द्रश्चाध्येता बृहस्पतिश्च प्रवक्ता, दिव्यं वर्षसहस्रमध्ययनकालो नान्तं जगाम, किं पुनरद्यत्वे" इत्यादि।

अतः पाणिनिना सामान्यविशेषवद् व्याकरणाख्यं लक्षणं कृतम्। तद्धि लक्षणप्रपञ्चाभ्यां कृत्स्नस्य शब्दब्रह्मणो लघुनोपायेन समधिगमनिमित्तम्। सामान्यविशेषवल्लक्षणप्रणयनं च उत्सर्गापवादविधिप्रतिषेधनिपातनातिदेशस्थान्यादेशलिङ्गनियमरूपैः सप्तभिः सामान्यविशेषप्रकारैः। उत्सर्गापवादरूप एकः सामान्यविशेषप्रकारः। यथा "ण्वुल्तृचौ", "कर्मण्यण्" (पा० ३/२/१) इति। विधिप्रतिषेधौ अपरः। तद्यथा—पद्यति इति विधिः, अतदर्थे इति प्रतिषेधः। विधिनिपातने तृतीयः। यथा "एचोऽयवायावः" (पा० ६/१/७८) इत्ययाद्यादेशविधायकं सामान्यसूत्रम् , "क्षय्यजय्यौ शक्यार्थे" (पा० ६/१/८१) इति निपातनरूपो विशेषः। विध्यतिदेशौ चतुर्थः। यथा "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" (पा० १/२/४५) इति सामान्यसूत्रम्, "अन्तादिवच्च" (पा० ६/१/८५) इत्यतिदेशरूपो विशेषः 'काण्डे' इत्यादौ एकादेशविशिष्टे प्रातिपदिकत्वसम्पादकः। स्थान्यादेशौ पञ्चमः। यथा 'हन्' इति स्थानी सामान्यरूपः, 'वध' इत्यादेशो विशेषरूपः, नियतविषयकत्वात्। लिङ्गेऽपि सामान्यविशेषरूपः षष्ठः। यथा "रात्राह्नाहाः पुंसि" (पा० २/४/२९) इति सामान्यम् "अहोरात्रे च छन्दसि" इति विशेषः। विधिनियमौ सप्तमः। यथा "पूर्वत्रासिद्धम्" (पा० ८/२/१) इति सामान्यरूपो विधिः, "नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति" (पा० ८/२/२) इति विशेषरूपो नियमः।

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ।।१३।।**

---

सामान्यविशेषवद्धि लक्षणं लक्षणप्रपञ्चाभ्यां शब्दब्रह्मणः कृत्स्नस्य लघुनोपायेन समधिगमनिमित्तम् । उपदेशं चान्तरेण संस्कारवति निरपभ्रंशे शब्दब्रह्मणि लब्धप्रतिष्ठानां शिष्टानामनुमानम् । शिष्टज्ञानाच्च पृषोदरप्रकाराणां शिष्टप्रयोगत्वात् साधुत्वप्रतिपादने निमित्तं व्याकरणम् । तथा चोक्तम्—

शब्दार्थसम्बन्धनिमित्ततत्त्वं वाच्याविशेषेऽपि च साध्वसाधून् ।
साधुप्रयोगानुमितांश्च शिष्टान्न वेद यो व्याकरणं न वेद ॥ १२ ॥

अर्थस्य प्रवृत्तितत्त्वं विवक्षा, न तु वस्तुस्वरूपतया सत्त्वमसत्त्वं वा । विवक्षा

---

तदेवं सामान्यविशेषवद् व्याकरणं लक्षणप्रपञ्चाभ्यां कृत्स्नस्य शब्दब्रह्मणो लघुनोपायेन समधिगमनिमित्तम् । यथा "ध्रुवमपायेऽपादानम्" (पा० १/४/२४) इति लक्षणम् , उत्तराणि त्वपादानसञ्ज्ञाविधायकानि सूत्राण्यस्यैव प्रपञ्चः । सर्वत्राऽप्यन्ततो बौद्धापायसत्त्वादिति । एवं व्याकरणमन्वाख्यातानां शब्दानां ज्ञानोपायः, अनन्वाख्यातानामपि पृषोदरादीनां व्याकरणमेव ज्ञानोपायः ।

तथा हि—येऽष्टाध्यायीं नाधीयते, प्रयुञ्जते च संस्कृतान् शब्दान्, ते शिष्टा इत्यनुमीयन्ते । अनुमानं चेदमष्टाध्यायीं द्वारीकृत्यैव । अनुमानाकारश्च—इमे शिष्टाः, उपदेशमन्तरेण निरपभ्रंशे संस्कृते शब्दब्रह्मणि लब्धप्रतिष्ठत्वात्, ये नैवं ते नैवम्, यथाऽशिष्टा इति । अत्र हेतुज्ञानं चाष्टाध्यायीतः । अनुमिते च तेषां शिष्टत्वे शिष्टप्रयोगत्वात् पृषोदरप्रकाराणामनन्वाख्यातानां शब्दानां साधुत्वप्रतिपत्तिः । अत्रानुमानाकारः—अनन्वाख्याताः पृषोदरादयः साधवः, शिष्टप्रयुक्तत्वात् , अन्वाख्यातवदिति । अत्र हेतुज्ञानं तु "पृषोदरादीनि यथोपदिष्टम्" (पा० ६/३/१०९) इत्यादिशास्त्रतः । तदुक्तम्—

शब्दार्थसम्बन्धनिमित्ततत्त्वं वाच्याविशेषेऽपि च साध्वसाधून् ।
साधुप्रयोगानुमितांश्च शिष्टान्न वेद यो व्याकरणं न वेद ॥ इति ।

अस्यार्थः—शब्दश्चार्थश्च सम्बन्धश्च निमित्तं चेति द्वन्द्वः । निमित्तं शब्दप्रवृत्तिनिमित्तम् । एषां तत्त्वमविपरीतं रूपं यो न वेद । वाच्याविशेषेऽपि च साध्वसाधून् यो न वेद । एकस्मिन्नेवार्थे एक एव शब्दः साध्वसाधुतां प्रतिपद्यते । यथा सास्नादिमति गोणीशब्दो जात्यादिनिमित्तेनासाधुः । आवपनरूपस्वप्रवृत्तिनिमित्तसाधर्म्यात् तत्रैव प्रयुक्तः साधुः । अष्टाध्याय्या अध्ययनं विनैव यः साधुशब्दप्रयोगस्तेनानुमिता ये शिष्टास्तान् यो न वेद, स व्याकरणं न वेत्ति इति ॥ १२ ॥

अर्थव्यवहारनिमित्तविवक्षानिमित्तशब्दतत्त्वावबोधहेतुत्वेनापि व्याकरणं स्तौति— **अर्थप्रवृत्तितत्त्वानामिति ।**

अयं भावः—अर्थस्य प्रवृत्तिर्व्यवहारस्तस्य निमित्तभूतानि तत्त्वानि पदार्था विवक्षारूपाः, तेषां निबन्धनं निमित्तं शब्दा एव । अर्थस्य वस्तुस्वरूपतया सत्त्वमसत्त्वं वा न प्रवृत्तितत्त्वम्;

हि योग्यशब्दनिबन्धना। योग्यं हि शब्दं प्रयोक्ता विवक्षाप्रापितसन्निधानेष्वभिधेयेषु प्रत्यर्थमुपादत्ते। तद्यथोपलिप्समानः प्रतिविषयं योग्यमेवेन्द्रियमुपलब्धौ प्रणिधत्ते।

अपर आह—अर्थस्य प्रवृत्तौ तत्त्वं व्यवहारे यन्निमित्तम्। यदा हि निमित्तान्निमित्तवत्स्वर्थेषु निमित्तस्वरूपः प्रत्यय उत्पद्यते, तदार्थेन व्यवहर्तुं शक्यते, न तु संसर्गिरूपान्तरविवेके कैवल्यविषयो व्यवहारो विद्यते। तदेवं जातिषु प्राप्तस्वरूपत्वादभिधानानां सामान्यस्य शब्दनिबन्धनत्वमास्थीयते।

व्यवहारे वा तत्त्वं संसर्गः। विच्छिन्नरूपेष्विवात्यन्तसंसृष्टेषु पदार्थेषु प्रत्यवभासमानेषु व्यवहारो वाक्यनिबन्धनः। न हि संसर्गदर्शनप्रत्यस्तमये कश्चिदपि पदार्थगतव्यवहारो व्यवतिष्ठते।

---

किन्तु विवक्षैव। यतो लोके विवक्षयैवार्थे शब्दप्रयोगरूपो व्यवहारो दृश्यते, न तु वस्तुस्वरूपस्य सत्त्वेनासत्त्वेन वा। विवक्षाणां निमित्तं शब्दा एव। यतः प्रयोक्ता तदर्थविवक्षाप्रतिपादनयोग्यं हि शब्दं विवक्षाप्रापितसन्निधानेष्वभिधेयेषु प्रत्यर्थमुपादत्ते। तद् यथेन्द्रियेणार्थमुपलिप्समानः प्रतिविषयं योग्यमेवेन्द्रियमुपलब्धौ प्रणिधत्ते, न रूपोपलब्धौ श्रोत्रमिति, एवं तदर्थाभिधानयोग्येनैव शब्देन तमर्थं विवक्षतीति।

अपर आह—अर्थस्य प्रवृत्तौ व्यवहारे निमित्तभूतानि तत्त्वानि जातिरूपाणि। तथा हि—या एता व्यक्तयो भिन्नरूपा यावज्जात्या नोपरज्यन्ते, न तावदिदं तदित्येवं परिच्छिन्नेन रूपेण व्यवहार्याः। यदा ह्यर्थस्य प्रवृत्तिनिमित्ताद् गोत्वादिकाद् निमित्तवत्सु = जातिमत्सु पिण्डेषु निमित्तस्वरूपः = जातिस्वरूपानुकारी, जातिस्वरूपोपरक्तः प्रत्यय उत्पद्यते, तदाऽर्थेन व्यवहर्तुं शक्यते। गोत्वादिजातिरूपाक्रान्तेन ह्यर्थेन व्यवहारो भवति, नान्यथा। न हि जात्युपरागाभावे जात्युपधानरहितशुद्धवस्तुविषयो व्यवहारो लोके विद्यते, स्वलक्षणस्य = केवलस्य द्रव्यस्वरूपस्य अवाच्यत्वात्। तथा च जातिषु शब्दानां पूर्वं प्रवृत्तेः सामान्यस्य शब्दा एव निबन्धनमित्यास्थीयते।

तथा हि—जातिषु पदन्यासमकृत्वा = जातिं प्रागप्रबोध्य न स्वलक्षणेषु शब्दाः प्रवर्तन्त इति जातावेव प्राक् शब्दानां वाचकत्वेन स्वरूपज्ञानम्। स्वरूपप्रतिलम्भानन्तरमेव च शब्दानां प्रतिपादकत्वम्। तदेवं शब्दानामर्थप्रतिपादकत्वं जातिप्रतिपादनमन्तरेण नास्तीति सामान्यस्य प्रतिपत्तिनिबन्धनं शब्दाः।

व्याख्यान्तरं तु—अर्थस्य प्रवृत्तौ व्यवहारे तत्त्वं निमित्तं संसर्गः, संसर्गानुपहितस्वार्थस्याशक्यव्यवहारत्वात्। संसर्गो हि क्रियाकारकयोः परस्परात्मानुप्रवेशलक्षणः। अर्थश्च साध्यसाधनभेदाद् द्विविध एव, सम्बन्धरूपस्य शेषस्य साधनान्तर्गतत्वात्। उपपादयिष्यते च तस्य तदन्तर्गतत्त्वं शेषपदार्थनिरूपणावसरे मूल एव तृतीयकाण्डे। तत्र नामपदान्यनुप्रविष्टसाध्यरूपाण्येव साधनानि प्रतिपादयन्ति, आख्यातपदानि चानुप्रविष्टसाधनामेव क्रियाम्, परस्परानुप्रवेशमन्तरेणानयोः स्वरूपापहारात्। स चेदृशः संसर्गः प्रतिपदमेव व्यवस्थितः। पदान्तरप्रयोगस्तु क्रियासाधनयोराश्रययोः संसर्गविशेषोपसंहाराय। प्रतिपद्यमानास्तु = प्रतिपत्तारस्तु तान् संसृष्टानपि पदार्थान् विच्छिन्नानिव पश्यन्ति। एवमत्यन्तसंसृष्टेषु पदार्थेषु विच्छिन्नरूपेष्विव प्रतिभासमानेषु

अपरोऽर्थः—केवलं वस्तु त्यदादीनां वस्तूपलक्षणानां विषयमात्रम्। तस्य प्रवृत्तितत्त्वं संसर्गः। संसृष्टो हि क्रियासु गुणभावेन चोपादीयते।

अथवा प्रवृत्तिर्जन्मादिक्रियाऽऽख्यातपदनिबन्धना। तस्याः प्रवृत्तिरिति समाख्यातायास्तत्त्वं साध्यत्वं साधनाकाङ्क्षता क्रमरूपोपग्रहः कालाभिव्यक्तिहेतुत्वम्।

अपरस्त्वर्थः सत्त्वमात्रं त्रिष्वपि कालेषु स्वभावसिद्धमभिधेयत्वेन प्रत्यस्तमितक्रमरूपं नामपदनिबन्धनम्।

अथवार्थप्रवृत्तेः किं तत्त्वम्—अर्थरूपाकारः प्रत्ययात्मा बाह्येषु वस्तुषु प्रत्यस्तः, स च शब्दनिबन्धनः।

तत्त्वावबोधः शब्दानाम्। शब्दस्य तत्त्वमवैकल्यम्। अनपगतसंस्कारं साधुस्वरूपम्। तद्द्वयस्याविकलं रूपम्।

अन्ये तु तत्प्रयुयुक्षया प्रयुज्यमाना विकलाः स्युरपभ्रंशा इति ॥ १३ ॥

---

व्यवहारः पदान्तरप्रयोगरूपवाक्यनिबन्धनः। न हि संसर्गदर्शनप्रत्यस्तमये कश्चिदपि पदार्थगतव्यवहारो व्यवतिष्ठत इति।

अपरोऽर्थः—केवलं जात्युपधानरहितं त्यदादीनां सर्वनाम्नां तत्तद्धर्मानुपलक्षणीकृत्य वस्तुमात्रं बोधयतां विषयमात्रम्, घटत्वादिरूपस्य विशेषस्याप्रतिपादनात्। तस्यार्थस्य प्रवृत्तितत्त्वं प्रवृत्तिनिमित्तं संसर्गः = जात्यादिसंसर्गः, यतो जात्यादिसंसृष्ट एव गुणभावेन प्रधानभावेन च क्रियासु विनियुज्यते। यथा—एधाः पचन्तीति एधानामप्राधान्यं पाकार्थत्वेन। 'ओदनं पचति' इत्यत्रौदनार्थत्वात् पाकस्यौदनः प्रधानम्।

पूर्वं साध्यसाधनभावरूपः संसर्गोऽर्थप्रवृत्तितत्त्वरूपतयाऽभिहितः। इदानीं तु जात्यादिसंसर्ग इति भेदः। यद्यपि 'न हि वस्तुमात्रं क्रियोपयोगमगच्छद् व्यवहाराङ्गम्' इति वदतो वृषभदेवस्य अर्थे क्रियायोगस्यैवार्थप्रवृत्तितत्त्वरूपताऽभिप्रेता, तथापि तन्न युक्तम्, 'संसृष्टो हि क्रियासु गुणभावेन प्रधानभावेन चोपादीयते' इत्यत्रत्यहरिवचनविरोधात्। न हि क्रियासंसृष्टस्य क्रियासु विनियोग इति वचनं युक्तिसहम्, विनियोगस्य संसर्गरूपत्वात्।

अथवा—अर्थश्च प्रवृत्तिश्चेति द्वन्द्वः, तयोस्तत्त्वानाम्। अत्रार्थपदेन सत्त्वमात्रं त्रिष्वपि कालेषु स्वभावसिद्धम्; प्रत्यस्तमितक्रमरूपम् अभिधेयत्वेन नामपदनिबन्धनं विवक्षितम्। अर्थस्य सामानाधिकरण्येन वैयधिकरण्येन वा प्रवृत्तिविशेषणत्वं तु न सम्भवति, अव्यभिचारात्। अतोऽत्र द्वन्द्व एव युक्तः, न कर्मधारयः षष्ठीतत्पुरुषो वा।

प्रवृत्तिस्तु जन्मादिक्रियारूपाऽऽख्यातपदनिबन्धना। तस्याः प्रवृत्तिरिति समाख्यातायास्तत्त्वं साध्यत्वं साधनाकाङ्क्षताक्रमरूपग्रहे वर्तमानादिकालाभिव्यक्तिहेतुत्वम्। एतद्वैपरीत्येनार्थस्य तत्त्वं तु साधनत्वं साध्याकाङ्क्षत्वं क्रमशून्यत्वं कारकाभिव्यक्तिहेतुत्वमिति बोध्यम्।

पुनरप्यर्थस्य प्रवृत्तिरिति षष्ठीतत्पुरुषमाश्रित्यार्थान्तरमपर आह—अर्थप्रवृत्तितत्त्वानामिति। व्यवह्रियमाणस्यार्थस्य यानि प्रवृत्तितत्त्वानि व्यावहारिकाणि रूपाणि, तानि बुद्धिस्वरूपाण्येव। तेषां शब्दा एव निबन्धनम्, शब्दैरेवार्थबुद्धिजननादिति भावः। बुद्धिरेवोपदर्शितबाह्याभिधेयाकारा

**तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ।।१४।।**

---

शब्दपूर्वं हि शब्दस्वरूपस्याभेदतत्त्वज्ञः क्रमसंहारेण योगं लभते । साधुप्रयोगाच्चाभिव्यक्तधर्मविशेषो महान्तं शब्दात्मानमभिसम्भवन् वैकरण्यं प्राप्नोति । सोऽव्यतिकीर्णां वागवस्थामधिगम्य वाग्विकाराणां प्रकृतिं प्रतिभामनुपरैति । तस्माच्च सत्तागुण्यमात्रात् प्रतिभाख्याच्छब्दपूर्वयोगभावनाभ्यासाक्षेपात् प्रत्यस्तमितसर्वविकारोल्लेखमात्रां परां प्रकृतिं प्रतिपद्यते ।

---

चक्षुरादीन्द्रियप्रणालिकया बहिरर्थाकारेण प्रत्यस्ता । तथा चार्थानां बाह्यत्वेन ग्रहणम्, न तु बहिरर्थाः सन्तीति फलितम् । सति बाह्येऽर्थे तत्रवृत्तिनिमित्तभूता विवक्षा प्रवृत्तितत्त्वमित्युक्ता । इदानीं तु व्यवह्रियमाणस्यार्थस्य बुद्धिरेव प्रवृत्तितत्त्वम् = व्यावहारिकं स्वरूपमिति विशेषः ।

तत्त्वावबोधः शब्दानामिति । शब्दस्य तत्त्वमवैकल्यम् । अनपगतसंस्कारं साधुस्वरूपम् । तद्द्वयस्याविकलं रूपम् ।

अन्ये तु शब्दास्तत्त्रयुयुक्षया प्रयुज्यमानाः स्थानकरणादिदोषेण विकला अपभ्रंशाः स्युरिति भावः ।।१३।।

पुनरपि प्रकारान्तरैर्व्याकरणं स्तौति—**तद् द्वारमिति** ।

तद् व्याकरणमपवर्गस्य मोक्षस्य द्वारं प्राप्त्युपायः । तथा हि—ज्ञानात्मना स्थितस्य शब्दस्वरूपस्य स्वात्मना सहाभेदतत्त्वज्ञो व्याकरणेन वर्णानुपूर्व्यादिक्रमविशिष्टसाधुशब्दप्रयोगज्ञानपूर्वकं तत्र वर्णानुपूर्वीरूपक्रमपरिहारेण स्वात्मनि योगं निर्विकल्पं लभते । ततश्च निःश्रेयसप्राप्तिरित्येकः प्रकारो व्याकरणस्य मोक्षप्राप्त्युपायत्वे । व्याकरणज्ञानेन साधुशब्दप्रयोगादभिव्यक्तपुण्यविशेषः, तत्प्रभावेण ज्ञानक्रमेण महान्तं शब्दात्मानं सर्वेषामन्तरवस्थितमात्मभूतमभिसम्भवन् = आत्मतया साक्षात्कारेण तद्रूपतामापद्यमानः, वैकरण्यम् = जीवन्मुक्तिकाले करणसम्बन्धाभिमानराहित्यम्, विदेहकैवल्ये च सर्वकरणराहित्यरूपं मोक्षं प्राप्नोतीत्यपरः प्रकारः । स वैयाकरणोऽव्यतिकीर्णाम् = कत्वखत्वादिपदत्ववाक्यत्वादितारमन्द्रत्वादिवर्णानुपूर्व्यादिधर्मैरसङ्कीर्णाम् , वागवस्थां स्फोटाख्यां मध्यमां व्याकरणेन वैखरीज्ञानात् परमधिगम्य तदनु सर्वेषां वाग्विकाराणां प्रकृतिं प्रतिभाख्यां परैति प्राप्नोति ।

तथा हि—येयं समस्तशब्दार्थकारणभूता बुद्धिः, यां पश्यन्तीत्याहुः, यतः शब्दाः प्राणवृत्तिमनुपतन्ति, तां प्रतिभां क्रमेणानुप्राप्नोति वैयाकरणः । तस्माच्च प्रतिभाख्यात् सत्तानुगुण्यमात्रात् = सत्तयोपलक्षिता ये सर्वे भावविकारास्तज्जनकत्वमात्रस्वरूपात् परं प्रागुक्तस्य शब्दपूर्वयोगस्य या भावनारूपा प्राप्तिस्तस्या अभ्यास आवृत्तिस्तस्य आक्षेपः पराप्रकृतिसाक्षात्काररूपस्वकार्योत्पादनाभिमुख्यम्, तस्मात् प्रत्यस्तमितः सर्वविकाराणामुल्लेखो भानं यत्र, तन्मात्रस्वरूपां परां प्रकृतिं प्रतिपद्यत इति तृतीयः प्रकारः । स्पष्टं चेदं हर्युपज्ञवृत्तौ तट्टीकायां च वृषभदेवकृतायाम् ।

**यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः ।**
**तथैव लोके विद्यानामेषा विद्या परायणम् ।।१५।।**

वाङ्मलानां चिकित्सितम् । आयुर्वेद इव शारीराणां दोषाणाम् । व्याकरणज्ञो हि प्रत्यवायहेतुभूतानपभ्रंशान्न प्रयुङ्क्ते । 'ज्ञानं हि तस्य शरणम्' इत्युक्तम् । उक्तं च—

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

तथायमप्रमत्तगीतश्लोकः—

आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमं च मन्त्राः ।
तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ॥

अधिविद्यं प्रकाशते । सर्वो हि प्रायेण स्वस्यां विद्यायां व्याकरणमनुगच्छति, अपभ्रंशप्रयोगेण च नियतमपत्रपते ॥ १४ ॥

वाङ्मलानां चिकित्सितम् । आयुर्वेदो यथा शारीराणां दोषाणां चिकित्सितम्, तथा व्याकरणं वाङ्मलानां चिकित्सितम् । व्याकरणज्ञो हि प्रत्यवायहेतुभूतानपभ्रंशान्न प्रयुङ्क्ते । ज्ञानं हि तस्य शरणमित्युक्तं भाष्ये ।

पवित्रं सर्वविद्यानामिति । व्याकरणनिमित्तकः शब्दसंस्कारः साधुत्वज्ञानरूपः संस्कृतशब्दोपज्ञातश्च सर्वासु विद्यास्वर्थः । तदुक्तम्—

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

अयमर्थः—यदधीतं शब्दतः, अविज्ञातमर्थतः, निगदेन पाठमात्रेणैव, न त्वर्थज्ञानपूर्वकम् । शब्द्यते उच्चार्यते । तद् अधीतम् , अनग्नौ शुष्कैध इव कर्हिचिद् न ज्वलति । अत्र ज्वलनं स्वकार्यकरणम् ।

अयं भावः—यथा काष्ठादि ज्वलनसमर्थमप्यग्निनाऽनुपगृहीतं न ज्वलति, तथा सा विद्याभ्युदयकार्यकरणसमर्थाऽपि व्याकरणेनानुपगृहीता न स्वकार्यं करोति ।

तथाऽयमपरोऽप्यप्रमत्तगीतः श्लोको व्याकरणस्य त्रयीमूलाभ्यः सर्वविद्याभ्यः पवित्रत्वं प्रकाशयति—

आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमं च मन्त्राः ।
तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ॥ इति ।

अधिविद्यं प्रकाशत इति सर्वो हि शास्त्रकृत् प्रायेण स्वस्यां विद्यायां व्याकरणमनुसरति, अपभ्रंशप्रयोगे च नियतमपत्रपत इत्येवं सर्वासु विद्यासु प्रकाशमानत्वं व्याकरणस्येति ॥ १४ ॥

**यथार्थजातय इति ।** अर्थगता जातिः शक्या, शब्दगता जातिश्च शक्ता, लाघवात् । व्यक्तीनां तु न शक्यत्वं शक्तत्वं वा, प्रत्येकं तत्त्वे तासामानन्त्येन गौरवात्; एकस्या एव तत्त्वे व्यभिचारात् , विनिगमनाविरहाच्च । तथा च यथाऽर्थगता जातयः शब्दाकृतिनिबन्धनाः शब्दगता जातिर्घटपदत्वादिरूपा निबन्धनं ज्ञापकं निमित्तं यासां तास्तथाभूताः, शब्दाकृतिर्ज्ञाप्या इत्यर्थः ।

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।१६।।**
**अत्रातीतविपर्यासः केवलामनुपश्यति ।**
**छन्दस्यश्छन्दसां योनिमात्मा च्छन्दोमयीं तनुम् ।।१७।।**
**प्रत्यस्तमितभेदाया यद्वाचो रूपमुत्तमम् ।**
**यदस्मिन्नेव तमसि ज्योतिः शुद्धं विवर्तते ।।१८।।**

---

तथैव लोके एषा विद्या = व्याकरणविद्या, सर्वासां विद्यानां परायणम्, परमयनम्, परमो मार्गः । सर्वासु विद्यासु प्रवेशोपाय इत्यर्थः । सर्वासां विद्यानां ज्ञानसाधनमिति यावत् । अत्र विद्याशब्दस्य ज्ञानसाधने वाक्यसन्दर्भे प्रयोगः ।। १५ ।।

**इदमाद्यं पदस्थानमिति** । इदं व्याकरणम्, सिद्धिसोपानपर्वणाम् , सिद्धिर्मोक्षः, तस्य या अन्तरालावस्था भूमिकासप्तकादयो योगशास्त्रप्रसिद्धास्तास्तत्प्राप्तौ सोपानतुल्यत्वात् सोपानानि, तेषां प्रत्येकं विभागाः पर्वाणि, तेषां मध्ये प्रथमं पर्व इयं व्याकरणविद्या । मोक्षमाणानां पुंसां सा 'मुखं व्याकरणं प्रोक्तम्' इत्यादिशास्त्रप्रसिद्धा विद्वदनुभवसिद्धा च, अजिह्माऽवक्रा सरला राजपद्धती राजमार्गः, मोक्षप्राप्तावित्यर्थः ।। १६ ।।

**अत्रातीतविपर्यास इति** । अत्र व्याकरणेऽतीतविपर्यासो भ्रान्तिरहितोऽत एव छन्दस्यः छन्दसि साधुः, रक्षकत्वात् । तदुक्तं भाष्ये—"रक्षोहागमलघ्वसन्देहाः प्रयोजनम्"[4] इति । आत्मा पुरुषः, छन्दसां वेदानां योनिं साधुशब्दरूपां वाचमनु तद्दर्शनानन्तरम्, छन्दोमयीं तनुम्, परमं वेदरूपम्, पश्यति इति योजना ।

वृषभदेवस्तु—छन्दस्य इति । छन्दसां समूहः, समूहार्थे औपसंख्यानिकस्तद्धितः । 'ओ श्रावय' इति चतुरक्षरम्, 'ये यजामहे' इति पञ्चाक्षरम्; 'अस्तु श्रौषड्' इति चतुरक्षरम्, 'यज' इति द्व्यक्षरम् । द्व्यक्षरो वषट्कारः । 'एष वै सप्तदशाक्षरश्छन्दस्यः' एतदाह । छन्दस्य आत्मा व्याकरणादपगतशब्दार्थविपर्यासः, छन्दोमयीं तनुं परमं वेदरूपं पश्यतीति व्याचख्यौ । तत्र छन्दःसमूहस्य शब्दरूपस्य परमार्थतो ज्ञानरूपतया यद्यप्यात्मत्वं सम्भवति, आत्मरूपतया च पश्यतीति दर्शनकर्तृत्वमपि सम्भवति, तथापि सैष महतो वंशस्तम्बाल्लट्वानुकर्षणप्रयासः किमर्थमिति न विद्मः ।। १७ ।।

व्याकरणमेव पञ्चभिः पद्यैः कुलकेन स्तौति—**प्रत्यस्तमितभेदाया इति** । प्रत्यस्तमिताः प्रलयं गता अभिव्यञ्जकध्वनिकृता भेदा यस्यां सा तथाभूता परा वाक् तस्या यद् ब्रह्म उत्तमं रूपम् । किञ्च, यद् ब्रह्म शुद्धं सर्वधर्मविवर्जितं ज्योतिर्ज्ञानम् । अस्मिन् अहमज्ञ इत्याद्यनुभवसिद्धे तमसि, अज्ञानरूपे निमित्ते सत्येव, प्रपञ्चाकारेण विवर्तते, नान्यथा इत्यर्थः । यदस्मिन्नेवेत्यत्र अग्निनेवेति पाठः, तदा अग्निना तुल्यमित्यर्थः । अत्रेवशब्दस्तुल्यार्थेऽतस्तृतीया । न तु सादृश्यार्थे । अतो न प्रथमा ।। १८ ।।

**वैकृतं समतिक्रान्ता मूर्तिव्यापारदर्शनम् ।**
**व्यतीत्यालोकतमसी प्रकाशं यमुपासते ।।१९।।**
**यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः ।**
**शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ।।२०।।**
**अथर्वणामङ्गिरसां साम्नामृग्यजुषस्य च ।**
**यस्मिन्नुच्चावचा वर्णाः पृथक्स्थितिपरिग्रहाः ।।२१।।**
**यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते ।**
**तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते ।।२२।।**

---

**वैकृतं समतिक्रान्ता इति** । वैकृतं विकृतौ मायायाः परिणामे ब्रह्मणस्तु विवर्ते प्रपञ्चे भवं वैकृतम् । मूर्तिव्यापारदर्शनम्, मूर्तिश्च व्यापारश्चेति द्वन्द्वः । मूर्त्याः परिच्छिन्नस्य जगद्रूपस्य व्यापारस्य क्रियायाश्च दर्शनमनुभवः, तं समतिक्रान्ता भेददर्शनस्यासत्यत्वाद् अभेददर्शने व्यवस्थिता योगिनः । आलोकतमसी प्रकाशकत्वाप्रकाशकत्वसाधर्म्याद् विद्याविद्ये, व्यतीत्य स्थितं विद्याविद्ययोरगोचरम् । शुद्धे ब्रह्मणि वृत्तिविषयत्वमप्यनभ्युपगम्येदमुक्तम् । यं ब्रह्मरूपं प्रकाशमुपासते, निर्विकल्पसमाधिना साक्षात्कुर्वन्तीत्यर्थः ॥ १९ ॥

**यत्र वाचो निमित्तानीति** । यत्र ब्रह्मणि, चिह्नानि लिपयः, अक्षरस्मृतेरिव, वाचः पदरूपा निमित्तानि ज्ञापकहेतवः, सर्वशब्दानां घटत्वादिरूपासत्योपाध्यवच्छिन्नं ब्रह्मैव वाचमित्यभ्युपगमात् । उक्तं चेदं—'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र कैयटे । शब्दपूर्वेण योगेन साधुशब्दतादात्म्यापन्नात्मविषयकसविकल्पसमाधिना, प्रतिबिम्बवद् भासन्ते स्वच्छे जलादौ प्रतिबिम्बमिव ब्रह्मणि सर्वे शब्दा भासन्ते । वाच्यवाचकयोस्तादात्म्यादिति भावः ॥ २० ॥

**अथर्वणामङ्गिरसामिति** । अङ्गिरसामित्यथर्वणामित्यस्य व्यधिकरणं विशेषणम् । अत एव 'अथर्वाऽऽङ्गिरसः' इति श्रूयते स्मर्यते च पुराणेषु । अङ्गिरसामित्यनेन चात्र शाखानिर्देशः । एवञ्च 'अङ्गिरसामित्युपनिषदेकदेशस्य नाम' इति वृषभदेवोक्तमुपनिषद्रूपस्य वेदैकदेशस्य नामेत्यर्थकम् । अङ्गिरसाम् = अङ्गिरोगोत्राणां तेऽथर्वाणस्तत्संज्ञका मन्त्रास्तेषाम् । यद्यप्यन्यशाखीयानामप्यथर्वणां वर्णा ब्रह्मण्येव वाचकत्वेन स्थिताः, 'वेदैश्च सर्वैरहमेव वेद्यः' इति स्मरणात् । तथाप्यङ्गिरसामित्युल्लेखस्तच्छाखायाः प्राशस्त्यख्यापनार्थः, न त्वितरनिवृत्तौ तात्पर्यम् । साम्नामृग्यजुषस्य च । उच्चावचा विषमा विजातीया वर्णा यस्मिन् ब्रह्मणि पृथक् स्थितपरिग्रहाः, पृथक्स्थिता ब्रह्मणोऽन्यत्राविद्यायां स्थिता अपि परिग्रहाः, परिगृह्णन्ति अवबोधयन्ति ब्रह्म इति परिग्रहाः, पचाद्यच् । अत्र ग्रहधातुरन्तर्भावितण्यर्थः ॥ २१ ॥

**यदेकं प्रक्रियाभेदैरिति** । यद् ब्रह्म एकमपि प्रक्रियाभेदैर्बहुधा प्रविभज्यते = प्रविभागेण भेदेनोपवर्ण्यते, शिवविष्ण्वादिभेदेन, विराड्हिरण्यगर्भपूर्वेणान्तर्याम्यादिभेदेन च । तत्परं ब्रह्म

**नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः ।**
**सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः ।।२३।।**

नित्यः शब्दो नित्योऽर्थो नित्यः सम्बन्ध इत्येषा शास्त्रव्यवस्था। तत्र हि शब्द इत्यनेन शब्दाकृतिरभिधीयते। एवं ह्याह—"आकृतिनित्यत्वान्नित्यः शब्दः" इति। आकृतिप्रयुक्तं चेदं शास्त्रम्। तथा हि "आकृत्युपदेशात् सिद्धम्" (भा०वा० १/१/२१) इत्याह। सा चेयमाकृतिः शब्दत्वसामान्यविशेषादन्या। शब्दत्वं हि विरुद्धैकार्थसम-

व्याकरणमागम्य ज्ञात्वाऽधिगम्यते प्राप्यते, साक्षात्क्रियत इति यावत्। व्याकरणात् तत्प्राप्तिप्रकारश्च तद्द्वारमपवर्गस्येति कारिकाव्याख्यावसर उक्त एव॥ २२ ॥

एवं व्याकरणप्रयोजनमभिधाय शास्त्रव्यवस्थाकथनद्वारा तेन प्रयोजनेन सहास्य प्रकरणग्रन्थस्य सम्बन्धमनुबन्धरूपतयाऽभिधातुमुपोद्घातं विरचयति—**नित्याः शब्दार्थसम्बन्धा इति ।**

तत्र व्याकरणे सानुतन्त्राणां सवार्त्तिकानाम्, सूत्राणाम्, भाष्याणाञ्च चूर्णिकादीनाम्, सन्देहचूर्णकत्वेन चूर्णिकाव्यपदेशः। प्रणेतृभिर्महर्षिभिः पाणिन्यादिभिः शब्दार्थसम्बन्धा नित्याः समाम्नाताः सम्यग् अभ्यासेन चोक्ता इति योजना।

भाष्यं हि चूर्णिकारूपं पस्पशाख्यं प्रथममाह्निकम्, यत्र शास्त्रानारम्भसमर्थका वादिनश्चूर्णिताः। 'स्पश् बाधने' इत्यस्य च यङ्लुगन्तस्य पृषोदरादित्वात् 'पस्पशा' इति रूपं चूर्णिकासमानार्थमेव। अग्रे च भाष्यमुक्तानुक्तदुरुक्तचिन्तादिरूपतया बहुविधम्।

तत्र नित्यः शब्दो नित्योऽर्थो नित्यः सम्बन्ध इत्येषा शास्त्रव्यवस्था। एषां नित्यत्वे चासति न शास्त्रं व्यवतिष्ठते। शब्दार्थसम्बन्धानामनित्यत्वे हि तत्र पुरुषाणां स्वातन्त्र्ये शब्दार्थसम्बन्धाः स्वेच्छयाऽन्यथापि कृतास्तु भवेयुरिति शब्दार्थसम्बन्धानां स्वविषयाणामव्यवस्थया शास्त्रमपि न व्यवतिष्ठेत। तेषां नित्यत्वे तु सर्वस्यापि व्याकरणशास्त्रस्य विभिन्नकर्तृकस्यैकविधशब्दार्थसम्बन्धज्ञापकतया व्यवस्थोपपत्तिः। तत्र नित्यः शब्दः, नित्योऽर्थ इति आकृतिनिर्देशः। जातिर्हि नित्या, शब्दार्थव्यक्तीनां तु प्रत्यक्षेणैवोत्पादविनाशानुभवात्। शब्दार्थसम्बन्धस्तु स्वरूपेणैव नित्यः, समवायवत्। तत्र शब्दाकृतेर्नित्यत्वमुक्तं भाष्ये—"आकृतिनित्यत्वान्नित्यः शब्दः" (वा० १/१/२१) इति। किञ्च, अर्थाकृतिं शब्दाभिधेयमङ्गीकृत्य व्याकरणशास्त्रं प्रवृत्तम्, व्यक्तीनामानन्त्येन तत्र शक्तिकल्पने गौरवात्, प्रत्येकं तत्र शक्तिकल्पने व्यभिचारात्, विनिगमनाविरहाच्च। अतोऽभिधानमपि शब्दाकृतिरूपमेव युक्तम्, सम्भवाल्लाघवादानुरूप्याच्च। तथा हि—यथा जातेरभिधेयत्वसम्भवः, तथा जातेरभिधानत्वसम्भवोऽपि। जातेः शक्तत्वे लाघवं तु स्फुटमेव। तदुक्तम्—

"शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम्" इति।

आनुरूप्यं च जातेरभिधानेऽनुरूपा जातिरेव सादृश्यादिति। जातेरभिधेयत्वमप्युक्तं भाष्ये—"आकृत्युपदेशात् सिद्धम्" (वा० १/१/२१) इति। सा चेयमभिधानरूपा शब्दाकृतिर्न शब्दत्वगुणत्वादिरूपजातिसामान्यविशेषरूपा, किन्तु वृक्षशब्दत्वादिरूपजातिविशेषरूपा तदन्या।

शब्दत्ववृक्षशब्दत्वयोर्भेदस्त्वेवम्—गोशब्दत्ववृक्षशब्दत्वयोर्व्याप्यजातिर्विशेषविरुद्धः समवायः, एकत्रार्थेऽसमवायात्। वृक्षशब्दत्वादिभिर्जातिविशेषैस्तु सहशब्दत्वस्याविरुद्धः समवायः, एकत्रार्थे

वायिनीभिराकृतिभिः सर्वाभिरविरुद्धैकार्थसमवायम्।

शब्दाकृतिविशेषा हि वृक्षशब्दत्वादयः सति वस्तुसम्प्रमोहे निमित्तसरूपतामापन्ना अभिव्यक्ताः शब्दा इत्यपदिश्यन्ते।

यथा हि घटे द्रव्यत्वपृथिवीत्वघटत्वादीनामविरुद्धः समवायः, तथा वृक्षशब्देऽपि गुणत्वशब्दत्ववृक्षशब्दत्वादीनामाकृतिविशेषाणामविरुद्धः समवायः।

ननु व्यवस्थितावयवेषु घटादिष्ववयवी सामान्यविशेषाभिव्यक्तिहेतुः। अनवस्थितावयवास्तु शब्दव्यक्तिविशेषाः। तैस्त्वसमजन्मभिरयुगपत्कालैरव्यपदेश्यरूपैरवयवैरविद्यमानानेकसमवायिकारणं शब्दान्तरमारब्धुं न शक्यते, यत्राकृतिविशेषाणां समवायः स्यात्। शब्दत्वं तु प्रत्यवयवं परिसमाप्यते।

---

व्याप्यव्यापकयोर्द्वयोरपि तयोः समवायात्। ततश्च यथा यस्य येन सह समानकाले एकत्रार्थे नियतमसन्निधानं तयोर्भेदः, यथा गोशब्दत्ववृक्षशब्दत्वयोः। तथैव यस्य येन सह समानकाले एकत्रार्थे नियतं सन्निधानमसन्निधानञ्च तयोरपि भेदः। तथा च समानकाल एव शब्दत्ववृक्षशब्दत्वयोरेकत्रार्थे वृक्षशब्दरूपे सन्निधानम्, गोशब्दे च एकस्य सन्निधानेऽप्यपरस्यासन्निधानेन द्वयोरसन्निधानं दृश्यत इति तयोर्भेदः। यतो वृक्षशब्दत्वं विरुद्धेऽविरुद्धे चार्थे युगपन्न सन्निधत्ते, शब्दत्वं तु सन्निधत्ते; गोशब्दवृक्षशब्दयोयरुभयोरपि समवायादिति युगपद् विरुद्धार्थसन्निधानासन्निधानकृतस्तयोर्भेदः। यथा हि घटे द्रव्यत्वपृथिवीत्वघटत्वादीनामविरुद्धः समवायः, तथा वृक्षशब्देऽपि गुणत्वशब्दत्ववृक्षशब्दत्वादीनामविरुद्धः समवायः।

ननु तथापि यथा घटत्वजातेर्घटत्वमिति व्यपदेशः, न तु घट इति, यथा वृक्षशब्दत्वादिरूपाया अपि जातेः शब्दत्वमिति व्यपदेशः स्यात्, न तु शब्द इति; इति चेत्, न, जात्युपरागरहितं वस्तु वस्तुसामान्यरूपतया सर्वासां पदशक्तीनां विषयीभूतमिति परस्परव्यावृत्त्यनवधारणे सति यदा सम्प्रमुग्धं भवति, तदा वस्तुविशेषं बोधयितुं वक्तृविवक्षाविशेषसमुपजातप्रयत्नविशेषसमुत्पादितध्वनिविशेषाभिव्यक्तस्वाश्रयव्यक्तिविशेषाभिव्यक्ता वृक्षशब्दत्वादयः स्वाभिव्यक्तिनिमित्तवृक्षशब्दादिव्यक्तिसरूपतामापन्नाः शब्दा इति व्यपदिश्यन्ते।

ननु यौगपद्येनावस्थिता एव घटादीनामवयवा घटादिकमवयविद्रव्यमारभन्ते, तत्र घटत्वादिसामान्यं विशेषाभिव्यक्तिहेतुः, वृक्षशब्दादीनां शब्दव्यक्तिविशेषाणामवयवास्तु युगपदनवस्थिताः, उत्तरोत्तरवर्णोत्पादे पूर्वपूर्ववर्णविनाशदर्शनात्। अतस्तैरसमकालजन्मभिरयुगपदवस्थितैर्वृक्षशब्दाद्यभिव्यक्तिसामर्थ्याभावादवयवत्वेनाव्यपदेश्यैः शब्दान्तरं वृक्षशब्दादिरूपमारब्धुं न शक्यते, यत्र वृक्षशब्दत्वादिरूपाणामाकृतीनां समवायः स्यात्। शब्दत्वरूपाकृतिस्तु प्रत्यवयवं परिसमाप्तेति न तदाश्रयरूपमवयविशब्दान्तरमपेक्षते।

तद्वच्चाकृतिविशेषस्य प्रत्यवयवं परिसमाप्तिर्यदि प्रतिज्ञायते, अवयवमात्रोच्चारणे वृक्षादिशब्दविशेषाकारावग्रहा वकारादिष्ववयवेषूच्चरितेषु केवलेष्वपि बुद्धिः प्राप्नोति। नैष दोषः, यथैवोत्क्षेपणभ्रमणरेचनादीनामुत्पन्नापवर्गिणां कर्मविशेषाणाम्, न च तावदवयवैः कर्मान्तरमवयविस्थानीयं किञ्चिदारभ्यते। न च कर्मत्वव्यतिरेकेणोत्क्षेपणत्वादीनां जातिविशेषाणां समवायो नाभ्युपगम्यते।

न च कर्मावयवमात्रदर्शने भ्रमणादिकर्मविशेषाकारावग्रहाः प्रत्यया उत्पद्यन्ते। तानि ह्यवयवकर्माणि विशिष्टप्रयत्नहेतुकानि प्रत्यवयवमुत्क्षेपणत्वादीनामाधारत्वमपि प्रतिपद्यमानानि दुरवधारत्वाद्विशेषस्य विशिष्टजातिविषयां बुद्धिं न प्रकल्पयन्ति।

विशिष्टापि हि सा बुद्धिरनभिव्यक्तोपव्यञ्जनविशेषपरिग्रहा। तस्मात् तया व्यवहर्तुं न शक्यते।

---

यदि तु शब्दत्ववदेवैकवर्णरूपावयवपरिसमाप्तिराकृतिविशेषस्य वृक्षशब्दत्वस्य प्रतिज्ञायते, तदा केवलेष्वपि वकारादिष्ववयवेषूच्चारितेषु वृक्षादिशब्दविशेषाकारावग्राहिणी बुद्धिः स्यादिति चेत्, नैष दोषः, यथैवोत्क्षेपणभ्रमणरेचनादयः कर्मविशेषा उत्पन्नापवर्गिणः = उत्पन्नविनष्टाः। तथा हि—उत्क्षेपणादीनामवयवत्वेनाभिमत एकैकः कर्मलक्षणो भावः पूर्वपरयोः परमाणुमात्रयोर्देशयोर्विभागसंयोगसमर्थः परेण देशेन संयोगाख्यं स्वकार्यं सम्पाद्य निवर्तते, संयोगरूपकार्यस्य स्वकारणकर्मनिरोधित्वात्। न चाविनष्टे पूर्वस्मिन् कर्मरूपे भागे उत्तरस्य कर्मभागस्योत्पत्तिः, विरोधात्। अतस्ते सर्वेऽप्युत्क्षेपणादिकर्मांशा उत्पन्नापवर्गिण इत्यतः कर्मान्तरसहितैः कर्मविशेषैर्नान्यत्कर्मावयविस्थानीयमुत्क्षेपणादिकमारभ्यते, यत्रोत्क्षेपणत्वादिजातिविशेषाणां समवायः स्यात्। न च कर्मत्वभिन्नानामुत्क्षेपणत्वादीनां जातिविशेषाणां समवायो नाभ्युपगम्यते, किन्तु कर्मत्वजातेरन्या उत्क्षेपणत्वादिजातयस्तेषु कर्मांशेषु समवेता अभ्युपगम्यन्त एव **वैशेषिकैः**।

न च कर्मावयवमात्रदर्शने कर्मप्रबन्धादर्शने च भ्रमणादिकर्मविशेषाकारावग्रहाः प्रत्यया उत्पद्यन्ते। यद्यपि भ्रमणकर्मणो यः प्रथमः क्षणस्तस्योत्क्षेपणाद् विशेषो नावधार्यते, तथापि तत्र भ्रमणत्वजातिसमवायेऽपि स तज्जात्यनुरूपप्रत्ययोत्पादनेऽसमर्थः, परमाणुमात्रे देशे आक्रमणमात्रस्योत्क्षेपणभ्रमणयोस्तुल्यत्वात्। न तु तत्र भ्रमणत्वं जातिर्नास्तीत्यवधार्यते। तानि ह्युत्क्षेपणादीनामवयवकर्माणि प्रयत्नविशेषहेतुकानि प्रत्यवयवमुत्क्षेपणत्वादीनामाधारत्वमपि प्रतिपद्यमानानि कर्मावयवप्रबन्धदर्शनं विनोत्क्षेपणत्वादिजातिविशेषस्य दुरवधारत्वादुत्क्षेपणत्वादिरूपविशिष्टजात्युपहितकर्मविषयां बुद्धिं प्रबन्धादर्शने न प्रकल्पयन्ति।

तथा हि—'अन्य एव प्रयत्न उत्क्षेपणस्य जनकोऽन्यो भ्रमणस्य' उत्क्षिपामि, भ्रमामीति भिन्नप्रत्ययजननात्। ते च प्रयत्ना भिद्यमाना अवश्यमेव स्वार्थेषूत्क्षेपणादिषु भेदं जनयन्ति। स तु भेदः सूक्ष्मत्वाद् दुरवधारः प्रत्यवयवम्। उत्क्षेपणत्वादिरूपा जातिविशेषास्तु तत्र प्रत्यवयवं सन्त्येव, यत उत्पन्नमात्रे एवैकैकस्मिन्नवयये स्वजातेरुत्क्षेपणत्वादिरूपायाः समवायो निष्ठा = स्थितिश्च तुल्यकालमेव भवति। उत्क्षेपणत्वादिजातिविशेषविशिष्टकर्मविषयाऽपि सा बुद्धिः कर्मांशानां प्रबन्धस्य सातत्यरूपस्य क्रमेणोपलब्धिरूपमुपव्यञ्जनविशेषं

यदा तु दिग्विशेषावधिपरिच्छिन्नसंयोगविभागकार्य्याणां कर्मणां प्रबन्धः क्रमेणोपलब्धो भवति, अथ जातिविशेषोपाधियुक्ता व्यवहाराः प्रकल्पन्ते।

तथा वृक्षादिष्वपि शब्देषु यत्नविशेषजनिता विशिष्टा वकारादयो दुर्ज्ञानाविशेषा यद्यपि प्रत्यवयवं शब्दजातिविशेषाभिव्यक्तिं कुर्वन्ति, तथाप्यपरिगृहीतानेकोपव्यञ्जनविशेषाभिस्ताभिः शब्दाकृतिभिर्व्यवहर्तुं न शक्यते।

यदा त्ववयवप्रबन्धः क्रमेणोपलब्धो भवति, अथ जातिविशेषोपाधियुक्ता व्यवहारा अवतिष्ठन्ते।

---

स्वाभिव्यक्तये परिगृह्णाति = स्वीकरोति। अतः कर्मांशानां प्रबन्धादर्शने प्रत्यवयवं वर्तमानाऽप्यनभिव्यक्ता, अतस्तया तत्र व्यवहर्तुं न शक्यते।

एतदुक्तं भवति—प्रत्यवयवमुत्क्षेपणत्वादिजातिस्तद्बुद्धिश्चेति द्वयमप्यस्त्येव, किन्त्वस्फुटेति न तया बुद्ध्या तद्विषयको व्यवहारस्तत्रेति। यदा तु उत्क्षेपणादिकर्मणां संयोगरूपं विभागरूपं वा कार्यं दिग्विशेषरूपेणावधिना परिच्छिन्नं गृह्यते, तदा कर्मणां प्रबन्धः=अध्यवहिता परम्परा क्रमेणोपलब्धा भवति, तदा उत्क्षेपणत्वभ्रमणत्वादिरूपजातिभेदरूपोपाधियुक्ता उत्क्षेपणं भ्रमणमित्यादयो व्यवहाराः प्रकल्पन्ते भेदेन, उत्क्षेपणभ्रमणयोः संयोगविभागरूपकार्यभेदात्। जातिभेदरूपोपाधियुक्ता इत्यत्रोपाधिर्व्यावर्तको धर्मः। तथा च यथा प्रत्यवयवमनभिव्यक्तोपव्यञ्जनविशेषपरिग्रहाभिरुत्क्षेपणत्वादिजातिभिर्व्यवहर्तुं न शक्यते, तथा वृक्षवृकादिशब्देष्वप्यगृह्यमाणानेकवर्णव्यक्तिप्रबन्धरूपोपव्यञ्जनविशेषाभिर्वृक्षशब्दत्ववृकशब्दत्वादिरूपाभिः शब्दाकृतिभिर्व्यवहर्तुं न शक्यते।

तथा हि—यद्यपि वृक्षवृकादिशब्देषु वृक्षशब्दमुच्चारयाणीत्यभिप्रायेण वृक्षशब्दोच्चारणेऽन्यः प्रयत्नः, वृकशब्दमुच्चारयाणीत्यभिप्रायेण च वृकशब्दोच्चारणेऽन्यः प्रयत्नः। एवं प्रयत्नभेदे सत्यपि वृक्षवृकशब्दयोर्वकारस्य भेदो नोपलभ्यते, जनकप्रयत्नभेदात्तु भेदोऽस्त्येव। न तु दुरवधारः। तदनवधारणाच्च वकारमात्रश्रुतौ वृक्षशब्दत्वरूपजातिविशेषपरिच्छेदो वृकशब्दत्वरूपजातिविशेषपरिच्छेदो वा नास्ति। यतो वृक्षशब्दत्वादिजातीनामनेकस्य वकारादिरूपस्योपव्यञ्जनस्य यो विशेषो भेदो विशिष्टप्रयत्नकृतः, अनेको वा वकारादिरूपव्यञ्जनविशेषः प्रयत्नादिकृतः, सोऽपरिगृहीत इत्यभिव्यञ्जके वृक्षवृकशब्दयोर्वकारादौ सारूप्यादेकत्वविषयकभ्रान्तप्रत्ययसम्भवेन वर्णप्रबन्धविषयकप्रत्यवमर्शप्रत्ययाभावेन च प्रत्यवयवं वृक्षशब्दत्वादिभिर्व्यवहर्तुं न शक्यत इति।

अन्ये त्वाहुः—यदा वृक्षशब्दत्वादेरेकं वर्णभागं गृह्णाति, न सर्वं सकृत् , तदाऽनेक उपव्यञ्जनविशेषो वर्णभागोऽपरिगृहीतोऽपरिच्छिन्नो वृक्षशब्दत्वादिजातेरिति न तदा तया व्यवहर्तुं शक्यत इति।

इदं तु न शोभनम् , वृक्षशब्दत्वादिजातेर्नित्यत्वेन निरवयवत्वेन च भागासम्भवात्। यदा तु वृक्षादिशब्देष्ववयवप्रबन्धः क्रमेणोपलब्धो भवति, तदा वृक्षशब्दत्वादिरूपजातिविशेषोपाधियुक्ता व्यवहारा अवतिष्ठन्ते।

न चावश्यं शास्त्रान्तरे परिदृष्टा जात्यभिव्यक्तिप्रक्रिया वैयाकरणैः परिगृह्यते। न ह्यभिव्यक्तिमतामभिव्यञ्जकैराश्रितानामेवाभिव्यक्तिर्नियमेन क्रियते। तत्रासत्यपि शब्दव्यक्तिसमवाये शब्दाकृतेर्वर्णावयवावग्रहप्राप्तसंस्काराभिः क्रमोत्पन्नाभिर्बुद्धिभिः पूर्वमगृहीता, अव्यक्तं गृहीता वा संस्कृतेऽन्तःकरणे चरमविज्ञानेनाकृतिः परिच्छिद्यते।

तस्यास्तु शब्दाकृतेरस्तित्वं शुकसारिकामनुष्यादिप्रयुक्तेषु वृक्षादिशब्दव्यक्तिविशेषेषु 'स एवायम्' इति प्रत्ययाभेदादनुमीयते।

---

नन्वेतान्युत्क्षेपणत्वादीनि सामान्यान्यनुगताकारप्रत्ययवेद्यानि, अत एव प्रबन्धाभिव्यक्तसत्त्वानीति प्रबन्धाभावे कथमवयवेषु सन्तीति कल्प्यन्ते। किञ्चाभिव्यक्तिः सत एव वस्तुनो व्यञ्जकेन तद्विषयकज्ञानोत्पादनम्, कर्मावयवेषूत्क्षेपणत्वादिजात्यभावाच्चाभिव्यक्तिरपि न भवति। किञ्च, समानजातीयकेषु कर्मावयवेषु प्रबन्धप्रवृत्तेषूत्तरोत्तरमुत्क्षेपणत्वादिजातिज्ञानस्य स्फुटतरस्योत्पत्तिः सम्भाव्यते, न तु भिन्नस्वभावेषु भिन्नजातीयेषु च वर्णेषु प्रबन्धेनोपलब्धेषु तथा।

किञ्च, वृक्षशब्दत्वादिरूपा शब्दत्वादपरा जातिर्नाङ्गीकृता व्यक्तौ जातिसंसर्गमङ्गीकुर्वद्भिरिति चेत्, न, यतः शास्त्रान्तरे परिदृष्टा जात्यभिव्यक्तिप्रक्रिया नावश्यं वैयाकरणैः परिगृह्यते। न हि स्वाश्रितानामेवाभिव्यङ्ग्यानामभिव्यञ्जकैरभिव्यक्तिर्नियमेन क्रियते, प्रदीपालोकेन्द्रियादिभिरभिव्यञ्जकैः स्वानाश्रितानामेव घटादीनामभिव्यक्तिदर्शनात्। कदाचित्तु स्वाश्रितानामभिव्यक्तिः क्रियते, यथा प्रदीपेन रूपस्य स्वगतस्य। एवञ्च वृक्षशब्दत्वादिरूपाया जातेरसत्यपि वृक्षशब्दादिरूपशब्दव्यक्तिसमवाये पूर्वपूर्ववर्णरूपावयवग्रहजनितसंस्कारसहकृताभिः क्रमोत्पन्नाभिरुत्तरोत्तरवर्णबुद्धिभिरन्तःकरणे संस्कृते सति पूर्वमगृहीता, अव्यक्तं गृहीता वा वृक्षशब्दत्वादिरूपाकृतिश्चरमवर्णविज्ञानेन परिच्छिद्यते = निश्चीयते। पूर्वपूर्ववर्णावयवबुद्धिभिर्वृक्षशब्दत्वादिरूपा जातिर्न गृह्यते, ग्रहणे ह्युत्तरोत्तरवर्णोच्चारणानर्थक्यमिति पूर्वमगृहीतत्वोपपत्तिः। यद्वा पूर्वपूर्ववर्णावयवबुद्धिभिर्वृक्षशब्दत्वादिजातेर्ग्रहणं भवति, तद्ग्रहणानुकूलत्वात् तासाम्। अन्यथा चरमवर्णविज्ञानेनापि सा न परिच्छिद्येत, किन्तु पूर्वपूर्ववर्णावयवबुद्धिभिरव्यक्तं ग्रहणं वृक्षशब्दत्वादिजातेः, तारतम्येन चोत्तरोत्तरमभिव्यक्तिः। अत एव वक्ष्यति—

प्रत्येकं व्यञ्जका भिन्ना वर्णा वाक्यपदेषु ये।
तेषामत्यन्तभेदेऽपि सङ्कीर्णा इव शक्तयः॥

(वा० १, का० ८९)

एवमपि पूर्वमव्यक्तं गृहीतत्वोपपत्तिः।

तस्यास्तु शब्दाकृतेरस्तित्वं शुकसारिकामनुष्यादिप्रयुक्तेषु वृक्षादिशब्दव्यक्तिविशेषेषु 'स एवायम्' इति प्रत्ययाभेदादनुमीयते।

यैरप्ययमाकृतिव्यवहारो नाभ्युपगम्यते, तेऽप्यनेकध्वनिव्यङ्ग्यां नित्यां शब्दव्यक्तिमेव प्रतिजानते।

शब्दव्यक्तिगतस्तु कैश्चिद् वर्णभेदोऽभ्युपगम्यते।

केचित्तु प्रतिवर्णं प्रतिपदं प्रतिवाक्यं चैक एव शब्दात्मा क्रमोत्पन्नावयवरूपप्रत्यवभासः प्रकाशत इति मन्यन्ते।

---

जातिर्हि भिन्नासु व्यक्तिष्वनुगतैकाकारप्रत्ययनियामिका। अत्र शब्दाकृतिविशेषाभिव्यक्तिविषयेऽनेकं दर्शनम्।

केचिन्मन्यन्ते—अन्त्यवर्णविषयकं यज्ज्ञानं यत्पूर्वपूर्ववर्णज्ञानजनितसंस्कारसहकृतं जातेर्ग्राहकमिति।

अपरे मन्यन्ते—अन्त्यवर्णज्ञानसहितैः सर्वैरिव पूर्ववर्णज्ञानैः संस्कारारम्भः। अन्त्यवर्णज्ञानानन्तरं तु जातिग्राहकं ज्ञानमुत्पद्यते प्रागुक्तसंस्कारसहितेन मनसा प्रत्यक्षरूपम्। सर्वस्माद् वर्णग्राहकज्ञानादनन्तरं जातं ज्ञानं चरमविज्ञानम्। तथा चोक्तं प्राक्—"संस्कृतेऽन्तःकरणे चरमविज्ञानेनाकृतिः परिच्छिद्यते" इति।

यैरप्ययं शुकाद्युच्चारितशब्दव्यक्तिविशेषेषु स एवायमित्यनुगतः प्रत्ययरूपो व्यवहारः शब्दाकृतिविशेषप्रयुक्तो नाभ्युपगम्यते। तथा हि—आकृतयो हि नामैताः स्वाश्रये स्वानुरूपप्रत्ययजनिकाः स्वानुरूपाभिधानजनिकाश्च स्वाश्रयव्यक्तिव्यङ्ग्यत्वेन तत्परतन्त्राः। अनेकासु शब्दव्यक्तिषु स एवायमित्यभेदप्रत्ययविषयस्तु घटादिपदार्थवत् स्वातन्त्र्येण प्रतीयमानः कथमाकृतिरूपः। आकृतिर्हि घटादिप्रत्ययेष्वेतादृशेषु पारतन्त्र्येणैव प्रतीयते, न स्वातन्त्र्येण। अतोऽत्र शुकाद्युच्चारितपदेषु स एवायमित्यभेदप्रत्ययो नित्यशब्दव्यक्तिविषय एव, न तु तथाविधशब्दाकृतिविषयः। किञ्च, संस्कारः स्वानुरूपस्मृतिहेतुः, स्मृतिसंस्कारयोः समानविषयकत्वेन कार्यकारणभावदर्शनात्। अतो वर्णविषयः संस्कारो नाकृतिविषयां स्मृतिमुपजनयितुमर्हति, अर्थान्तरत्वादाकृतेः। तेऽप्यनेकध्वनिव्यङ्ग्यां नित्यां शब्दव्यक्तिमेव प्रतिजानते।

कैश्चित्तु सावयवानित्यस्फोटवादिभिः शब्दव्यक्तिगतो वर्णभेदोऽभ्युपगम्यते। तेषामयमाशयः—सर्गादौ समुत्पन्नैर्वर्णरूपैरवयवैरेका शब्दव्यक्तिरारभ्यते। सा च कल्पादौ समुत्पन्ना कल्पान्तस्थायिनी च लिङ्गशरीरवदिति तस्याश्चिरस्थायित्वेन नित्यत्वव्यवहारः शास्त्रेषु। सा च वर्णरूपावयवव्यक्तिक्रमेण ध्वनिभिरभिव्यज्यत इति।

केचित्तु नित्यनिरवयवस्फोटवादिनः प्रतिवर्णं प्रतिपदं प्रतिवाक्यं चैक एव शब्दात्माऽभिव्यञ्जकध्वनिक्रमेण उत्पन्नावयवरूपप्रत्यवभासो ध्वनिधर्मरूषितः प्रकाशत इति मन्यन्ते।

अपर आहुः—पारम्पर्याविच्छेदान्नित्यप्रवृत्तेः प्रयोक्तृभिरुत्पत्तावलब्धप्राथम्या व्यवहार-नित्यतया नित्याः शब्दा इति ।

अर्थानामपि नित्यत्वं कैश्चिदाकृतिनित्यत्वादेवाभ्युपगम्यते। तथा ह्याह—''कतरस्मिन् पदार्थे एष विग्रहो न्याय्यः । सिद्धे शब्देऽर्थे सम्बन्धे चेति । आकृतावित्याह ।'' एतस्मिंश्च भाष्योद्देशे यावन्तः पक्षास्तेष्वर्थस्य नित्यता बहुधा व्याख्याता। सा यथाभाष्यमनुगन्तव्या ।

---

अपरे त्वाहुः—न नित्या निरवयवाश्च शब्दाः, अनित्यत्वे सावयवत्वेऽपि च न कल्पान्त-स्थायिनः प्रत्युच्चारणं तेषामुत्पादविनाशयोरनुभूयमानत्वात्। तथा च क्रमजन्मनां वर्णानामेक-बुद्ध्युपारूढः समूह एव शब्द इति व्यपदिश्यते, क्रियावत्। तदुक्तम्—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ इति ।

(वा० ३, क्रि० ४)

तथा चानादौ संसारे शब्दव्यवहारस्य नित्यं प्रवृत्तेर्व्यवहारपारम्पर्यस्याविच्छेदात् शब्दा-नामुत्पत्तौ सत्यामपि प्रयोक्तृभिरलब्धप्राथम्याः शब्दा व्यवहाराय प्रवाहनित्यतया नित्या इति व्यपदिश्यन्त इति ।

शब्दनित्यत्ववदर्थानामपि नित्यत्वं कैश्चिदाकृतिनित्यत्वादेवाभ्युपगम्यते। तथा ह्याह भाष्यकारः—'कतरस्मिन् पदार्थे एष विग्रहो न्याय्यः । सिद्धे शब्देऽर्थे सम्बन्धे चेति। आकृता-वित्याह' इति। एतस्मिंश्च भाष्योद्देशे यावन्तः पक्षास्तेष्वर्थस्य नित्यता बहुधा व्याख्याता। सा यथाभाष्यमनुगन्तव्या ।

तथा हि—घटाद्यर्थगता घटत्वादिरूपा जातिर्नित्येत्य**एकः पक्षः** । घटत्वादिरूपासत्योपाध्य-वच्छिन्नं ब्रह्मतत्त्वमेव घटादिशब्दवाच्यमिति **द्वितीयः पक्षो** ब्रह्माद्वैतवादिनाम्। जातिव्यञ्जिकाऽ-वयवसंस्थानरूपाऽऽकृतिर्नित्या, स्वरूपतोऽनित्यत्वेऽप्याश्रयप्रवाहाविच्छेदात्।

तदुक्तं भाष्ये—'तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते' इति। यस्मिन् विहतेऽपि तद्वृत्तिधर्मो न विहन्यत इत्यर्थः। तथा चावयवसंयोगविशेषरूपायामाकृतौ विनष्टायामपि तद्वृत्तिधर्मः संयोगत्वव्याप्यो जातिविशेषो न नश्यति, अतोऽवयवसंस्थानरूपाऽऽकृतिर्नित्या। सैव च घटादिपदार्थ इति **तृतीयः पक्षः** । बाह्यः पदार्थो न शब्दबोधे विषयः; किन्तु बौद्धः, स च यदा यदा शब्द उच्चार्यते, तदा तदाऽर्थाकारा बुद्धिरुपजायत इति प्रवाहनित्यत्वान्नित्यः । स एव च शब्दार्थ इति **चतुर्थः पक्षः** ।

शब्दार्थवत्तयोः सम्बन्धोऽपि नित्यः । तथा हि—अस्येदम्भावे सति शब्दार्थयोः सोऽयमिति यः सम्बन्धः, सोऽर्थदेशनस्य कर्तुमशक्यत्वादौत्पत्तिकः स्वभावसिद्धः, नाज्ञातपूर्वः केनचित् कर्त्रा कश्चित् प्रतिपत्तारं प्रति तत्प्रथमं कृत इति ।

नित्य: सम्बन्ध इत्यस्येदंभावे सति शब्दार्थयो: सोऽयमिति य: सम्बन्ध:, सोऽर्थादेशनस्य कर्तुमशक्यत्वादौत्पत्तिक: स्वभावसिद्धो न केनचित् कर्त्रा कश्चित् प्रतिपत्तारं प्रत्यज्ञातपूर्वस्तत्प्रथमं कृत इति । तस्मादनादिर्नित्यं प्राप्ताविच्छेद: शब्दार्थयो: सम्बन्ध: ।

---

अयं भाव:—शब्दार्थयो: सोऽयमित्यभिसम्बन्धादभेदलक्षण: सम्बन्ध: । स च शब्दार्थयो: अस्येदंभावे' सति भवति, नान्यथा । तथा हि—अस्यार्थस्य वाचकोऽयं शब्द:, अस्य शब्दस्य वाच्योऽयमर्थं इति वा ज्ञानं यत्रोपजायते शब्देऽर्थे वा, तथैव सोऽयमित्यभिसम्बन्धो भवति । अत्र 'अस्येदम्' इति शब्देनास्यार्थस्यायं शब्द: सरूप इति शब्देऽर्थसारूप्यम्, अस्येदं वाच्यं वाचकं वेति ज्ञानं वोच्यते । तस्य भावे सत्त्वे इत्यर्थोऽस्येदंभावे इत्यस्य । तत्र सारूप्यस्य शब्दार्थोभयगतत्वेऽपि शब्द एव प्रकाशत्वभावत्वादर्थस्य रूपसङ्क्रान्ति:, न त्वर्थे शब्दस्य । यथा स्वच्छतायां दर्पणतले रूपस्य संक्रान्ति:, न दर्पणतलस्य रूपे । रूपदर्पणयोश्च सारूप्यं दर्पणरूपोपाधिसन्निधानकृतम्, न स्वाभाविकम् । शब्देषु तु प्रत्यर्थनियतं सारूप्यं स्वत एवावस्थितम्, न तूपाधिसन्निधानकृतम् । ततश्च शब्दो गृह्यमाण: संक्रान्तार्थाकार एव गृह्यते । तथा च भेदाभेदौ शब्दार्थयो: सम्बन्ध:, सोऽयमितिवदस्येदमित्यस्याप्यभिसम्बन्धस्य भेदमूलकस्य सत्त्वात् । तत्र भेद: कल्पित:, अभेदस्तु वस्तुभूत इत्यन्यदेतत् ।

स च शब्दार्थयो: सम्बन्ध औत्पत्तिक:, उत्पत्तौ उत्पत्तिकाले भवो वर्तमान औत्पत्तिक: । उत्पत्तिशब्दस्योत्पत्तिकाले लक्षणा । अध्यात्मादित्वाट्ठञ् । तत्र भव इत्यत्र भवति: सत्तार्थक:, न तु जननार्थक:, तत्र जात इत्यनेन पौनरुक्त्यापत्ते: । ततश्च शब्दार्थयो: सम्बन्धो यदि कृत्रिम: स्यात् संयोगवत्, तदा सम्बन्धिद्वयजन्य: स्यादिति तयोरुत्पत्तिकाले न भवेत् , अतोऽजन्य: स्वभावसिद्ध:, स्वभावेन स्वरूपेण सिद्धो नित्य: । शब्दार्थयो: सम्बन्धाभावे च प्रत्यर्थं नियतस्य शब्दव्यवहारस्य कर्तुमशक्यत्वम्, व्यवहारातिप्रसङ्गात् ।

तदेतदुक्तं समर्थवार्तिके—'अर्थानादेशनात् , तच्च लघ्वर्थम् । को हि समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्' इति ।

अस्यार्थ:—शब्दार्थयो: सहजसम्बन्धाभावे व्याकरणेनार्थादेशनस्यार्थनिर्देशस्य कर्तुमशक्यत्वमिति । तच्च व्याकरणं लघ्वर्थम् = लाघवेन शब्दार्थसम्बन्धज्ञानार्थम् । हि = यतो व्याकरणं विना क: समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्, निर्देष्टुम्, तदर्थानामानन्त्यादिति । अस्य वार्तिकस्य 'समर्थवार्तिकम्' इति संज्ञा, समर्थपदघटितत्वात् । यथा चरकादौ न वेगान् धारणीयाध्यायादिसंज्ञा । तदेवं शब्दार्थयोर्भेदाभेदरूपं तादात्म्यं सम्बन्ध: । स च अज्ञानपूर्व: केनचित् कर्त्रा कश्चित् प्रतिपत्तारं प्रति तत्प्रथमं कृत इति नाभ्युपगन्तुं शक्यते; शब्दव्यवहारस्यानादित्वात् । अतोऽपि न ततो सम्बन्धस्यानित्यत्वमिति । तस्मादनादिर्नित्यं प्राप्ताविच्छेद: शब्दार्थयो: सम्बन्ध: ।

इन्द्रियविषयवद् वा प्रकाश्यप्रकाशकभावेन समयोपाधिर्योग्यता शब्दार्थयोः सम्बन्धः ।

अर्थसरूपप्रत्यवभासानां वा प्रत्ययानां बाह्येष्वर्थेषु प्रत्यस्तानामक्षरनिमित्ताक्षर-कल्पनावदर्थवदेवैकविषयत्वेऽभ्युपगम्यमाने नित्यमविच्छिन्नपारम्पर्यः कार्यकारणभावः

---

यद्वा—इन्द्रियविषयवत् प्रकाश्यप्रकाशकभावेनाभिन्नो योग्यतारूपः सम्बन्धः शब्दार्थयोः ।

तदुक्तम्—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ।। इति ।
(वा०प० ३, सम्बन्ध० २९)

ननु यथा चक्षुरिन्द्रियं स्वयोग्यतया त्वचोऽपि विषयं घटादिकं प्रकाशयति, तथा शब्दोऽनिर्ज्ञातसम्बन्धस्यापि विषयं योग्यतया प्रकाशयेदिति चेत्, न, समयोपाधिकत्वाद् योग्यतायाः ।

अयं भावः—समयस्तत्तच्छब्दानां तत्तदर्थेषु प्रयोगरूपवृद्धव्यवहारदर्शनं स उपाधिः सहकारिकारणं शब्दनिष्ठाया योग्यताया अर्थप्रकाशने । यथैव चक्षुरादयः सत्यामपि रूपप्रकाशनयोग्यतायां नानपेक्षितालोकसहाया रूपं प्रकाशयन्ति, तथा शब्दाः सत्यामप्यर्थप्रकाशनयोग्यतायां समयसहाया एवाऽर्थं प्रकाशयन्ति ।

ननु समर्थस्य किं सहायापेक्षया, प्रत्युत सैव सहायापेक्षा तस्य तत्र सामर्थ्याभावं गमयति इति चेत्, न, यतो य एव समर्थस्तत्कार्यजनने स एव सहायमपेक्षते । न श्रोत्रं रूपग्रहणासमर्थमालोकं सहायमपेक्षते । न ह्यस्यालोकः सामर्थ्यं जनयति-उपोद्बलयतीति । तदेवं समयोपाधिः शब्दार्थयोर्योग्यतारूपः सम्बन्ध इति **द्वितीयः पक्षः ।**

यद्वा शब्दार्थयोः कार्यकारणभावः सम्बन्ध इति **तृतीयः पक्षः ।**

तथा हि—शब्दादर्थाकारा बुद्धिरुपजायते । सा चान्तःकरणस्य परिणामविशेषः शब्दजन्यो वृत्त्याख्यः प्रत्ययत्वोपचारात् प्रत्ययरूपः । वस्तुतस्तु चिद्रूपं चैतन्यमेव प्रत्ययः । स च घटाद्यर्थाकारः प्रत्ययो बाह्यार्थसरूपप्रत्यवभासः । यतः स प्रत्ययो बाह्यार्थे किञ्चित्सादृश्याद् बुद्ध्या प्रत्यस्तः समारोपितो बाह्यमेवेदं वस्त्विति परिच्छिद्यते । यतो बाह्यार्थदर्शनादर्थाकारस्य प्रत्ययस्य बाह्यत्वेनाध्यवसायः । यथाऽक्षरस्मृतिनिमित्तेषु लिप्यक्षरेषु वस्तुतोऽनक्षरेष्वप्यक्षरव्यवहारस्तदेकत्वव्यवसायश्च, लिपिदर्शनेऽक्षरावबोधात् । तथाऽतद्रूपेऽपि अबाह्यार्थरूपेऽपि प्रत्ययेऽर्थव्यवहार इति । ततश्च समारोपेण बाह्यार्थतादात्म्यापन्नस्यार्थाकारप्रत्ययस्य बौद्धार्थविषयकत्ववदेव बाह्यार्थविषयकत्वेऽभ्युपगम्यमाने शब्दस्यार्थाकारं प्रत्ययं प्रति कारणत्वात् तत्तादात्म्येन बाह्यार्थं प्रति कारणत्वमुपपन्नमिति रीत्याऽनित्यमविच्छिन्नपारम्पर्यः कार्यकारणभावः शब्दार्थयोः सम्बन्ध इति सिद्धम् ।

स चायं सम्बन्धोऽपि समयोपाधिक एव, समयसहकारेणैव शब्देनार्थाकारप्रत्ययजननादित्यवधेयम् ।

शब्दार्थयोः सम्बन्धः। तथा ह्युक्तम्—'तेऽपि हि तेषामुत्पत्तिप्रभृत्यविनाशाद् बुद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति' इति।

तत्राम्नाता महर्षिभिः। सूत्रादीनां प्रणेतृभिः। व्याकरण एव ये सूत्रादीनां प्रणेतारस्ते व्यपदिश्यन्ते। तत्र सूत्राणामारम्भादेव शब्दानां नित्यत्वमभिमतम्। न ह्यनित्यत्वे शब्दादीनां शास्त्रारम्भे किञ्चिदपि प्रयोजनमस्ति। व्यवहारमात्रं ह्येतदनर्थकं न महान्तः शिष्टाः समनुगन्तुमर्हन्तीति। तस्माद् व्यवस्थितसाधुत्वेषु शब्देषु स्मृतिशास्त्रं प्रवृत्तमिति।

अपरे तु ''तदशिष्यं संज्ञाप्रमाणत्वात्'' (पा० १/२/५३) इत्येवमादीनि सूत्राणि नित्यत्वं प्रति समर्थयन्ते। अनुतन्त्रेषु खल्वपि—'सिद्धे शब्दार्थसम्बन्धे' इति, 'सिद्धं तु नित्यशब्दत्वात्' इति, 'स्फोटः शब्दो ध्वनिस्तस्य व्यायाम उपजायते। सर्वे सर्वपदादेशा' इत्येवमादि।

---

बाह्यार्थेऽर्थाकारप्रत्ययतादात्म्यञ्चाध्यासिकं बोध्यम्। बौद्धार्थ इव शब्दस्य वाच्यः कार्यश्चेति तु फलितम्। तत्तादात्म्येन तु बाह्येऽर्थेऽपि तत्त्वव्यवहारः। तथा ह्युक्तम्—'तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशाद् बुद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति' इति।

अयमर्थः—तेऽपि हि=बहिरत्यन्तासदर्थकाः शशशृङ्गादिशब्दा अपि हि, तेषाम्=स्वाकारप्रत्ययरूपाणां शशशृङ्गादिपदार्थानाम्, उत्पत्तिप्रभृति आविनाशाद् बुद्धीरेव व्याचक्षाणाः=बहिरर्थाभावादभिदधानाः, बहिरसतोऽपि बुद्धिविषयान् सतः शशशृङ्गादिपदार्थान् प्रकाशयन्तीति। बुद्धीर्व्याचक्षाणा इति त्वपपाठः।

तत्राम्नाता महर्षिभिरिति। सूत्रवार्त्तिकभाष्याणां प्रणेतृभिर्महर्षिभिरित्यर्थः। अत्र महर्षिपदेन व्याकरण एव ये सूत्रादीनां प्रणेतारस्ते व्यपदिश्यन्ते, नान्यसूत्रादीनाम्। तत्र सूत्राणामारम्भादेव शब्दादीनां नित्यत्वमभिमतं सूत्रकृतः। न हि शब्दादीनामनित्यत्वे शास्त्रारम्भे किञ्चिदपि प्रयोजकमस्ति। यतस्तदा शब्दव्यवहारमात्रं शब्दादीनामनित्यत्वेनानियतार्थकमिति महान्तोऽपि शिष्टा पाणिन्यादयस्तं समनुगन्तुम्=शास्त्रप्रणयनाय समनुसर्तुं नार्हन्ति, अननुगतत्वेन समनुसरणस्य कर्तुमशक्यत्वात्। किञ्च, शब्दादीनामनित्यत्वे तेषां व्यवहारमात्रं नाभ्युदयार्थम्, स्वयं कल्पितत्वात् शारक्रीडादिवदित्यतोऽत्यनर्थकत्वात् शिष्टाः शब्दव्यवहारं समनुगन्तुं नार्हन्तीति। तस्मान्नित्यत्वेन व्यवस्थितसाधुत्वेषु शब्देषु व्याकरणस्मृतिशास्त्रं प्रवृत्तमित्यायातम्।

अपरे तु न शब्दमात्रस्य नित्यतां मन्यन्ते, किन्तु तदेकदेशस्य संज्ञादेः। एतच्च संज्ञादिशब्दानां नित्यत्वं प्रति मतम् ''तदशिष्यं संज्ञाप्रमाणत्वात्'' (पा. १/२/५३) इत्येवमादीनि सूत्राणि समर्थयन्ते। अत्र संज्ञानां प्रामाण्यवचनेन प्रागपि व्याकरणाद् व्यवस्थितसाधुभावा एव संज्ञाशब्दा आसन्निति गम्यते। वार्त्तिकेष्वपि शब्दानां नित्यत्वम्। 'सिद्धे शब्दार्थसम्बन्धे' इति, 'सिद्धं तु नित्यशब्दत्वात्' इति च।

श्लोकवार्त्तिककृता कुमारिलेनापि शब्दानां नित्यत्वमुक्तम्—

'स्फोटः शब्दो ध्वनिस्तस्य व्यायाम उपजायते'॥ इति।

भाष्ये खल्वप्युक्तम्—'संग्रहे एतत् प्राधान्येन परीक्षितं नित्यः शब्दः' इति । अनुतन्त्रभाष्येऽप्युक्तम्—'नित्येषु शब्देषु कूटस्थैर्वर्णैरविचालिभिर्भवितव्यम्' इत्येवमादि ।

तथा व्यावहारिकेऽपि नित्यत्वे 'खदिरबर्बुरौ सूक्ष्मपर्णौ गौरकाण्डौ ।' तत्र कण्टकवान् खदिरः । प्राचीनं ग्रामादाम्राः । क्षीरिणः प्ररोहवन्तः पृथुपर्णा न्यग्रोधा इति ।

अथवा यैः प्रत्यक्षधर्मभिस्तत्र तत्र प्रवचने सूत्रानुतन्त्रभाष्याणि प्रणीतानि, तैरेव शिष्टैर्व्याकरणेऽपि नित्याः शब्दार्थसम्बन्धा इत्याम्नातम् । तेषां च व्यवस्थितं लोके प्रामाण्यमिति ॥ २३ ॥

---

अयमर्थः—स्फोट एव शब्दो वाचकः, तस्य व्यञ्जको ध्वनिस्तु व्यायामे कण्ठताल्वाद्यभिघातानुकूले पुरुषप्रयत्ने सत्युपजायत इति ध्वनेर्व्यायामजन्यतया कृतकत्वम् । स्फोटस्य तु तद्व्यतिरेकेण कारणानुपलब्ध्या च नित्यत्वमिति ।

'सर्वे सर्वपदादेशाः' इत्येवमाद्यप्यभियुक्तवचनं शब्दानां नित्यत्वं व्यवस्थापयति । अत्र 'सर्वपदादेशाः' इत्यस्यार्थः—सर्वस्य पदस्यार्थवत आदेशा इति, पद्यते गम्यतेऽर्थो येन तत्पदमर्थवदिति व्युत्पत्तेः । सर्वादिशत्वे शब्दनित्यत्वरक्षा तु बुद्धिविपरिणामेन बोध्या । पचतिबुद्धिप्रसङ्गे पचतुबुद्धिः कर्तव्येति बुद्धीनामेव स्थान्यादेशभावः, न शब्दानामिति भावः ।

भाष्ये खल्वप्युक्तम्—'संग्रहे एतत्प्राधान्येन परीक्षितं नित्यः शब्दः' इति । 'सिद्धे शब्दार्थसम्बन्धे' इत्यनुतन्त्रभाष्येऽप्युक्तम्—'नित्येषु शब्देषु कूटस्थैर्वर्णैरविचालिभिर्भवितव्यम्' इत्येवमादि ।

यदि तु शब्दानां व्यावहारिकं नित्यत्वम्, न वस्तुभूतम्, वस्तुभूतं नित्यत्वं त्वद्वयस्य ब्रह्मण एव । अस्मिन्नये शब्दानामपि वियदादिवदनित्यत्वादवस्तुभूतत्वाच्च । तथापि शब्देषु अपूर्वशब्दोपजनरूपागमसत्त्वेऽपि स्थान्यादेशभावसत्त्वेऽपि च न नित्यत्वहानिः ।

तत्र दृष्टान्त उक्तो भाष्ये—'खदिरबर्बुरौ सूक्ष्मपर्णौ गौरकाण्डौ । तत्र कण्टकवान् खदिर इति' ।

अयं भावः—यथा खदिरबर्बुरयोरुभयोरपि सूक्ष्मपर्णत्वगौरकाण्डत्वरूपधर्मसाम्येन खदिरबुद्धिप्रसङ्गे कण्टकवान् खदिर इति वाक्येन न तत्रासन्तः कण्टका आधीयन्ते, किन्तु केवलं पूर्वा उभयोः खदिरत्वबुद्धिर्निवर्त्यतेऽन्या च खदिर एव खदिरत्वबुद्धिरुपजायते । एवं प्रकृतेऽपि शब्देऽसन्नागमः स्थान्यादेशभावो वा शास्त्रेण नोपजायते, किन्तु आगमविशिष्टविषया आदेशविषया वा बुद्धिरेवान्योपजायत इति वियदादिवद् व्यावहारिकं नित्यत्वं शब्दानामव्याहतम् ।

एवं दृष्टान्तान्तरमपि भाष्य एवोक्तम्—'प्राचीनं ग्रामादाम्राः । क्षीरिणः प्ररोहवन्तः पृथुपर्णा न्यग्रोधाः' इति । अत्रापि 'प्राचीनं ग्रामादाम्राः' इति वाक्येन न्यग्रोधेऽपि प्रसक्ताऽऽम्रबुद्धिः 'क्षीरिणः प्ररोहवन्तः पृथुपर्णा न्यग्रोधाः' इति वाक्येन निवर्त्यते, न्यग्रोधबुद्धिश्चोपजन्यत इति । तथा शब्देष्वप्यागमरहितशब्दविषया स्थानिविषया वा बुद्धिर्निवर्त्यते, आगमविशिष्टविषया आदेशविषया च बुद्धिरेवोपजन्यते ।

**अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः ।**
**अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः ।।२४।।**
**कार्यकारणभावेन योग्यभावेन च स्थिताः ।**
**धर्मे ये प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु ।।२५।।**
**ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः ।**
**स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम् ।।२६।।**

---

त्रिष्वप्येषु श्लोकेषु प्रस्तुतस्य परिसमाप्तिः ।

---

अथवा प्रकृतकारिकायां सूत्रानुतन्त्रभाष्यपदैर्न व्याकरणशास्त्रीयाण्येव तान्यभिप्रेतानि, किन्तु तन्त्रान्तरसम्बद्धान्यपि ।

तथा चेदमर्थान्तरम्—यैः प्रत्यक्षधर्मभिर्महर्षिभिस्तत्र तत्र विषयान्तरप्रवचनावसरे सूत्रानुतन्त्रभाष्याणि प्रणीतानि, तैरेव शिष्टैर्व्याकरणेऽपि सूत्रानुतन्त्रभाष्यैर्नित्याः शब्दार्थसम्बन्धा इत्याम्नातम् । तेषां च लोके व्यवस्थितं प्रामाण्यमिति 'नित्याः शब्दार्थसम्बन्धाः' इति स्थितम् ॥ २३ ॥

इदानीमस्य प्रकरणग्रन्थस्याभिधेयप्रदर्शनायाह—**अपोद्धारपदार्था इति । कार्यकारणभावेनेति । ते लिङ्गैश्चेति ।**

त्रिष्वप्येषु श्लोकेषु ये विषयाः प्रतिपादितास्तेष्वस्य प्रारब्धस्य ग्रन्थस्य परिसमाप्तिः । वाक्याख्येऽस्मिन् व्याकरणशास्त्रे यदनुगन्तुमिष्टं तस्यानुगमनीयस्य विषयस्य परिसमाप्तिरेतच्छ्लोकत्रयोपवर्णितविषयेष्वेव । एतावन्त एव पदार्था अत्र व्याकरणशास्त्रेऽनुगम्यन्त इति यावत् । ते च पदार्था अष्टौ, एतच्छास्त्रप्रतिपाद्यानां शब्दार्थसम्बन्धफलानां चतुर्णां प्रत्येकं द्वैविध्यात् ।

तथा हि अर्थास्तावद् द्विविधाः—अपोद्धारपदार्थाः, स्थितलक्षणाश्चेति । शब्दा अपि द्विविधाः—अन्वाख्येयाः, प्रतिपादकाश्चेति । सम्बन्धोऽपि द्विविधः—कार्यकारणभावः, योग्यता चेति पूर्वमुक्तः । फलमपि द्विविधम्—धर्मः = अदृष्टम्, प्रत्ययः = अर्थावबोधश्चेति । एतावदेवास्य व्याकरणशास्त्रस्य प्रतिपाद्यशरीरम् ।

अपोद्धारपदार्था इत्यत्र अपोद्ध्रियन्तेऽत्यन्तसंसृष्टात् पदार्थाद् वाक्यार्थाद् वा पृथक् क्रियन्ते इत्यपोद्धाराः प्रकृतिप्रत्ययार्थाः पदार्था वा । ते च ते पदार्थाश्चेति कर्मधारयः । पद्यते गम्यतेऽनेनार्थ इति पदम्, न तु पारिभाषिकं सुप्तिङन्तलक्षणम् ।

यद्वा अपोद्धाररूपाणि यानि पदानि तेषामर्था इति कर्मधारयगर्भः षष्ठीतत्पुरुषः ।

अथवा—अपोद्धारेण पदे प्रकृतिप्रत्ययादिविभागकल्पनया वाक्ये वा पदविभागकल्पनया परिकल्पिता ये पदार्था इति शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । अपोद्धारस्य सम्बन्धिनो वा ये पदार्था इति षष्ठीतत्पुरुषः ।

तत्रापोद्धारपदार्थो नामात्यन्तसंसृष्टः संसर्गादनुमेयेन परिकल्पितेन रूपेण प्रकृत-प्रविवेकः सन्नपोद्ध्रियते। प्रविविक्तस्य हि तस्य वस्तुनो व्यवहारातीतं रूपम्।

तत्तु स्वप्रत्ययानुकारेण यथागमं भावनाभ्यासवशादुत्प्रेक्षया प्रायेण व्यवस्थाप्यते।

तथैव चाप्रविभागे शब्दात्मनि कार्यार्थमन्वयव्यतिरेकाभ्यां रूपसमनुगमकल्पनया समुदायादपोद्धृतानां शब्दानामभिधेयत्वेनाश्रीयते।

सोऽयमपोद्धारपदार्थः शास्त्रव्यवहारमनुपतति, शास्त्रव्यवहारसदृशं च लौकिकं भेदव्यवहारम्। स चैकपदनिबन्धनः सत्यासत्यभावेनानुपाख्येयः वृक्षः, प्लक्षः, इत्यनुप-संहृते हि क्रियापदे शब्दोपग्रहाणामर्थात्मनां निरूपणं न विद्यते। यावच्चापवादभूताः

---

अपोद्धारोऽत्र विभागः। तत्रापोद्धारपदार्थो नाम अत्यन्तसंसृष्टः=यः सदा संसृष्ट एव, न तु विभागपूर्वकं=संसृष्टः पदार्थो वाक्यार्थो वा प्रकृत्यर्थप्रत्ययार्थादिरूपेण पदार्थरूपेण वा अनुमेयेन= परिकल्पितेन रूपेण प्रकृतिप्रविवेकः=प्रकल्पितप्रविभागः सन् संसर्गात्=अत्यन्तसंसृष्टाद् रूपाद् अपोद्ध्रियते=पृथक् क्रियते सः। यतः प्रविभक्तैः पदार्थैर्न=प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः पुरुषस्य भवति, अपि तु संसृष्टैरेव, अतः प्रविभक्तस्य तस्यार्थस्य व्यवहारातीतं रूपम्, अत एव तत् कल्पितम्; न तु वास्तवम्।

तच्च रूपं यथागमम्=यथाशास्त्रम्, पूर्वं पूर्वं शास्त्रं मूलमाश्रित्येति यावत्। स्वान् प्रत्ययान्= प्रकृत्यर्थप्रत्ययार्थादिकल्पनारूपाणि ज्ञानानि अनुसरद्भिराचार्यैः स्वस्वप्रत्ययानुसारेण तत्तत्प्रकृत्यर्थ-प्रत्ययार्थादिविषयकभावनाभ्यासवशात् प्रायेण विभागकल्पनया व्यवस्थाप्यते।

न चेयं विभागकल्पना अपोद्धारपदार्थेष्वेव केवलम् , किन्तु स्थितलक्षणेष्वपि केषुचिदर्थेषु। यथा सिंहहंसादिपदार्थेषु। तत्रापि हि हिनस्ति इति सिंहः, हन्ति गच्छति इति हंस इत्येवं प्रकृत्यर्थ-प्रत्ययार्थादिकल्पना क्रियते। एवं द्वारमित्येकपदसरूपवाक्यप्रतिपाद्येष्वपि स्थितलक्षणेषु वाक्यार्थेषु पदार्थरूपोऽपोद्धारो बोध्यः।

न चैवं सत्यपोद्धारपदार्थस्थितलक्षणपदार्थभेदेन पदार्थद्वैविध्यमनुपपन्नमिति वाच्यम् ; मणिनूपुरादिपदार्थेषु स्थितलक्षणेषु सर्वथाऽपोद्धारविरहात्। एवं न केवलं पदार्था एवापोद्ध्रियन्ते, किन्तु शब्दा अपि।

तथा हि—पदार्थवाक्यार्थवद् अप्रविभागे पदरूपे वाक्यरूपे वा शब्दात्मनि, शास्त्रप्रवृत्त्यर्थ-मन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययादिरूपाणां पदरूपाणां वाऽनुगतिकल्पनया पदरूपाद् वाक्यरूपाद् वा समुदायादपोद्धृतानां प्रकृतिप्रत्ययादिरूपाणां पदरूपाणां वा शब्दानामभिधेयत्वेनापोद्धारपदार्था आश्रीयन्ते।

सोऽयमपोद्धारपदार्थः प्रकृत्यर्थप्रत्ययार्थादिरूपः शास्त्रव्यवहारमेव केवलमनुपतति, न लौकिकं व्यवहारम्, तत्र तेषामभावात्। पदार्थरूपस्त्वपोद्धारपदार्थः शास्त्रव्यवहारमिव लौकिकं पदार्थ-वाक्यार्थयोर्भेदव्यवहारमप्यनुपतति। स चैकपदनिबन्धनोऽनेकपदनिबन्धनश्चेति द्वेधा। तत्रैकपद-निबन्धनोऽपोद्धारपदार्थः सत्यासत्यरूपतयाऽनुपाख्येयः। यथा 'वृक्षः प्लक्षः' इत्यत्र यदा क्रियापदं नोपनीयते, तदाऽनुपसंहृते क्रियापदे केवलैर्वृक्षादिपदैरुपगृह्यमाणानाम्=प्रतीयमानानां वृक्षत्वादि-

क्रियाविशेषाः शब्दप्रवृत्तिकारणमस्तित्वं न निवर्तयन्ति, तावदस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽपि वृक्षादिभिः पदैराक्षिप्तः प्रतीयते।

तानि चैकपदसरूपाण्याक्षिप्तक्रियापदानि वाक्यानीति व्याख्यायन्ते।

तथा पूर्वपदार्थः, उत्तरपदार्थः, अन्यपदार्थः, प्रातिपदिकार्थः, धात्वर्थः, प्रत्ययार्थ इत्येकपदवाच्योऽप्यनियतावधिर्बहुधा प्रविभज्य कैश्चित् कथञ्चिदपोद्ध्रियते।

स्थितलक्षणस्तु वाक्यरूपोपग्रहः कल्पितोद्देशविभागो विशिष्ट एकः क्रियात्माऽविच्छिन्नपदार्थग्रहणोपायप्रतिपाद्यः सत्यामपि विच्छेदप्रतिपत्तौ नमस्यति, संग्रामयते, मुण्डयति, कुट्टयति, चर्वयतीत्येवमादिभिरविशिष्टः प्रतिभोपसंहारकाले।

---

जातीयानामर्थानां सत्यत्वेनासत्यत्वेन वा निरूपणं न विद्यते। सत्क्रियायोगे हि नाम अर्थस्य सत्यत्वम्, असत्क्रियायोगे तु तस्यासत्यत्वं प्रतीयते। यथा 'वृक्षः फलति' इति समर्थक्रियायोगाद् वृक्षपदार्थस्य सत्यत्वम्, दहतीति असदर्थक्रियायोगादसत्यत्वं प्रतीयते। केवलवृक्षादिपदप्रयोगे तु तद्द्वयमपि न प्रतीयते।

अनेकपदनिबन्धनस्तु उपनीतक्रियः सत्यासत्यान्यतररूपेणोपाख्येयो भवत्येव। यदा 'वृक्षः' इति केवलं नामपदं प्रयुज्यते, तदा बहूनां तदर्थान्वययोग्यानां क्रियाणामहमहमिकयोपस्थितिः। ततश्च तासां क्रियाणामपवादभूतास्तात्पर्यविषयीभूता अवधार्यमाणाः क्रियाविशेषाः प्रयुज्यमाना यावत् शब्दमात्रप्रवृत्तिकारणमस्तित्वं न निवर्तयन्ति, तावदस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽपि वृक्षादिभिः पदैराक्षिप्तः प्रतीयते, क्रियासामान्यवचनत्वात्। क्रियाविशेषवचनानि तु धातुपदानि नाक्षिप्यन्ते, विनिगमनाविरहात्। क्वचित्तु प्रकरणादिना सति तात्पर्यग्रहे क्रियाविशेषोऽप्याक्षिप्यते; यथा 'द्वारम्' इत्युक्ते 'पिधेहि' इति।

तानि च केवलानि प्रयुज्यमानानि वृक्षादिपदान्येकपदसरूपाण्याक्षिप्तक्रियापदानि सन्ति वाक्यानीत्याख्यायन्ते। क्रियारूपस्यार्थस्यैवाक्षेपः प्राभाकरैः स्वीक्रियते लाघवात्, न तु क्रियापदस्य। तेषामपि मतेऽत्यन्तं संसृष्टाद् वाक्यार्थात् पदार्थोऽपोद्ध्रियत इत्युपपन्नमेव। एवमत्र स्थितलक्षणेऽपि वाक्यार्थे पदार्थापोद्धारः सम्भवति, न त्वेकपदप्रयोगेऽप्यनपोद्धृतः पदार्थोऽस्ति, तत्राप्यन्ततोऽस्तिक्रियासंसर्गसत्त्वात्।

तथा पदार्थेऽपि पदार्थापोद्धारः पूर्वपदार्थः, उत्तरपदार्थः, अन्यपदार्थ इति वृत्त्यर्थात्; प्रातिपदिकार्थ इति पदार्थात्, धात्वर्थ इत्याख्यातार्थात्, प्रत्ययार्थ इति प्रातिपदिकार्थादित्येवमेकपदवाच्योऽप्यनियतावधिः=अनन्त एकस्मिन्नेव शब्देऽन्यथाऽन्यथाकल्पनादर्थो बहुधा प्रविभज्य कथञ्चिदपोद्ध्रियते। तदेवमपोद्धारपदार्थाः प्रकृत्यर्थप्रत्ययार्थादयः, पदार्थरूपाश्चेति द्विविधाः।

**ये चार्थाः स्थितलक्षणा इति**। स्थितं स्थिरं लक्षणं स्वरूपं येषां ते स्थितलक्षणाः, स्वरूपस्याप्रच्युतेः।

तथा हि—स्थितलक्षणा मतभेदेन पदार्था वाक्यार्थाश्च। तत्र यथा प्रकृतिप्रत्ययार्थाः पदार्थप्रतिपत्तावुपायतया पदार्थे प्रतिपन्ने तत्रैव तिरोधीयन्ते, न तु पदार्थाः क्वापि तिरोधीयन्त इति स्थितलक्षणा इत्येकं मतम्।

यदुक्तम्—"न वा पदस्यार्थे प्रयोगात्" इति। उपसंहतक्रियमत्र पदमाश्रीयते। सम्प्रत्ययानुगममात्रं वा परिगृह्यते।

---

एवं पदार्था अपि वाक्यार्थप्रतिपत्तावुपायतया प्रतिपन्ने वाक्यार्थे तत्रैव तिरोधीयन्ते, न तु वाक्यार्थः क्वापि तिरोधीयत इति वाक्यार्थ एव स्थितलक्षण इत्यपरं मतम्। अयमेव सिद्धान्तः।

तथा च वाक्यार्थरूपः स्थितलक्षणस्तु वाक्यरूपोपग्रहः=वाक्यरूप उपग्रह उपग्राहकं यस्य तथाभूतः, कल्पितोद्देशविभागः = कल्पितः कर्तृत्वादिकारकरूपः क्रियारूपश्च उद्देशविभागः प्रदेशविभागः अवयवविभागो यस्य स तथाभूतः। केवलक्रियारूपस्तु न वाक्यार्थः, किन्तु विशिष्टः=कर्तृत्वादिकारकरूपनियताश्रयवृत्तित्वविशिष्टक्रियारूपः, कर्तृत्वादिकारकरूपनियतनिमित्तविशिष्टक्रियारूपो वा। सत्यामपि क्रियाकारकरूपावयवविभागकल्पनायां वस्तुत एकः क्रियात्मा कारकविशिष्टक्रियारूपः, न तु क्रियाविशिष्टकारकरूपः, अनेककारकसाध्यायाः क्रियाया एव शाब्दे व्यवहारे प्राधान्यानुभवात्। विच्छिन्नपदार्थग्रहणोपायप्रतिपाद्यः=विच्छिन्नानामपोद्धृतानां पदानां क्रियावाचकानां कारकवाचकानां चार्थग्रहणम्, विच्छिन्नानां पदार्थानां ग्रहणं वा उपायः, तेन प्रतिपाद्यः अविच्छिन्नपदार्थग्रहणोपायप्रतिपाद्यो वा=अविच्छिन्नानां नैरन्तर्येणोच्चारितानां नैरन्तर्येणार्थग्रहणरूपो य उपायस्तेन प्रतिपाद्यः। एवं पदानां पदार्थानां चापोद्धाररूपविच्छेदप्रतिपत्तौ सत्यामपि तानि पदानि तेऽर्था वा न सन्त्येव वस्तुतः।

तथा हि—'नमस्यति, संग्रामयते, मुण्डयति, कुट्टयति, चर्वयति' इत्यादिभिः क्रियासाधनभेदविरहितो विलक्षणक्रियामात्ररूप एवार्थः प्रतीयते। यथाक्रमं 'नमः करोति, संग्रामं करोति, मुण्डं करोति, चूर्णं करोति, खण्डं करोति' इत्यादिकं तु नमस्यतीत्यादीनामर्थावबोधाय क्रियासाधनभेदेन व्युत्पादनमात्रम्। न च तत्र सत्यमीदृशः क्रियासाधनभेदोऽस्ति, विलक्षणक्रियामात्रवाचकमेव हि नमस्यतीत्यादिवाक्यम्। अत एवाविशिष्टः = क्रियासाधनभेदविरहितस्तत्र वाक्यार्थः। अत एव च नमस्यतीत्यादीनां वाक्यत्वम्, विशिष्टक्रियाप्रतिपादकत्वात्। तत्र पदत्वं तु पारिभाषिकम्।

एवं नमस्यतीत्यादावविशिष्टक्रियारूप एव वाक्यार्थः प्रतिभोपसंहारकाले क्रियासाधनभेदेन प्रविभक्तपदार्थग्रहणानन्तरं तद्भेदविरहितविलक्षणक्रियामात्रविषयिका याऽभिन्नबुद्धिरूपा प्रतिभा, तस्या उपसंहारकाले, अभावकाले प्रतीयते। अत एव शाब्दबोधे विशिष्टाविशिष्टक्रियाविषयकत्वेन विप्रतिपत्तावपि तदनन्तरमर्थक्रियाकालेऽभिन्नक्रियाविषया प्रतिभैव जायते, न तु क्रियासाधनभेदविशिष्टक्रियाविषया।

यदुक्तं भाष्ये—"न वा पदस्यार्थे प्रयोगात्" इति।

अस्यार्थः—'मुण्डयति' इत्यादिघटकमुण्डादिपदस्यार्थे 'मुण्डं करोति' इत्यादिवाक्यार्थे प्रयोगादिति। अस्मिन् भाष्यवाक्ये पदशब्देन स्वात्मनि उपसंहृता क्रोडीकृता क्रिया येन तादृशं मुण्डं संग्रामादि धातुरूपमुच्यते। पद्यतेऽर्थो येनेति व्युत्पत्त्या, न तु पारिभाषिकं सुप्तिङन्तान्यतररूपम्। अथवा सम्प्रत्ययानुगममात्रम् = 'मुण्डं करोति' इत्यादिवाक्यादपोद्धृतं यन्मुण्डादिपदं तद्वाक्यार्थादपोद्धृतश्च यो मुण्डादिपदार्थः, तस्य यः सम्प्रत्ययः, तस्य याऽनुवृत्तिर्मुण्डयतीत्यत्र मुण्डपदे तन्मात्रम्,

तथा हि पदस्यार्थे प्रयोगमभ्युपगम्य पुनरप्याह—'कृत्तद्धितान्तं चैव ह्यर्थवन्न केवलाः कृत्तद्धिता' इति ।

अन्वाख्येयाश्च ये शब्दाः केषाञ्चित्पदावधिकमन्वाख्यानम् , वाक्यावधिकमेकेषाम् । तत्र पदावधिकेऽन्वाख्याने श्रुत्यभेदादेकपदरूपोपग्रहे सामान्यमात्रे लब्धसंस्काराणि पदानि पदान्तरसम्बन्धप्राप्तसन्निधानेष्वर्थेषु सन्निपतितेष्वपि विशेषेषु सामान्ये प्रतिलब्धमन्तरङ्गं संस्कारमुपादायैव प्रवर्तेरन् ।

---

मुण्डयतीत्येतद्घटकमुण्डशब्दे पदशब्दप्रयोगनिमित्तं प्रकृते परिगृह्यते ।

वस्तुतस्त्वन्योऽयं मुण्डयतिघटको मुण्डशब्दः, मुण्डं करोतीति वाक्यघटकान्मुण्डशब्दात्, यतस्तयोरर्थभेदः । तथा ह्याद्यो वाक्यार्थपरः, अन्त्यस्तु पदार्थपर इति । स चायं मुण्डयतीत्येतद्घटक-मुण्डशब्दस्य योऽर्थः—मुण्डं करोतीति, सोऽसत्योऽपि शास्त्रे संव्यवहारार्थं कल्पितः । वस्तुतस्तु मुण्डयतीत्येतदेवार्थवत्, न तु तद्घटको मुण्डशब्दः ।

इममर्थमेव द्रढयितुमखण्डस्य पदस्याखण्डेऽर्थे प्रयोगमभ्युपगम्य पुनरप्याह भाष्यकारः—"कृत्तद्धितान्तं चैव ह्यर्थवन्न केवलाः कृत्तद्धिताः" इति । कृत्तद्धितान्ते कृतस्तद्धितास्तदर्थाश्च शास्त्रसंव्यवहारार्थं कल्पिता एव, न तु सत्या इति तदर्थः ।

**अन्वाख्येयाश्च ये शब्दा इति** । अन्वाख्यानं नामानादौ संसारे तादृशव्यवहारे दृष्टानां शिष्टप्रयुक्तानां शब्दानां व्याकरणशास्त्रेण प्रकृतिप्रत्ययविभागादिद्वारेण साधुत्वबोधनम् । तत्र केषाञ्चिद् वादिनां पदावधिकमेव पदं मर्यादीकृत्यैव अन्वाख्यानं व्याकरणेन क्रियत इत्यभिप्रेतम्, पदानां नियतत्वात् । वाक्यानां तु पदानां पूर्वापरीभावस्यानियतत्वेनानियतत्वमेवेति वाक्यान्वाख्यानस्या-शक्यत्वमिति तेषामभिप्रायः ।

अन्येषां तु वादिनां वाक्यान्वाख्यानमेवाभिप्रेतम् । प्रागुक्तरीत्या वाक्यानामानन्त्येन साक्षात् तदन्वाख्यानस्याशक्यत्वेऽपि पदान्वाख्यानद्वारके वाक्यान्वाख्यान एव शास्त्रस्य तात्पर्यम् । यथा पदानामानन्त्येऽपि प्रकृतिप्रत्ययविभागद्वारकं तदन्वाख्यानं पदान्वाख्यानवादिनां मते । प्रवृत्तिनिवृत्ति-लक्षणः कृत्स्नोऽपि लोकव्यवहारो वाक्यहेतुक एवेति वाक्यस्यैवान्वाख्येयता व्याकरणेनेति तेषामभि-सन्धिः । तत्र पदावधिकेऽन्वाख्याने "विशेषणानां चाजातेः" (१/२/४२) इति सूत्रं क्रियते ।

तथा हि—यद्यपि शुक्लादयः शब्दाः सामान्येन गुणवृत्तयः, तथापि शुक्लो गुणोऽस्यास्ती-त्यर्थे मतुब्लोपाद् गुणोपसर्जनं द्रव्यमपि प्रत्याययन्तीति तदा तेषामाश्रयविशेषणता । तदा च यद्यपि गुणगुणिवाचिनोर्द्वयोरपि शुक्लशब्दयोर्लिङ्गसंख्याभेदरूपोऽर्थविशेषो वर्तते चानुभूयते च, तथापि शुक्लशब्दमात्रप्रयोगे गुणिवाचकपटादिशब्दाप्रयोगे च तद्धितवृत्त्या गुणिवाचकशुक्लशब्दस्य केवलस्य च गुणमात्रवाचकशुक्लशब्दस्य प्रतिपाद्यो योऽर्थविशेषस्तस्य भानं न भवति; किन्तु शुक्लत्वेन सामान्येनाश्रयसामान्याभिधानमेव तत्र भवति । शुक्लत्वरूपस्य सामान्यस्य गुणे गुणिनि च यथा-क्रमं समवायेन स्वाश्रयसमवायेन च सत्त्वादिति तदानीं द्वयोरपि शुक्लशब्दयोर्वर्णानुपूर्वीश्रुत्यभेदा-

तत्रैकवचनान्तो नपुंसकलिङ्गश्च शुक्लशब्दो भिन्नलिङ्गसंख्यैराश्रयैः सम्बद्धः श्रूयेत। तदर्थम् 'विशेषणानां चाजातेः' (पा० १/२/५३) इत्यनेन योगेन भाविन्याश्रये बहिरङ्गे प्रक्रान्ते गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनान्यनुगम्यन्ते। वाक्यावधिके त्वन्वाख्याने नित्यसंसृष्टस्य गुणस्याश्रयविशेषेणात्यन्तमविवेकात् सर्वतो व्यवच्छेदे सामान्यार्थत्वमेव न विद्यते।

तत्र चेदमुक्तम्—"स्वाभाविकमेतत्" (म०भा० २/२/२९) इति। तथा प्रत्यवयवं द्वन्द्वपदसंस्कारे "द्वन्द्वेऽबहुषु लुग्वचनम्" (म०भा० २/४/६२) उपन्यस्तम्। समुदायसंस्कारप्रक्रमे तु "न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात्" (म०भा० २/१/६२) इत्याह। तथा "विशेषणं विशेष्येण बहुलम्" (पा० २/१/५७), "उपमानानि सामान्यवचनैः" (पा० २/१/५५) इत्यादि सर्वं पदावधिक एवान्वाख्याने परिगृह्यते।

देकपदरूपत्वोपग्रहे सति शुक्लत्वरूपं सामान्यमाश्रित्य लब्धसंस्कारं द्विविधमपि शुक्लपदम्, अतो विशेष्यवाचकपटादिपदसन्निधाने सत्यर्थविशेषस्य सम्प्रत्ययेऽपि शुक्लत्वरूपं सामान्यमादायान्तरङ्गत्वात् प्रथमं प्रवृत्तं संस्कारं स्वीकृत्यैव शुक्लादयः शब्दाः स्वार्थबोधनाय प्रवर्तेरन्।

तत्रैकवचनान्तो नपुंसकलिङ्गश्च शुक्लशब्दो भिन्नलिङ्गसंख्यैराश्रयैः सम्बद्धः श्रूयेत—शुक्लं पटा इति। एतद्दोषपरिहाराय भाविनि=पटादिपदप्रयोगे सति भाविप्रत्ययविषये शुक्लादिगुणाश्रये द्रव्ये भाविप्रत्ययविषयत्वादेव बहिरङ्गे प्रकरणेन पूर्वमेव ज्ञाते सति तल्लिङ्गवचनानुरोधेन गुणवचनानां शुक्लादिशब्दानां लिङ्गवचनानि 'विशेषणानां चाजातेः' इति सूत्रेणानुगम्यन्ते=अनुशिष्यन्ते। वाक्यावधिके त्वन्वाख्याने पटादिनाऽऽश्रयेण नित्यसंसृष्टस्य शुक्लादिगुणस्याश्रयविशेषेण पटादिनाऽत्यन्तमविवेकात् = अविभागाद् आश्रयलिङ्गसंख्यादिभिर्गुणस्यापि सर्वतो व्यवच्छेदे = व्यावृत्तौ सति गुणवाचकशुक्लादिशब्दानां सामान्यार्थत्वमेव न विद्यते, येनैकवचनान्तो नपुंसकलिङ्गश्च शुक्लशब्दः प्रयुज्येत। तथा च "विशेषणानां चाजातेः" इति सूत्रं न कर्तव्यम्।

एतदेवाभिप्रेत्येदमुक्तं भाष्ये—"स्वाभाविकमेतत्" इति। विशेषणानामाश्रयस्य लिङ्गसंख्यानुरोधित्वं प्रागुक्तरीत्या स्वाभाविकमिति नानुशासनार्हमिति तदर्थः। तथा पदावधिके एवान्वाख्याने प्रत्यवयवं द्वन्द्वरूपस्य पदस्य संस्कारे "द्वन्द्वेऽबहुषु लुग्वचनम्" उपन्यस्तं वार्तिककृता गर्गवत्सवाजा इति। द्वन्द्वपदरूपस्य समुदायस्य संस्कारप्रस्तावे तु "न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात्" इत्यनेन तत्प्रत्याख्यातम्।

अयं भावः—द्वन्द्वघटकानि पदानि एकैकं संस्कृत्य ततो द्वन्द्व इति स्वीकारे सर्वत्रैकवचनस्यैव सम्भवेन गोत्रप्रत्ययस्य लुङ् न प्राप्त इति तदर्थम् "द्वन्द्वेऽबहुषु लुग्वचनम्" उपन्यस्तम्। समुदायसंस्कारपक्षे तु युगपदधिकरणवचनतापक्षमाश्रित्य प्रत्येकं बहुत्वयोगाद् बहुवचनलुकोः सम्भवेन "न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात्" इति तत्प्रत्याख्यनमुक्तम्। तथा "विशेषणं विशेष्येण बहुलम्", "उपमानानि सामान्यवचनैः" इत्यादि सर्वं पदावधिके एवान्वाख्याने परिगृह्यते।

तथा हि—पदयोः सामान्यविषयतायां नीलशब्दार्थस्य विशेषणता, उत्पलशब्दार्थस्य च विशेष्यत्वम्, अन्यथा नीलोत्पलशब्दस्याविद्यमानविभागत्वात् कुतो विशेषणविशेष्यभाव इति।

पदस्य चान्वाख्येयत्वमभ्युपगम्य 'भू, भूति, भू अति' इत्येवमादयः शब्दान्तर-समुदायप्रतिपत्तिहेतवः परिकल्पिताः प्रतिपादकाः शब्दा उपादीयन्ते ।

कार्यकारणभावेनार्थाकारनिर्भासमात्रानुगतस्य प्रत्ययस्यार्थेषु प्रत्यस्तरूपस्यार्थ-त्वेनाध्यवसाये तस्यार्थात्मनः शब्दो निमित्तम् । तथार्थावग्रहदर्शनं सोऽयमिति शब्दार्थयोः सम्बन्धप्रसिद्धेर्नादाभिव्यक्तस्यान्तःकरणसन्निवेशिनः शब्दस्य प्रवृत्तौ कारणम् । इन्द्रिय-विषयवत् तु प्रकाश्यप्रकाशकभावेन विशिष्टानां शब्दानां विशिष्टेष्वर्थेषु नित्यमकर्तृव्यापार-साध्यमव्यभिचरितप्रसिद्धसाधुभावानां वाचकानां शब्दानां वाच्येषु योग्यत्वम् , अप्रसिद्ध-सम्बन्धानां प्रथमप्रतिपादने समयोपाधिकम् ।

---

**ये चापि प्रतिपादका इति ।** पदस्यैव चान्वाख्येयत्वमभ्युपेत्य 'भू, भूति, भू अति' इत्येवमादयः पदरूपशब्दान्तरसमुदायप्रतिपत्तिहेतवः परिकल्पिताः शब्दा उपादीयन्ते शास्त्रकृद्भिस्तदनु-गतैश्चास्माभिः ।

**कार्यकारणभावेन योग्यभावेन च स्थिता इति ।** शब्दार्थयोः सम्बन्धो द्विविधः— अभेदसम्बन्धमूलकः कार्यकारणभावरूपः, योग्यतारूपश्चेति । तत्राद्यस्येत्थमुक्तिसम्भवः । तथा हि— घट इत्यत्र प्रत्येकं ध्वनीनां घटपदस्फोटव्यञ्जकत्वं तारतम्येनेति सिद्धान्तः । तद् वक्ष्यति—

प्रत्येकं व्यञ्जका भिन्ना वर्णवाक्यपदेषु ये ।
तेषामत्यन्तभेदेऽपि सङ्कीर्णा इव शक्तयः ।। इति ।
(वा० १/८९)

ततश्चैकैकध्वन्यभिव्यक्तघटपदस्फोटोऽपि घटरूपार्थावबोधकस्तारतम्येनेत्यायातम् । तथा चैतेऽर्थाकारनिर्भासरूपा मात्राः = अवयवा इव चरमध्वन्यभिव्यक्तघटपदस्फोटश्रवणजन्यस्य घटपदार्थ-प्रत्ययस्योपकारकत्वादिति तैरर्थाकारनिर्भासैरनुगतस्य चरमस्य घटपदार्थप्रत्ययस्यार्थाकारत्वेनार्थेषु प्रत्यस्तरूपस्य = अभेदेन समारोपितरूपस्य अर्थत्वेनाध्यवसाये = सोऽयमिति निश्चये तस्यार्थात्मनो घटपदार्थप्रत्ययस्य घटशब्दो निमित्तमिति ।

यद्वा अर्थाकारनिर्भासाः पदार्थप्रत्यया अवयवा इव वाक्यार्थप्रत्ययस्य तैरनुगतस्य वाक्यार्थ-प्रत्ययस्य वाक्यार्थेष्वभेदेन समारोपितरूपस्य वाक्यार्थत्वेनाध्यवसाये तस्य वाक्यार्थात्मनो वाक्यार्थ-प्रत्ययस्य वाक्यघटकं प्रत्येकं पदं पदार्थोपस्थितिं द्वारीकृत्य निमित्तमिति । एवं यथा शब्दो निमित्तमर्थस्य, तथाऽर्थोऽपि निमित्तं शब्दस्य ।

तथा हि—शब्दार्थयोः सोऽयमित्यभेदसम्बन्धप्रसिद्धेरर्थावग्रहदर्शनम् = अर्थपरिच्छेदरूपोऽर्था-कारः प्रत्ययः अन्तःकरणसन्निवेशिनो नादाभिव्यक्तस्य प्रवृत्तौ निमित्तम् । तथा चार्थाकारबुद्धितः शब्दाकारबुद्धिरुत्पद्यत इति बुद्धिविषययोस्तादात्म्यादर्थः कारणम्, शब्दः कार्यमिति कार्यकारणभावः फलति । शब्दार्थयोर्योग्यतालक्षणः सम्बन्धस्तु प्रकाश्यप्रकाशकभावेनेन्द्रियविषयवत् ।

तथा हि—आनुपूर्वीविशेषविशिष्टानामव्यभिचरितसाधुभावानाम् = स्वार्थे साधुतां नित्यम-परित्यजतां स्वार्थे लोकप्रसिद्धानां गवादिशब्दानां वाचकानां गवादिशब्दानां वाक्येषु जातिगुण-क्रियादिविशिष्टेष्वर्थेष्वकर्तृव्यापारसाध्यम्, अत एव नित्यं योग्यत्वम् ।

तत्र साधोर्यः सम्बन्धोऽर्थेन स ज्ञाने शास्त्रपूर्वके वा प्रयोगे धर्माभिव्यक्तौ अङ्गत्वं प्रतिपद्यते। विशिष्टप्रत्ययोत्पत्तौ च प्रत्यक्षपक्षेण व्यवस्थां प्रकल्पयति।

अनुमानपक्षेण तु सम्बन्धिसम्बन्धादक्षिनिकोचादिवदपभ्रंशाः (अपि) प्रत्ययविशेषेष्वङ्गभावमुपगच्छन्ति।

---

अयं भावः—ये शब्दा नित्यं साधुतामपरित्यजन्तः प्रसिद्धाः, यथा गवादयः। एतच्च स्वाभिधेयाव्यभिचारात्। न हि गोशब्दः स्वार्थं जहाति, हाने पुनरसाधुतैव। यथा गोणीशब्दस्यावपनार्थपरित्यागे गोत्वेन सास्नादिमति प्रवृत्तस्य। तेषां शब्दानां साधूनां वाच्येषु नित्यं योग्यत्वम्। किन्तु तेष्वपि शब्देषु येऽप्रसिद्धसम्बन्धाः = लौकिकैरलौकिकैर्वाऽर्थैर्येषां सम्वन्धा न प्रसिद्धाः, तेषां शब्दानां प्रथमे स्वार्थप्रतिपादने समयोपाधिकम् = वृद्धव्यवहाररूपसमयग्रहसापेक्षग्रहं योग्यत्वम्, न तु प्रसिद्धसम्बन्धानाम्।

**धर्मे ये प्रत्यये चाङ्गमिति**। अयं भावः—साधोः शब्दस्य योऽर्थेन सह योग्यतालक्षणः सम्बन्धः, स एतस्मिन्नर्थेऽयं साधुरिति ज्ञाने सति शास्त्रप्रक्रियास्मरणपूर्वके साधुशब्दप्रयोगे सति वा जायमानायां धर्माभिव्यक्तावङ्गत्वं प्रतिपद्यते, तदर्थे तच्छब्दस्य सम्बन्धाभावे, तदर्थे तच्छब्दस्य साधुत्वज्ञाने तदर्थे तच्छब्दस्य शास्त्रपूर्वके प्रयोगे वा धर्मानभिव्यक्तेः। साधुशब्दस्यार्थेन सम्बन्ध एव च तदर्थविषयकविशिष्टप्रत्ययोत्पत्तौ प्रत्यक्षपक्षेण = प्रत्यक्षज्ञानसाम्येन व्यवस्थां प्रकल्पयति। तथा हि यथा प्रत्यक्षज्ञानमव्यवहितं ज्ञानान्तरेण स्वविषयं बोधयति, तथा साधुशब्दसम्बन्धः शब्दान्तराव्यवहितः।

अनुमानपक्षेण = अनुमानसाम्येन त्वपभ्रंशाः सम्बन्धिसम्बन्धात् = स्वसम्बन्धिसाधुशब्दस्य योऽर्थेन सम्बन्धो योग्यतालक्षणस्तस्मात्, अपभ्रंशसम्बन्धश्च साधुशब्दे प्रकृतिविकृतिभावरूपः, अर्थविशेषविषयकप्रत्ययविशेषेष्वङ्गभावमुपगच्छन्ति, अक्षिनिकोचादिवत्।

अयं भावः—साधुशब्दः साक्षात् स्वसम्बद्धमर्थं बोधयति, प्रत्यक्षज्ञानवत्। अपभ्रंशास्तु परम्परया स्वसम्बन्धिसाधुशब्दसम्बद्धानर्थाननुमानसाम्येन प्रत्याययन्ति, यथा गोण्यादयः शब्दा गोशब्दव्यवधानेन।

यत्र श्रोतुरेवं बुद्धिर्भवति—गोशब्दोऽस्याभिधित्सितः, किन्तु प्रमादादशक्तेर्वा गोणीशब्दमुच्चारयतीति। यथा लिङ्गं स्वज्ञानव्यवधानेन लिङ्गिनमनुमापयति। यथा वाऽनुमेयस्य वह्निसामान्यस्य दृष्टान्ते महानसादौ ज्ञानं पक्षे सामान्याकारज्ञानव्यवधानेन = वह्निसामान्यज्ञानव्यवधानेन स्वलक्षणं वह्निव्यक्तिविशेषमनुमापयति। यथा वाऽक्षिनिकोचः = नेत्रसङ्कोचरूपा चेष्टा स्वकर्तुरभिप्रायावधारणरूपानुमितिव्यवधानेन तं तमर्थं बोधयति।

तथा च साधुशब्दानामर्थैः सह साक्षात् सम्बन्धः, अपभ्रंशानां तु परम्परासम्बन्ध इति फलितम्। तदिदमुक्तम्—**सम्बन्धाः साध्वसाधुष्विति**।

ते लिङ्गैश्च। अपोद्धारे हि शास्त्रव्यवहारार्थं समुदायात् संसृष्टायाः कस्याश्चि-दर्थमात्रायाः क्रियमाणे तं तमवधिं प्रति निमित्तत्वेनार्थानां पुरुषाधीनो विकल्पभेदः सम्भवति।

कथमिदं विज्ञायते हेतुमत्यभिधेये णिज् भवति, आहोस्विद्धेतुमति यो धातुर्वर्तते इति (हेतुमति) वर्तमानादिति।

तथा "स्त्रियाम्" (पा० ४/१/३) इति। किं स्त्र्यर्थाभिधाने टाबादयः, स्त्र्यर्थवृत्तेः प्रातिपदिकात् स्वार्थे वेति ?

तथा "नञ्" इति किं प्रधानोऽयं समास इति ? (किं पूर्वपदार्थप्रधानोऽ-थवोत्तरपदार्थप्रधान इति)। न ह्येते विकल्पा लौकिकाः, समुदायार्थे हि लौकिके

---

**ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपदर्शिता इति।** ते प्रागुक्ताः शब्दार्थसम्बन्धफलभेदेन अष्टौ पदार्थाः। तत्रापोद्धारपदार्थानां लिङ्गैरुपदर्शनं यथा—हेतुमति चेति। अत्र हि भावयतीति पदरूपप्रकृतिप्रत्ययसमुदायार्थे संसृष्टायाः प्रकृत्यर्थमात्रायाः प्रत्ययार्थमात्राया वा शास्त्रव्यवहारार्थं समुदायार्थादपोद्धारे क्रियमाणे प्रकृत्यर्थरूपं वाऽपोद्धारावधिं प्रति पुरुषबुद्धिविकल्पस्य निमित्तत्वेन प्रकृत्यर्थानां प्रत्ययार्थानां च पुरुषाधीनो बुद्धिविकल्पभेदः सम्भवति।

तथा हि—हेतुमति चेति। कथमिदं विज्ञायते ? हेतुमति प्रयोजकव्यापारेऽभिधेये णिज् भवतीति। सोऽयमन्वयव्यतिरेकाभ्यां प्रयोजकव्यापारः प्रत्ययार्थ इति प्रत्ययार्थत्वपक्षः। अथवा हेतुमति यो धातुर्वर्तत इति तत्र वर्तमानाद् धातोर्णिज् भवतीति प्रकृत्यर्थत्वपक्षः।

अयं भावः—यथा पचिर्विक्लित्तिवचनोऽपि विक्लित्त्यर्थत्वादधिश्रयणादिव्यापारानपि स्वार्थेऽ-न्तर्भावयति, तथा णिजर्थत्वेनाभिमते प्रेषणाध्येषणे अप्यन्तर्भावयति, किन्तु केवलस्य पचेः प्रयोगे विक्लित्त्यनुकूलव्यापारवाचकस्य तदनुकूलप्रयोजकव्यापारवाचकस्य च पचेः सारूप्यात् प्रयोजक-व्यापारावधारणं न स्यादिति तदर्थं तद्व्यञ्जको णिच् प्रयुज्यत इति।

अत्र हि प्रयोजकव्यापाररूपोऽपोद्धारपदार्थो लिङ्गेनोपदर्शितः। तथा हि—अत्र प्रेषणादि-रूपव्यापारस्य प्रकृत्यर्थत्व-प्रत्ययार्थत्वयोरुभयोर्लिङ्गमस्ति, अत एव प्रेषणादिः प्रकृत्यर्थः प्रत्ययार्थो वेति संशयः। स्वशब्देनोपदर्शने तु संशयो न स्यात्।

एवम् "स्त्रियाम्" इत्यत्रापि। अत्र हि—किं स्त्र्यर्थाभिधाने टाबादय इत्यर्थः। अथवा स्त्र्यर्थवृत्तेः प्रातिपदिकात् स्वार्थे इति ? तत्राद्यः स्त्र्यर्थस्य प्रत्ययार्थत्वपक्षः, अन्वयव्यतिरेकाभ्यां टाबादीनां स्त्र्यर्थाभिधायकत्वकल्पनात्। चरमस्तु प्रकृत्यर्थपक्षः, अन्तरेणापि प्रत्ययं दृषदादौ स्त्र्यर्था-वसायादिति।

तथा "नञ्" इति सूत्रविषयेऽप्यपोद्धारपदार्थस्य विकल्पः। तथा हि अब्राह्मण इत्यादौ किंप्रधानोऽयं समास इति ? किं पूर्वपदार्थनञर्थप्रधानः, अथवा उत्तरपदार्थप्रधान इति ? एते च विकल्पा नहि लौकिकाः, किन्तु शास्त्रव्यवहारार्थं कल्पिताः शास्त्रीया एव। लौकिकस्तु

व्यभिचाराभावात् । पुरुषविकल्पेष्वनियतेषु यथा शास्त्रव्यवस्थाभेदो न भवति, स विकल्पः परिगृह्यते ।

तथैकत्वादयो विभक्त्यर्थाः, कर्मादयः पञ्चकः प्रातिपदिकार्थः, चतुष्कः, त्रिक इति पुरुषविकल्पाधीन एवंप्रकारः पक्षभेदः ।

क्रियासाधनकालादयोऽपि कैश्चित् कथञ्चिदभिधेयत्वेन प्रविभक्ताः ।

---

समुदायार्थः, नहि तत्र विकल्पः सम्भवति, व्यभिचाराभावात् । प्रकृत्यर्थप्रत्ययार्थास्तु पुरुषबुद्धिप्रभवा इत्यनियतत्वेन विकल्पगोचराः । एवं पुरुषविकल्पेष्वनियतेष्वपि यथा पदसाधुत्वविषया शास्त्राणां व्यवस्था न भिद्यते, तथाऽनियतः प्रकृत्यर्थः प्रत्ययार्थश्च विकल्पविषयः शास्त्रव्यवहारार्थं शास्त्रकारैः परिगृह्यत इति ।

तथैकत्वादयो विभक्त्यर्थाः, कर्मादयः पञ्चकः प्रातिपदिकार्थः, चतुष्कः, त्रिक इति पुरुषविकल्पाधीन एवंप्रकारोऽपोद्धारपदार्थविषयकः पक्षभेदो लिङ्गैरेवोपदर्शितोऽत्र व्याकरणशास्त्रे ।

तथा हि—केषाञ्चिद् वादिनां मते एकत्वादिसंख्या प्रत्ययेनाभिधीयते, कर्मादयः प्रातिपदिकेन । यतो वृक्षौ वृक्षानिति प्रत्ययभेदे संख्याभेदः, न साधनभेदः । अपरेषां कर्मादयः प्रत्ययेनाभिधीयन्ते, संख्या तु प्रातिपदिकेन । यतोऽग्निचिदित्यत्र प्रत्ययेन विनाप्येकत्वावगतिः, न तु विभक्तिमन्तरेण कर्मादिज्ञानम् । अपरेषामुभयं संख्या कर्मादयश्च प्रातिपदिकेनाभिधीयते । 'चर्म पश्य' इत्यादौ विभक्तिमन्तरेणाप्युभयावगतेरिति । एषां पक्षभेदानां पुरुषबुद्धिप्रभवत्वादेवैषु संख्यासाधनभेदानां विभक्त्यर्थत्वप्रातिपदिकार्थत्वयोः संशयः ।

एते च पक्षा अत्र व्याकरणे लिङ्गैरेवोपदर्शिताः, न तु स्वशब्दैः, अतो लिङ्गानामनियतत्वेनापि संशय इति । एवं तिङन्तेऽप्यपोद्धारे क्रियमाणे क्रियासाधनकालाः संख्यापुरुषोपग्रहाश्च = उपग्रहः = परस्मैपदात्मनेपदे, कैश्चित् कथञ्चित् प्रत्ययार्थत्वेन धात्वर्थत्वेन च प्रविभक्ताः ।

तथा हि केचिद् वदन्ति—धातुः क्रियामात्रमाह, प्रत्ययः साधनानीति, "लः कर्मणि च" इत्यादिवचनात् । अत्र साधनानां प्रत्ययार्थत्वं स्वशब्दैरेवोपदर्शितमिति नात्र सन्देहः । वर्तमानादिरूपः कालस्तु न प्रत्ययार्थः, नापि प्रकृत्यर्थः, किन्तु प्रकृत्यर्थस्य धात्वर्थतत्तद्व्यापारस्योपाधिः । वाच्यत्वे सति व्यावर्तकतया प्रतीयमानं विशेषणम्, अवाच्यत्वे सति व्यावर्तकतया प्रतीयमान उपाधिरिति व्याकरणशास्त्रे विशेषणोपाध्योर्भेदः । यथा बहुव्रीहावस्त्यर्थ उपाधिः ।

एवं कालोऽप्रत्ययार्थोऽपि प्रत्ययाभिव्यङ्ग्य एव, लडादीनां तत्र शक्तिकल्पने गौरवात् । "वर्तमाने लट्" इति सूत्रस्य च वर्तमानकाले द्योत्ये धातोर्लडित्यर्थः । एवं "परोक्षे लिट्", "अनद्यतने लङ्" इत्यादावूह्यम् । लादेशैस्तु तिबादिभिः संख्याऽभिधीयते । संख्यानिबन्धनाश्चैकवचनद्विवचनबहुवचनरूपाः प्रत्ययाः क्रियन्ते, "द्व्येकयोर्द्विवचनैकवचने" इत्यादिसूत्रैस्तेषामेकत्वादिनियमात् । युष्मदस्मदर्थादिसमानाधिकरणकर्त्रादिरूपसाधनविशेषनिबन्धनाश्च प्रथमादिपुरुषविशेषनियमा इति कर्त्रादिः साधनविशेषः प्रत्ययार्थ एव । उपग्रहविशेषसन्निधाने प्रतीयमानस्तु कर्त्रभिप्रायादिर्न प्रकृत्यर्थः, नापि प्रत्ययार्थः, किन्तु यथायथं प्रकृत्यर्थोपाधिः प्रत्ययार्थोपाधिर्वा । तत्र कर्त्रभिप्रायः

'धातुः साधने दिशि पुरुषे चिति च तदाख्यातम्।
लिङ्गे किमिति विभक्तौ ? एतन्नाम।'

भावकर्मभ्यामात्मनेपदम्, कर्तुः परस्मैपदम् इत्यपोद्धारपरिकल्पनाव्यवस्थामाश्रित्य, 'स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्' इति प्रतिपत्तिक्रमनियमानुगममात्रं क्रियते।

---

फलोपाधितया प्रकृत्यर्थोपाधिः। तथा ''व्यक्तवचां समुच्चारणे सम्प्रवदन्ते ब्राह्मणाः'' इत्यत्र समुच्चारणकर्तृगतं व्यक्तवाक्त्वं प्रत्ययार्थोपाधिः।

स च द्विविधोऽप्युपग्रहरूप उपाधिर्लादेशेभ्य एव गम्यते, न तु लकारेभ्य इति भगवान् पाणिनिः।

काशकृत्स्नाचार्यास्त्वन्यथैव मन्वते। तथा हि तदीयं सूत्रम्—''धातुः साधने दिशि पुरुषे चिति च तदाख्यातम्। लिङ्गे किमिति विभक्तौ एतन्नाम'' इति।

अस्यार्थः—धातुः साधने कर्मादौ वर्तते। धातुपदं चाग्रे दिशि पुरुषे च सम्बध्यते। तथा च धातुर्दिशि वर्तत इत्यर्थः। अत्र दिक्छब्देन क्रिया कालश्चोच्येते, तन्मते दिक्पदस्य नदीवृद्ध्यादिपदवत् क्रियाकालयोः पारिभाषिकत्वात्। किञ्च, धातुः पुरुषे प्रत्यक्त्वादिष्वर्थेषु वर्तते। तन्मते हि पुरुषपदं प्रत्यक्त्वसम्बोद्ध्यत्वतदाश्रयभेदरूपेष्वर्थेषु पारिभाषिकम्। यद् आख्यातं तिङ्प्रत्ययः, तत् चिति संख्यायां वर्तते। अत्र चिदित्याख्यातपदवाच्यायाः संख्यायाः पारिभाषिकं नाम। एतावता धात्वर्थ आख्यातार्थश्चोक्तः।

अथेदानीं प्रातिपदिकार्थं वक्तुं पृच्छति—'लिङ्गे किमिति विभक्तौ' इति। लिङ्गे स्त्रीत्वादौ, विभक्तौ कर्मादिषु कारकेषु, किं वर्तत इति प्रश्नः। अत्र विभक्तिशब्दस्य कर्मादिकारकेषु प्रयोगः, विभक्तिपदस्य तत्र पारिभाषिकत्वात्, विभक्तिसन्निधाने तेषां प्रतीयमानत्वेन तेषु लाक्षणिकत्वाद् वा। समाधत्ते—एतन्नामेति।

यदेतन्नामपदं व्यवहारेऽनुभूयते, एतदेव लिङ्गस्य कारकाणां च वाचकमिति। तदर्थभूतान्येव तानि, नामपदोत्तरविभक्तिः पदसाधुत्वार्थः प्रयुज्यमानाभिर्नामार्थस्येवाभिधानादिति। अत्र च काशकृत्स्नसूत्रे स्वशब्दैरेवोपदर्शनम्।

भावकर्मभ्यामात्मनेपदम् = भावकर्मवाचकाभ्यां धातुभ्यामात्मनेपदं भवतीत्यर्थः। कर्तुः परस्मैपदम्, कर्तृवाचकाद् धातोः परस्मैपदं भवतीत्यर्थः। अस्मिन्नपि वाक्यद्वयेऽपोद्धारपदार्थपरिकल्पनामाश्रित्य स्वशब्दैरेवार्थोपदर्शनम्। स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्।

अस्यार्थः—घटादिशब्दो घटत्वादिजातिरूपं स्वार्थं स्वप्रवृत्तिनिमित्तम्, समवेतं घटादिव्यक्तिषु समवायेन वर्तमानम् , अभिधाय शक्त्या प्रबोध्य, निरपेक्षोऽपि = क्षीणशक्तिकत्वात्तदाश्रयबोधनेऽनाकाङ्क्षोऽपि, तदाश्रयं द्रव्यमाह, स्वार्थस्य केवलस्य व्यवहारेऽनन्वयादनुपयोगाच्चेति भावः।

अत्र यद्यपि जात्यादिसंसृष्टं द्रव्यमेकमेव परमार्थम् , तथाप्यपोद्धारकल्पनया स्वार्थमभिधाय द्रव्यमाहेत्युच्यते। अत्राप्यपोद्धारपदार्थः स्वशब्देनैवोक्तः। अत्राभिधायेति पदे पूर्वकालवाचिक्त्वाप्रत्ययोऽभिदधातेरुत्पद्यमानः शब्दगतस्याभिधाख्यव्यापारस्यार्थे नियतक्रमवतीं वृत्तिम् = व्यापारम् श्रुत्या प्रकाशयति, न तु शब्दसामर्थ्यरूपेण लिङ्गेन।

न हि शब्दस्य क्रमवती विरम्य विरम्य स्वार्थादिषु वृत्तिः सम्भवति, सकृदुच्चारणात् , अर्थेन च नित्यमवियोगात् ।

प्रतिपत्तिक्रमो ह्ययं श्रोतुरभिधातुर्वा न व्यवस्थितः । सर्वविशेषणविशिष्टं हि वस्तु संसर्गिणीनां मात्राणां कलापं यौगपद्येनैकस्या बुद्धेर्विषयतामापन्नमुत्तरकालमिच्छन् बुद्ध्यन्तरैः प्रविभज्यते । प्रविभक्तस्यापि चानुसन्धानमन्तरेणार्थक्रियाविषया प्रतिभा नोत्पद्यत इति पुनः संसर्गरूपमेव प्रत्यवमृशति ।

---

किञ्चार्थस्य यः प्रतिपत्तिक्रमो नियतः—पूर्वं स्वार्थभानम् , पश्चाद् द्रव्यभानमिति, तस्यानुगममात्रं स्वार्थमभिधाय द्रव्यमाहेत्यनेन वाक्येन क्रियते, न तु शब्दस्य विरम्य विरम्यार्थाभिधानरूपः क्रमः सम्भवति, सकृदुच्चारणात्, "सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इत्यभ्युपगमात्, अर्थेन सह शब्दस्य नित्यमवियोगादपि ततोऽर्थाभिधाने क्रमासम्भवात् ।

अयं भावः—नैषां शब्दानां सत्तामात्रेणार्थेष्वभिधाख्यो व्यापारः प्रवर्तते, अपि तूच्चारणानुगृहीतः । तच्चोच्चारणमेकमेवेत्येक एवाभिधाख्यो व्यापारः ।

एकस्मिंश्चोच्चारणे शब्दतो जातिप्रत्यय एव, न तु द्रव्यादयोऽप्यभिधीयन्त एव । एकार्थप्रतिपानशक्तिबोधे एकमुच्चारणमुपक्षीणमिति नार्थान्तरं द्रव्यं प्रतिपादयेदिति । कथं तर्हि 'द्रव्यमाह' इत्युक्तम् ?

अत्रोच्यते—व्यक्तेराक्षेपाल्लक्षणया वा भानादिति । एवं यथा शब्दानामर्थाभिधाने क्रमो न व्यवस्थित इति नास्त्येव । तथा हि—जात्यादिसर्वविशेषणविशिष्टं वस्त्वेकमेव परमार्थं प्रथमं शब्दात् प्रतीयते । तदनन्तरं भेदकल्पनायां क्रियमाणायां तद्वस्तुसंसर्गिणीनां जात्यादिमात्राणां कलापं युगदेकस्याः समूहालम्बनबुद्धेर्विषयतामापन्नमिच्छन् बुद्ध्यन्तरैः प्रविभजते = अनुमित्यादिबुद्धिभिर्जात्यादिमात्राकलापस्य जातिरियं द्रव्यमेतदित्यादिरूपैर्विभागं करोति श्रोता प्रविभक्तस्यापि संसृष्टत्वानुसन्धानमन्तरेणार्थक्रियाविषया प्रतिभा = बुद्धिर्नोत्पद्यत इति पुनः संसृष्टरूपमेव वस्तु प्रत्यवमृशति ।

अयं भावः—श्रोतुरभिधातुर्वा प्रथमं जात्यादिसंसृष्टार्थविषया बुद्धिरुपजायते । ततः स्वेच्छयाऽनुमित्यादिबुद्धिभिर्जात्यादिविभागं तत्र करोति । प्रविभक्तस्य च जात्यादेरर्थक्रियारूपव्यवहाराक्षमत्वात् पुनः संसृष्टवस्तुविषया बुद्धिरेव तस्य जायते । एवं चादावर्थप्रत्यायनकालेऽन्ते चार्थक्रियाकाले जात्यादीनां तदाश्रयस्य च प्रतिपत्तिक्रमो न विद्यत इति सिद्धम् ।

यस्तु मध्यमावस्थायां तेषां प्रतिपत्तिक्रमः, स न शब्दव्यापारात् , किन्तु प्रथमं वृत्ते शब्दव्यापारे प्रतिपत्तिक्रमकल्पनेति नास्त्येव प्रतिपत्तिक्रमः । किमर्था तर्हि मध्ये जात्यादितदाश्रयप्रतिपत्तिक्रमकल्पनेति तु न शङ्क्यम्, यो हि जात्यादिसंसृष्टार्थप्रतिपत्तावसमर्थः पुमान्, स तं संसृष्टार्थमवगन्तुं जात्यादीनां प्रतिपत्तिक्रममुपायं प्रत्यवमृशति । यथाऽभिन्नपदार्थग्रहणासमर्थः प्रकृत्यर्थादिविभागेनार्थं प्रतिपद्यते, तथा वाक्यार्थमपि कश्चित् पदार्थानुगमेनेति ।

योऽपि चाभिधाता श्रोता वा विभागेन मात्रासु प्रतिपत्तिं लभते, तस्यापि प्रत्यासत्त्या महाविषयत्वेनाभिव्यक्तिनिमित्तोपव्यञ्जनप्रकर्षेणोपलिप्सया बीजवृत्तिलाभानुगुण्येन वा ग्राह्यासु मात्रास्वनियमेन बुद्धिक्रमो व्यवतिष्ठते।

---

योऽपि चाभिधाता श्रोता वा जात्यादिसंसृष्टं पदार्थं प्रत्येतुमुपायभूतां संसृष्टार्थाद् विभागेन जातिद्रव्यलिङ्गसङ्ख्याकारकरूपासु मात्रासु = विषयेषु प्रतिपत्तिं लभते, तस्यापि प्रत्यासत्त्यादिभिः पञ्चभिर्निमित्तैर्ग्राह्यासु जात्यादिमात्रास्वनियमेन बुद्धिक्रमो व्यवतिष्ठते।

तथा हि—जात्यैव स्वाश्रयद्रव्यस्येतरद्रव्यविविक्तरूपेणावधारणमिति जातेर्द्रव्योपकारकत्वरूपा प्रत्यासत्तिः, किन्तु साऽनियता, यतो जातिर्द्रव्यमन्तरेण नोपलभ्यते। अनभिव्यक्ता च व्यवहाराक्षमेति जातिप्रत्ययात् पूर्वं द्रव्यस्य प्रत्यासत्तिरित्यनियमः। एवमाश्रयमन्तरेण लिङ्गादयो नावसीयन्त इति द्रव्यस्य प्रत्ययः प्राक्, लिङ्गादीनां तु पश्चात्। किन्तु लिङ्गादयो जातिं विनापि स्वरूपेण द्रव्यं दर्शयन्तीति क्वचिल्लिङ्गादीनामुपलिप्सया प्रत्यासत्त्या च भानं प्राक्, द्रव्यस्य तु पश्चादित्येवमनियतः क्रमः।

जात्यादीनां विभागेन बुद्धिक्रमस्यानियमेन व्यवस्थिततत्वादेव जात्यादीनां बुद्धिक्रम उपाय इति तद्विषया जात्यादयोऽपदार्थाः। संसृष्टार्थप्रतिपत्तिस्तु उपेयभूता नियतेति तद्विषयः संसृष्टार्थः पदार्थ इति। जात्यादीनां विभागेन बुद्धिक्रमे निमित्तभूताः प्रत्यासत्त्यादयस्तु पञ्च। ते यथा—प्रत्यासत्तिः, महाविषयत्वम्, अभिव्यक्तिनिमित्तोपव्यञ्जनप्रकर्षः, उपलिप्सा, बीजवृत्तिलाभानुगुण्यमिति।

तत्र प्रत्यासत्तिर्नाम उपकारितया सन्निधानम्। तथा च प्रतिपत्ता स्वार्थद्रव्यलिङ्गसंख्यारूपेष्वर्थेषु संसृष्टेषु यं प्रत्यासन्नं पश्यति, तं प्रथमतः प्रतिपद्यते। जातिश्चाश्रयोपकाराय। जातिस्वरूपवद्धि तद्द्रव्यं तया विविक्तेन रूपेण शक्यावधारणमिति। अतः प्रत्यासत्तिबलात् प्रथमं जातिं प्रतिपद्यते। लिङ्गं स्वप्रतिपत्तौ द्रव्यान्तरं नापेक्षते; सङ्ख्याकारके तु तदपेक्षे इति वस्त्वन्तरप्रतिपत्त्यनपेक्षत्वरूपान्तरङ्गत्वेन स्वाश्रयद्रव्यव्यावृत्त्युपकारकत्वरूपया प्रत्यासत्त्या च संख्याकारकाभ्यां प्रथमं लिङ्गं प्रतिपद्यत इति।

सा च जातिर्द्रव्यमन्तरेणानभिव्यक्ता व्यवहाराक्षमा इत्युपलिप्सया, लिङ्गादयश्चाश्रयमन्तरेण नावसीयन्ते=न ज्ञायन्त इति लिङ्गादीनामुपकारकत्वेन प्रत्यासत्त्या च द्रव्यं प्रतिपद्यते।

महाविषयत्वं यथा—सर्वव्यक्त्यनुगतत्वाज्जातिर्महाविषया, अतः स्फुटतरपरिच्छेद्यतया तां प्रथमतः प्रतिपद्यते। सर्वलिङ्गसाधारणत्वाद् द्रव्यं महाविषयम्, लिङ्गं तु लिङ्गान्तराद् व्यावर्तत इत्यल्पविषया इति महाविषयत्वप्रयुक्तेन क्रमेण बोधस्तेषाम्। अभिव्यक्तेर्निमित्तं यदुपव्यञ्जनम्, तस्य प्रकर्षो भूयस्ता भूयस्त्वं तस्य बुद्धिक्रमे निमित्तत्वम्। यथा—यस्य भूयांस्युपव्यञ्जनानि, तस्योपव्यञ्जनभूयस्त्वेन प्रथमतः परिच्छेदः। तत्र जातयः सर्वसाधारणतयाऽनेकव्यक्तिव्यङ्ग्यत्वाद् बहुलोपव्यञ्जनाः, द्रव्यं तु प्रत्येकं स्वावयवोपव्यङ्ग्यत्वादल्लोपव्यञ्जनम्।

उपलिप्सा यथा—यत्प्रथमत उपलब्धुमिष्टं भवति, तस्य प्रथममुपलब्धिः।

बीजवृत्तिलाभानुगुण्यं यथा—तस्य प्रत्ययस्योत्पत्तौ यदान्तरं कारणम्, तद् बीजम्। तस्य वृत्तिलाभः प्रबोधलाभः। तस्यानुगुण्यं कार्योत्पादनाभिमुख्यम्। यतस्ते प्रत्ययाः पूर्वप्रत्ययाहित-

तथा ह्याह—

एकोऽयं शक्तिभेदेन भावात्मा प्रविभज्यते।
बुद्धिवृत्त्यनुकारेण बहुधा ज्ञानवादिभिः ॥

स्थितलक्षणस्तु शास्त्रे पदार्थो वाक्यार्थो वा ? तथा ह्युक्तम्—'न वा पदस्यार्थे प्रयोगात्। यदत्राधिक्यं वाक्यार्थः स' इति।

सङ्ग्रहेऽप्युक्तम्—

नहि किञ्चित् पदं नामरूपेण नियतं क्वचित्।
पदानां रूपमर्थो वा वाक्यार्थादेव जायते ॥

---

संस्कारप्रबोधवशादुत्पद्यन्ते। जातिप्रत्ययो द्रव्यप्रत्ययस्य बीजवृत्तिलाभानुगुण्यवान् वर्तते, जातिप्रत्ययनिमित्तकत्वाद् द्रव्यप्रत्ययस्येति प्रथमतो जातौ प्रत्ययः, ततो जातिप्रत्ययाहितवासनापरिपाकपूर्वकं व्यक्तिं प्रतिपद्यते। व्यक्तिप्रत्ययो लिङ्गादीनामाश्रयपरतन्त्राणां प्रतिपत्तावनुगुण इति। एतत् सर्वं संक्षिप्याह कश्चित्—

एकोऽयं शक्तिभेदेन भावात्मा प्रविभज्यते।
बुद्धिवृत्त्यनुकारेण बहुधा ज्ञानवादिभिः ॥ इति।

संग्रहग्रन्थस्यैतत् पद्यं सम्भाव्यते, अग्रे द्वितीयचतुर्थपद्ययोस्तदीयत्वेन स्पष्टमुल्लेखात्।

अस्यार्थः—अयं तत्तत्पदार्थरूपो जात्यादिसंसृष्टो भावात्मा, बुद्धिवृत्त्यनुकारेण जात्यादिविषया या बुद्धिवृत्तयस्तदनुरोधेन करोतेः क्रियासामान्यार्थकत्वात् कल्पितेन जात्यादिविषयकशक्तिभेदेन, बहुधा ज्ञानवादिभिः पदात् स्वार्थद्रव्यलिङ्गसंख्याकारकविषयको बहुधा प्रत्ययो भवतीति वादिभिः प्रविभज्यते। वस्तुतस्तु जात्यादिसंसृष्ट एक एव पदार्थ इति भावः।

एवमपोद्धारपदार्थः शास्त्रे शास्त्रप्रक्रियानिर्वाहाय प्रकल्प्य लिङ्गैश्च स्वशब्दैश्चोपदर्शितः।

वस्तुतस्तु शास्त्रे पदार्थो वाक्यार्थो वा स्थितलक्षण एव। एतच्च शास्त्रे स्वशब्दैरेवोपदर्शितम्। तथा ह्युक्तम्—"न वा पदस्यार्थे प्रयोगात्" (भा० वा० १.२.६४)। 'अर्थे' इत्यस्य जात्यादिसंसृष्टेऽर्थः। "यदत्राधिक्यं वाक्यार्थः" (भा० वा० २.३.४९) इति।

अस्यार्थः—अत्र वाक्ये, यदाधिक्यं पदार्थादाधिक्यमधिकोऽर्थः संसर्गः संसृष्टार्थो वा, स वाक्यार्थ इति। एतेन पदार्थाद् भिन्नो वाक्यार्थः, न तु पदार्थघटित इति तदपोद्धारः कल्पित एवेति वाक्यार्थः स्थितलक्षण एवेत्युक्तं भवति।

सङ्ग्रहेऽप्युक्तम्—

नहि किञ्चित् पदं नामरूपेण नियतं क्वचित्।
पदानां रूपमर्थो वा वाक्यार्थादेव जायते ॥ इति।

अस्यार्थः—क्वचिदपि वाक्ये किञ्चिदपि पदं नामरूपेणेति समाहारद्वन्द्वः। नामरूपाभ्यां न हि नियतम्, यतः प्रकरणं तात्पर्यं वाऽनुसृत्य ज्ञायमानाद् वाक्यार्थादेव पौरुषेयबुद्धिप्रभव-

अन्वाख्येयस्य खल्वपि पदस्वरूपस्य कृतेऽपि रूपपरिग्रहे प्रकृतिप्रत्ययादीनां विभागे रूपपरिग्रहानियमो दृश्यते । मरुत्तेन्द्राण्यैकागारिकगिरिशश्रोत्रियक्षत्रियादिषु वाक्यावधिकेऽन्वाख्याने ।

---

कल्पनया प्रविभज्य पदानां रूपमर्थो वा जायते जायमानत्वेन प्रतीयत इति । सा च पदानां तदर्थानां वाक्याद् वा वाक्यार्थाद् वाऽपोद्धारकल्पना न नियतेति । तद्यथा 'अजापयः' इति नामपदमपि भवति, क्रियापदमपि । तयोरर्थौ च परस्परं भिद्येते । एवं सर्वत्रापि वाक्ये पदतदर्थापोद्धारकल्पना बहुविधा सम्भवतीति ।

अन्वाख्येयाश्च शब्दाः पदवाक्यभेदेन द्विविधाः । प्रकृतिप्रत्ययादिकं तु तत्तद्व्याकरणे दृष्टिभेदाद् भिन्नमित्यव्यवस्थिततत्वान्नान्वाख्येयम् । पदं तु व्यवस्थिततत्वादन्वाख्येयमिति । तत्रान्वाख्येयस्य पदस्वरूपस्य व्यवस्थिततत्वात् कृतेऽपि रूपपरिग्रहे = स्वरूपनिश्चये तल्लिङ्गभूतानां प्रकृतिप्रत्ययादीनां विभागे दृष्टिभेदेनाव्यवस्थिततत्वात् प्रकृतिप्रत्ययस्वरूपपरिग्रहानियमो दृश्यते । वाक्यावधिकेऽन्वाख्याने तु यद्यपि प्रायेण पदस्वरूपविभागकल्पनैव लिङ्गम् , सा च व्यवस्थिता, तथापि क्वचित् प्रकृतिप्रत्ययविभागकल्पनाऽपि क्रियते । सा चाव्यवस्थिता । तद्यथा मरुत्त-इन्द्राणी-ऐकागारिक-गिरिश-श्रोत्रिय-क्षत्रियादयः शब्दा वाक्यार्थावबोधकत्वाद् वाक्यरूपाः । तत्र च प्रकृतिप्रत्ययविभागकल्पनाऽनियता क्रियते ।

तथा हि—मरुतोऽस्य सन्तीति वाक्यार्थे = मरुतो देवा अस्य सन्ति यज्ञे परिवेष्टार इत्यर्थे 'तप् पर्वमरुद्भ्याम्' इति मरुत्-शब्दात् तप्प्रत्ययमेके इच्छन्ति, अपरे तु मरुद्भिर्देवैर्दत्त इति वाक्यार्थे ददातेर्निष्ठायामुपसंख्यानात् तदभावमाहुः ।

इन्द्राणीशब्देऽपीन्द्रस्य स्त्री इति वाक्यार्थे इन्द्रशब्दाद् ङीष्यानुमागम इत्येके । अपरे तु 'इन्द्रमानयति जीवयति' इत्यर्थे द्वितीयान्तेन्दुशब्दोपपदादानयतेः=अन्धातोर्ण्यन्तस्य कर्मण्यणि ङीप्रत्ययमाहुः ।

ऐकागारिकशब्दे एकमसहायमगारं प्रयोजनमस्य मुमुषिषोरिति वाक्यार्थे एकागारशब्दादिकट्प्रत्ययं पाणिनिरिच्छति; भाष्यकारस्तु ठञ्प्रत्ययम् ।

गिरिशशब्दे गिरौ शेते इति वाक्यार्थे गिरौ सप्तम्यन्ते उपपदे शेतेरौणादिको डप्रत्यय इति केचित् । अन्ये तु गिरिः कैलाशोऽस्त्यस्याश्रय इति विग्रहे लोमादित्वात् शप्रत्ययो मत्वर्थीय इति वदन्ति ।

श्रोत्रियशब्दे छन्दोऽधीत इति वाक्यार्थे श्रोत्रिय इति पदं निपात्यत इत्येको वाक्यार्थे पदवचनपक्षः । अस्मिन् पक्षे प्रकृतिप्रत्ययविभागकल्पना नास्ति । अपरस्तु छन्दसः श्रोत्रभावोऽधीत इत्यर्थे घञ्प्रत्यय इति । पक्षद्वयमप्येतद् भाष्ये स्थितम् ।

अत्र क्षत्रियशब्दघटके क्षत्रशब्दे प्रकृतिप्रत्ययविभागकल्पनाऽनियता । क्षतात् त्रायत इति विग्रहे क्षतशब्दाकारस्य पृषोदरादित्वाल्लोपः । 'क्षतः क्षयात् त्रायत इति विग्रहे क्षणोतेः सम्पदादित्वाद् भावे क्विपि क्षत्शब्दः' इति पक्षद्वयम् ।

तदुक्तम्—

अर्थात् पदं साभिधेयं पदाद् वाक्यार्थनिर्णयः ।
पदसङ्घातजं वाक्यं वर्णसङ्घातजं पदम् ॥ इति ।

व्युत्पत्तौ वाक्यस्थं पदम्, वर्णसङ्घातजं पदमिति ।

कार्यकारणभावेन खल्वपि सम्बन्धो निदर्शितः । तद्यथा—'तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशाद् बुद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति' इति ।

योग्यभावेनापि सम्बन्ध उपवर्णितस्तत्र तत्र—'अभिधानं पुनः स्वाभाविकम् । समाने वर्णे शोणकर्क(र्ण)हेमा(हया)दीनामश्वविषयत्वं गवादिषु चाप्रवृत्तिः' । तथेदमुक्तम्—'समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न' इत्येवमादि ।

---

एवं क्षत्रियशब्देऽपि क्षत्रशब्दाद् घप्रत्यय इति पाणिनिः । अन्ये तु क्षत्रशब्दादियप्रत्यय इति ।

एवं पदरूपे सुप्तिङन्तसमुदायरूपे वा वाक्ये पदविभागकल्पनयाऽन्वाख्याने लिङ्गमुक्तं सङ्ग्रहकृता—

अर्थात् पदं साभिधेयं पदाद् वाक्यार्थनिर्णयः ।
पदसंघातजं वाक्यं वर्णसंघातजं पदम् ॥ इति ।

अस्यार्थः—अर्थात् प्रयोजनात् , वाक्यार्थप्रतीतिरूपप्रयोजनवशादिति यावत् । साभिधेयम् अर्थसहितं पदं कल्प्यते । पदं तदर्थश्च वाक्ये वाक्यार्थे च कल्पितमेवेति भावः । यतः पदात् कल्पितार्थसहितात् कल्पितात् पदाद् वाक्यार्थनिर्णयो भवति । एवं वाक्यं पदसंघातजन्यमिति व्यवह्रियते वस्तुतः पदविभागाभावेऽपि । यथाऽखण्डमपि पदं वर्णसंघातकल्पनया वर्णसंघातजमिति व्यवह्रियत इति । तथा च वाक्यस्य पदस्य वा व्युत्पत्तौ = व्युत्पादने क्रियमाणे वाक्यस्थं पदमिति वर्णसंघातजं पदमिति विभागकल्पना क्रियते, न तु वस्तुतो वाक्यं पदं वा तथाभूतमिति भावः ।

अत्र पद्ये 'वर्णसंघातजं पदम्' इति दृष्टान्तविधयोपात्तम् ।

कार्यकारणभावरूपः सम्बन्धोऽप्यत्र व्याकरणे लिङ्गैरुपदर्शितः । तद्यथा—'तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशाद् बुद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति' इति ।

अस्यार्थः—तेऽपि हि बहिरत्यन्तासदर्थकाः शशशृङ्गादयः शब्दाः, तेषां शशशृङ्गादिपदार्थानाम्, उत्पत्तिप्रभृति आविनाशाद् बुद्धीरेव बहिरर्थासत्त्वाद् व्याचक्षाणा बुद्धौ सतोऽत एव शशशृङ्गादिशब्दजन्यबुद्धिविषयान् प्रकाशयन्तीत्यर्थः ।

इदमत्राकूतम्—यद्यपि शशशृङ्गादीनामसत्त्वेनोत्पत्त्यादिकं नास्ति, तथाप्युत्पत्त्यादिबुद्धयस्तु सन्त्येवेति ता एव = तद्बुद्धिविषयान् शशशृङ्गादिपदार्थानिव व्याचक्षते शशशृङ्गादिशब्दा इति ।

इदं वाक्यं यद्यपि प्रागप्युक्तम्, तथापि पूर्वं कार्यकारणभावरूपसम्बन्धस्य स्वरूपप्रदर्शनायोक्तम्, अत्र तु तस्मिन् सम्बन्धे लिङ्गप्रदर्शनायेति न पुनरुक्तिराशङ्क्या । तथा च शशशृङ्गादिशब्दानां स्वार्थप्रकाशनमेव लिङ्गं शब्दार्थयोः कार्यकारणभावरूपसम्बन्ध इत्यायातमिति ।

योग्यतारूपः शब्दार्थयोः सम्बन्धोऽपि लिङ्गैरुपवर्णितस्तत्र तत्र । तद्यथा भाष्ये—''अभिधानं पुनः स्वाभाविकम्'' (भा० वा० २.२.२९), 'समाने वर्णे शोणकर्णहयादीनामश्वविषयत्वं

तथाजातीयकाः खल्वप्याचार्येण स्वरितञितः पठिताः, ये उभयवन्तः, येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति ।

सङ्ग्रहकारः पठति—

शब्दार्थयोरसम्भेदे व्यवहारे पृथक् क्रिया ।
यतः शब्दार्थयोस्तत्त्वमेकं तत् समवस्थितम् ॥

स एव पुनराह—

सम्बन्धस्य न कर्तास्ति शब्दानां लोकवेदयोः ।
शब्दैरेव हि शब्दानां सम्बन्धः स्यात् कृतः कथम् ॥ २६ ॥

---

गवादिषु चाऽप्रवृत्तिः', "चार्थे द्वन्द्वः" (पा० २/२/२९) इति सूत्रे भाष्ये । तथेदमुक्तम्—"समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न" (भा० २/२/२९) इत्येवमादि । "तथाजातीयकाः खल्वप्याचार्येण स्वरितञितः पठिता ये उभयवन्तः, येषां कर्त्रभिप्रायश्चाकर्त्रभिप्रायश्च क्रियाफलमस्ति" (म० भा० १/३/७२) । अत्र समुद्धृतेषु भाष्यवाक्येष्वाद्ये वाक्येऽभिधानस्य स्वाभाविकत्वोक्त्या शब्दार्थयोर्योग्यतारूपः सम्बन्ध उपदर्शितः । द्वितीये वाक्ये शोणादिशब्दानामश्वे प्रवृत्त्या गवादिषु चाऽप्रवृत्त्याऽपि तदेव । तृतीयस्मिन् वाक्ये शब्दार्थयोर्योग्यतारूपे सम्बन्धे नित्ये सत्यपि केचिदर्थैर्न युज्यन्ते, छात्राः समानमीहमाना अधीयाना अपीत्यभिप्रेतम् । तुर्ये वाक्ये उभयवन्त इत्यस्य उभयपदवन्त इत्यर्थः । अत्र स्वरितञितां धातूनामनुबन्धाभ्यां पदद्वयसम्पादनद्वारा कर्त्रभिप्रायाकर्त्रभिप्रायरूपक्रियाफलाभ्यां सह तादृशधातूनां योग्यतारूपः सम्बन्धः प्रद्योत्यत इत्युक्तम् ।

सङ्ग्रहकारोऽपि शब्दार्थयोर्योग्यतालक्षणं सम्बन्धमभिप्रेत्य पद्यं पठति—

शब्दार्थयोरसम्भेदे व्यवहारे पृथक् क्रिया ।
यतः शब्दार्थयोस्तत्त्वमेकं तत् समवस्थितम् ॥ इति ।

अस्यार्थः—शब्दार्थयोरसम्भेदे विभागे कल्प्यमाने व्यवहारे तयोः पृथक् क्रिया सिद्ध्यति । न तु वस्तुभूता सा इति भावः । यतः शब्दार्थयोस्तत्तत्त्वमेकं समवस्थितमिति । शब्दार्थयोस्तत्त्वैक्यं त्वर्थस्य शब्दविवर्तरूपत्वेन । अत्रापि शब्दार्थयोस्तादात्म्येन योग्यतालक्षणः सम्बन्धः सूचितः।

सङ्ग्रहकार एव शब्दार्थयोर्योग्यतारूपं सम्बन्धमभिप्रेत्य पुनराह—

सम्बन्धस्य न कर्तास्ति शब्दानां लोकवेदयोः ।
शब्दैरेव हि शब्दानां सम्बन्धः स्यात् कृतः कथम् ॥ इति ।

अस्यार्थः—लोकवेदयोः लौकिकवैदिकशब्दार्थयोः सम्बन्धस्य कश्चन कर्ता नास्ति, लोकवेदयोरुभयोरप्यनादित्वात्, कर्तुरस्मरणाच्च । किञ्च, शब्दस्यार्थो विवर्त इति स्थितम् । तथा च शब्दार्थयोर्वस्तुत ऐक्येन शब्दैरेव शब्दानां सम्बन्धः कथं कर्तुं शक्यते ? एकस्मिन् सम्बन्धासम्भवात् । सम्बन्धस्य प्रतियोग्यनुयोग्युभयसापेक्षत्वादिति । एवं साध्वसाधुषूभयेषु शब्देष्वर्थैः सह सम्बन्धद्वयस्य सत्त्वेऽपि केचिदेव साधव एवं स्मृत्यर्थं व्याकरणस्मृतिप्रणयनार्थम् आचार्येण यथागमं यथाशास्त्रम् , अनुगम्यन्ते = अनुस्त्रियन्ते, नासाधवः । साधूनामल्प-

**शिष्टेभ्य आगमात् सिद्धाः साधवो धर्मसाधनम् ।**
**अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः ।। २७ ।।**

**नित्यत्वे कृतकत्वे वा तेषामादिर्न विद्यते ।**
**प्राणिनामिव सा चैषा व्यवस्था नित्यतोच्यते ।। २८ ।।**

---

यथैवान्यानि धर्मसाधनानि शिष्टोपदेशपारम्पर्येणागमाविच्छेदेनागतानि अनभिशङ्कनीयानि व्यवस्थितानि, यथा च प्रतिषिद्धानि हिंसानृतस्तेयादीनि, अशिष्टाप्रतिषिद्धानि च हिक्कितश्वसितकण्डूयितादीनि व्यवस्थितानि, तथा साध्वसाधुव्यवस्थानमप्यनवच्छिन्नपारम्पर्यमनभिशङ्कनीयं यथागमादेव सिद्धमिति ।। २७ ।।

यदि नित्यानां शब्दानामभिव्यक्तिर्जन्मादिविक्रियापत्तिर्वा सताम् , असतां वा सोपाख्यनिरुपाख्यत्वम् , सर्वथैषामप्रवृत्तशब्दव्यवहारा प्रथमा कोटिर्न विद्यते, न परा ।

---

त्वादसाधूनां च बहुत्वात् । तद् यथैकस्य गोशब्दस्य बहवोऽपभ्रंशा गावी गोणीत्यादयः । साधुषु ह्यन्वाख्यातेषु तदितरेऽसाधव इति प्रत्येतुं शक्यत इति ।। २६ ।।

धर्मे ये प्रत्यये चाङ्गमित्युक्तं प्राक् । तत्र प्रत्ययाङ्गतायाः स्वाभाविकत्वेन प्रसिद्धत्वाद् धर्माङ्गतां दर्शयितुमाह—**शिष्टेभ्य आगमात् सिद्धा इति ।**

शिष्टेभ्यः सकाशाद् ये शब्दास्तेषामेवागमादविच्छिन्नपारम्पर्यात् स्मरणात् , तादृशस्मरणरूपमागमं द्वारीकृत्य सिद्धास्ते धर्मसाधनम् । यद्वा—'अनादिरगृह्यमाणकारण आचारोपदेश आगमः' इत्युक्तलक्षणादागमादविच्छिन्नतया ये साधवः सिद्धास्ते शिष्टेभ्यः सकाशाद् धर्मसाधनमिति सिद्धाः ।

यत एवं स्मरन्ति शिष्टाः—"एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति । एवञ्च शिष्टेभ्य इति नाभेदेनागमविशेषणम् , असम्भवात् । असाधवस्त्वर्थप्रत्यायनस्याभेदे साधुशब्देभ्योऽर्थप्रत्यायनादवैलक्षण्ये सत्यपि विपरीता न धर्मसाधनम् । यद्वा विपरीतास्तु शिष्टेभ्य आगमात् सिद्धा ये साधवस्तद्विपरीतास्त्वर्थप्रत्यायनाभेदे सत्यप्यसाधवः, अतो न धर्मसाधनमित्यर्थः । साधुशब्देभ्य एव धर्मस्मरणादिति भावः । शब्दानां साधुत्वेऽसाधुत्वे चाविच्छिन्नं शिष्टोपदेशपारम्पर्यमेव प्रमाणमित्युक्तमेतत् पद्यं विवृण्वता **हरिणा ।**

तथा हि—यथैवान्यानि धर्मसाधनानि होलाष्टकादीनि शिष्टोपदेशपारम्पर्येणागमाविच्छेदेनागतान्यनभिशङ्कनीयानि व्यवस्थितानि, यथा च प्रतिषिद्धानि हिंसानृतस्तेयादीनि, अशिष्टाप्रतिषिद्धानि च हिक्कितश्वसितकण्डूयितादीनि व्यवस्थितानि; तथा साध्वसाधुव्यवस्थानमप्यनवच्छिन्नपारम्पर्यमनभिशङ्कनीयं यथागमादेव सिद्धमिति ।। २७ ।।

अविच्छिन्नेन शिष्टोपदेशपारम्पर्येण सिद्धं शब्दानां साधुत्वं तन्मूलकं च तेषां धर्मसाधनत्वं शब्दानामनादित्व एव घटत इति तेषामनादित्वं साधयन्नाह—**नित्यत्वे कृतकत्वे वेति ।**

अस्यार्थः—शब्दानां स्वरूपतो नित्यत्वे कृतकत्वे वा तेषामादिः प्रथमः कालो न विद्यते । शब्दानां कृतकत्वपक्षे सा चैषा नित्यता प्राणिनामिव व्यवस्थानित्यता उच्यत इति ।

ये चेश्वरकालपुरुषविद्याक्षेत्रज्ञान् विभक्ततत्त्वानाहुः, ये चानीश्वरकमकालमपुरुषमविद्यक्षेत्रज्ञमविद्यामात्रमेव मन्यन्ते।

ये चैकत्वानतिक्रमेण समुच्चितविरुद्धापरिणामशक्तिरूपनिर्भासपरिग्रहमपूर्वापरं विश्वमाचक्षते, तेषां सर्वेषां नास्ति कश्चिदप्रवृत्तप्राणिव्यवहारः प्रथमो नाम कालाध्वा। सा चेयमनादिरविच्छिन्ना प्रवृत्तिनित्यता। तथा ह्युक्तम् —'तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते' इति ॥ २८ ॥

---

अयं भावः—यथा प्राणिनां स्वरूपतो देहस्यानित्यत्वेऽपि तेषां तत्तद्देहपरिग्रहस्यानादित्वाद् व्यवहारे प्रवाहरूपेणावस्थानाद् व्यवस्थानित्या=व्यवस्थया व्यवहारे प्रवाहरूपेण विशेषतोऽवस्थानेन नित्यता उच्यते, तथा शब्दानां कृतकत्वेऽपि व्यवहारे प्रवाहरूपेणावस्थानाद् व्यवस्थानित्यतेति। सा चैषा कूटस्थनित्यतया अन्या व्यवस्थानित्यतेति संज्ञिता व्यवहारनित्यता।

अयं तु परमार्थः—यदि नित्यानां शब्दानां ध्वनिभिरभिव्यक्तिरिति कूटस्थनित्यतापक्षः, यद्वा उत्पत्तेः प्राक् स्वरूपेण सतामेव शब्दानां तत्तत्स्थानाभिघातैस्तत्तज्जन्यध्वनिभिर्वा जन्मादिविक्रियापत्तिरिति प्रधानवादिनामिव परिणामिनित्यतापक्षः, अथवा प्रागसत्योऽनुपाख्यः, कारणेभ्य उपलब्धात्मा सोपाख्यः; पुनः स्वतोऽन्यतो वा लब्धविनाशोऽनुपाख्य इत्यसत्कार्यवादिनां गौतमीयानामिवोत्पत्तेः प्रागसतां शब्दानां सोपाख्यत्वनिरुपाख्यत्वपक्षः, सर्वथाऽप्येषां शब्दानामप्रवृत्तशब्दव्यवहारा प्रथमा कोटिर्न विद्यते; यत्राऽयं शब्दव्यवहारो न प्रवृत्तपूर्व इति। परा कोटिरपि नास्ति, यत्रायं शब्दव्यवहारो न प्रवर्तयिष्यत इति। ये चेश्वरकालपुरुषविद्याक्षेत्रज्ञान् कार्येभ्यो विभक्ततत्त्वान् जगतः कारणानीत्याहुः।

तथा हि—केचिदीश्वर एव जगत्कारणमिति, केचित् काल इति, केचित्पुरुष इति। पुरुषोऽत्र पृथिव्यादिघातः; परमात्मनः प्रागुक्तत्वात्। केचित् त्वीश्वरस्य सङ्कल्परूपा विद्येति, "तदैक्षत बहु स्यां प्रजायेय" इति श्रुतेः।

केचित् क्षेत्रज्ञ इति साङ्ख्यीयः पुरुष इत्याहुः। अदृष्टवशात् पुरुषविषय औत्सुक्ये प्रधानस्य सञ्जाते हि पुरुषस्य भोगं सम्पादयितुं प्रधानं महदाद्यात्मना परिणमत इति सन्निधानमात्रेणायस्कान्तवत् क्षेत्रज्ञस्य जगत्सर्गे निमित्तत्वमिति।

ये च = शून्यवादिनो **माध्यमिका** अनीश्वरकमकालमपुरुषमविद्यमक्षेत्रज्ञमविद्यामात्रम् = भ्रान्तिमात्रमेव विश्वं मन्यन्त इति नास्ति भ्रान्तिप्रतिपन्नस्य जगतः किमपि कारणं तन्मते। ये चाद्वैतिन आत्मतत्त्वस्यैकत्वानतिक्रमेणेदं विश्वं सम्मूर्च्छितविरुद्धापरिमाणशक्तिरूपनिर्भासपरिग्रहम् = सम्मूर्च्छिताभिः, विकस्वराभिः, कार्योन्मुखीभिरिति यावत्। विरुद्धाभिर्विजातीयतत्तत्कार्यानुकूलत्वेन भिन्नाभिः, अपरिमाणाभिरियत्तयाऽपरिच्छेद्याभिः, शक्तिभिर्मायाख्याभिरात्मशक्तिभिः, ये रूपनिर्भासाः शक्तिषु वासनारूपेण स्थितानां रूपाणां निर्भासास्तेषां परिग्रहः स्वीकारोऽस्य विश्वस्येत्यर्थः, अपूर्वापरम्=अनाद्यनन्तमाचक्षते।

यत्तु—'ये चैकत्वानतिक्रमेण सम्मूर्च्छितविरुद्धापरिणामशक्तिरूपनिर्भासपरिग्रहमपूर्वापरं विश्वमाचक्षते' इति हरिटीकापाठमनुसृत्य सम्मूर्च्छितानां सम्भिन्नानां विरुद्धानामपरिणामानां शक्तिरूप-

**नानर्थिकामिमां कश्चिद् व्यवस्थां कर्तुमर्हति ।**
**तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः ।। २९ ।।**

को हि शिष्टः सम्भिन्नबुद्धिरपि लोकं प्रत्यनभिनिविष्टो दुर्ज्ञानं दुरध्येयं च स्वरसंस्कारादिनियमं लौकिकवैदिकानां शब्दानां प्रयोजनं व्यवस्थापयितुमुत्सहते ? न चानर्थको नियमः । कृतोऽपि शिष्टैरपरैर्न परिगृह्यते । प्रमाणं वा विदुषां लोके न स्यादिति । तस्मादनादिर्गुरुपूर्वक्रमागता शिष्टानुमानहेतुव्यभिचारा लक्षणप्रपञ्चाभ्यां पर्यायैः शब्दवती चाशब्दा च स्मृतिर्निबध्यते ॥ २९ ॥

---

निर्भासानां परिग्रहः स्वीकारोऽस्येति व्याख्यातं वृषभदेवेन, तदपेशलम्, तत्तत्कार्यरूपेण शक्तीनां परिणामस्यैव लोकेऽनुभवात्, प्रपञ्चस्य मायाशक्तिपरिणामत्वस्वीकाराच्च । तेषां पूर्वोक्तानां च सर्वेषां मते नास्ति कश्चिदप्रवृत्तप्राणिव्यवहारः प्रथमो नाम कालाध्वा । सा चेयमनादिरविच्छिन्ना प्रवृत्तिनित्यता=व्यवहारनित्यता शब्दार्थयोः । तदुक्तं 'सिद्धे शब्दार्थसम्बन्धे' इत्यादिवार्त्तिकभाष्ये—''तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते'' इति ।

अस्यार्थः—यस्मिन् तत्त्वं स एवायमिति प्रत्ययो न विहन्यते, न व्यावर्तते, तदपि नित्यमित्यर्थः । शब्देषु च देशकालभेदेनोच्चरत्सु स एवायमिति प्रत्ययो न विहन्यते, अतो नित्या इति भावः ॥ २८ ॥

ननु यद्यनादिशिष्टोपदेशपारम्पर्याविच्छेदेनैव शब्दानां साधुत्वं व्यवस्थितम्, तथा व्याकरणस्मृतिप्रणयनं व्यर्थमिति चेत्, न, अनादिशिष्टोपदेशपारम्पर्याविच्छेदेन शब्दानां साधुत्वज्ञानस्य कथञ्चित् सम्भवेऽपि तेषां स्वरसंस्कारादिनियमज्ञानस्य व्याकरणफलस्यान्यतोऽशक्यत्वात्, ''सम्यग् ज्ञातः सुप्रयुक्तः'' इति श्रुत्या स्वरसंस्कारादिनियमज्ञानपूर्वकं यथास्वरं प्रयुक्तस्यैव धर्मसाधनत्वाच्चेत्याह—**नानर्थिकामिमां कश्चिदिति ।**

अयमर्थः—कश्चित् कोऽपि पुण्यपापयोः सम्भिन्नबुद्धिः=अभिन्नबुद्धिः, समबुद्धिरिति यावत् । कथं नामायं लोकः खेदायासाभ्यां युज्येतेति व्युत्थितबुद्धिः = विरुद्धसञ्जातबुद्धिः, दुष्टबुद्धिरिति यावत् खेदायासकरीमपि शिष्टोपदेशपारम्पर्याविच्छेदसाध्यां शब्दानां साधुत्वव्यवस्थामाश्रित्य व्याकरणस्मृतिप्रणयनवैयर्थ्यापादनेऽभिनिविष्टो नास्तिकोऽपि दुर्ज्ञानम् उदात्तादिस्वराणां परिज्ञानेऽपि तेषामुच्चारणस्य व्याकरणज्ञानं विनाऽशक्यत्वाद् दुरध्येयं च लौकिकवैदिकशब्दानां स्वरसंस्कारादिनियमं व्याकरणस्य प्रयोजनं व्याकरणं विना लोकं प्रति न व्यवस्थापयितुमर्हति । अतो व्याकरणे कृतः शब्दानां स्वरसंस्कारादिनियमो नानार्थकः ।

किञ्च, व्याकरणे कृतोऽयं नियमोऽपरैः शिष्टैर्न परिगृह्यते, इति न, किन्तु परिगृह्यत एव । लोके विदुषां प्रमाणं वा न स्यात्, किन्तु स्यादेव । तस्माद् व्याकरणकृतायाः शब्दानां स्वरसंस्कारादिनियमरूपव्यवस्थायाः प्रागुक्तरीत्या नास्तिकान् प्रत्यप्यानर्थक्याभावात् शिष्टान् प्रति त्वखेदेनानायासेन च साधुत्वबोधनमपि व्याकरणस्मृतेः प्रयोजनम्, शास्त्रप्रक्रियास्मरणपूर्वकं साधुशब्दप्रयोगद्वारा धर्मसिद्धिरपि तस्याः प्रयोजनमित्येवंरीत्यानर्थक्याभावात्, अविच्छेदेन व्याकरणस्मृत्यु-

**न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।**
**ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ।। ३० ।।**

सर्वेऽपि वादिनो दूरमपि गत्वा स्वभावं न व्यतिवर्तन्ते । अदृष्टार्थानां च कर्मणां फलनियमे स्वभावसंविदागमप्रतिबद्धाः । को ह्यनवस्थितसाधर्म्यवैधर्म्येषु नित्यमलब्धनिश्चयेषु पुरुषतर्केषु विश्वासः, येष्वपि तर्कातीतः पृथग् विद्याचरणपरिग्रहेषु कश्चिदनुत्तरः पुरुषधर्मः श्रूयते, तेष्वपि तदर्थज्ञानमार्षमृषीणामागमिकेनैव धर्मेण संस्कृतात्म-

पनिबन्धनस्य स्थितत्वात्, अन्तर्हिताया अपि व्याकरणस्मृतेः तत्संस्कृतान्तःकरणैर्मुनिभिः पुनः स्मृत्योपनिबन्धादनादिर्गुरुपूर्वक्रमागता "साधुप्रयोगानुमिताँश्च शिष्टान्न वेद यो व्याकरणं न वेद" इति प्रागुक्तपद्योक्तदिशा शिष्टप्रयुक्तपृषोदरादिशब्दसाधुत्वबोधनद्वारा शिष्टानुमानहेतुः शिष्टप्रयुक्तेषु शब्देष्वदृष्टस्वबोधितसाधुत्वव्यभिचाराशिष्टप्रयोगसंवादिनीयं व्याकरणस्मृतिर्बहुभिः पर्यायैः प्रकारभेदैः शिष्टैराचार्यैर्निबध्यते ।

तद्यथा—क्वचिल्लक्षणप्रपञ्चाभ्यां निबध्यते, यथा—"विधिनिमन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" (पा० ३/३/१६१) इत्यत्र विधौ लिङित्येव लक्षणम् , निमन्त्रणादिकं त्वस्यैव प्रपञ्चः. तेष्वपि प्रेरणात्वस्यानुगतत्वादित्येकः प्रकारः ।

क्वचित् शब्दोपन्यासमुखेन साधुत्वस्मरणम् , यथा—अग्नेर्ढगिति ।

क्वचित् सूत्ररूपं शब्दप्रमाणमुल्लङ्घ्य शिष्टव्यवहाररूपं सदाचारं निमित्तीकृत्यैव साधुत्वस्मरणम् , यथा—इष्टमेवैतद् गोनर्दीयस्य = त्वकत्पितृको मकत्पितृक इति' इति ।

अस्यां कारिकायां व्याकरणस्मृतेः शिष्टाचार्यकर्तृके निबन्धने चत्वारो हेतवः 'तस्मात्' इति पदेन सर्वनाम्ना बुद्धिस्थपदार्थबोधकेनोक्ताः । तेष्वेको हेतुरनादित्वम् । तथा हि—व्याकरणस्मृतिर्निबन्धनीया अनादित्वादिति । अयं च हेतुः स्वप्रयुक्ते स्मृत्यन्तरमूलकत्वे पर्यवस्यति, उत्तरोत्तरस्मृतीनां पूर्वपूर्वस्मृतिमूलकत्वात् । तदपि च स्वप्रयुक्ते उपादेयत्वे पर्यवस्यतीति ।

यदि त्वन्धपरम्परैषाऽनादित्वकल्पनेत्युच्येत, तदा व्याकरणस्मृतेर्निबन्धनीयत्वे द्वितीयो हेतुर्गुरुपूर्वक्रमागतत्वमिति । इदञ्चानादित्वस्यैव परिष्कृतं रूपम् । यतश्चैषा व्याकरणस्मृतिपरम्परागुरुपूर्वक्रमागता, अतोऽन्धपरम्परैषेति वक्तुं न शक्यत इति ।

व्याकरणस्मृतेर्निबन्धनीयत्वे तृतीयो हेतुः—शिष्टानुमानहेतुत्वमिति । तथा हि—यदि व्याकरणस्मृतिर्न स्यात् , तदा इमे शिष्टा एतत्प्रयुक्ताश्च शब्दाः साधव इति ज्ञानमेव न स्यात् , इमे शिष्टा अशिष्टा वा, एतत्प्रयुक्ताः शब्दाः साधवोऽसाधवो वेत्यत्र विनिगमकाभावात् । सत्यां तु व्याकरणस्मृतौ तद्बोधितसाधुताशब्दप्रयोगात् तेषु शिष्टत्वानुमानम् , शिष्टप्रयुक्तत्वाच्च तत्प्रयुक्तशब्दानां साधुत्वानुमानमिति ।

व्याकरणस्मृतेर्निबन्धनीयत्वे चतुर्थो हेतुरव्यभिचारत्वरूपः । तथा हि—व्याकरणस्मृतिर्निबन्धनीया शिष्टप्रयोगाव्यभिचारिशब्दधर्मिकसाधुत्वप्रकारकबोधजनकत्वादिति । तथा चायं हेतुः शिष्टप्रयोगसंवादित्वे पर्यवस्यति । तस्मादेभिश्चतुर्भिर्व्याकरणस्मृतिर्निबन्धनीयैवेति प्रतिपादयन्त्या कारिकया व्याकरणशास्त्रारम्भः समर्थ्यतेऽशिष्टमुखमुद्रणेनेति ॥ २९ ॥

नामाविर्भवतीत्याख्यायते। स्वाभाविके हि तस्मिन् प्रयत्नः फलाद् व्यतिरिच्येत, स्वभावतश्च प्रत्यवायोऽपि तथाभूतः स प्रसज्येत ॥ ३० ॥

---

तदेवम्—"एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति धर्मसाधनसाधुशब्दप्रतिपादकव्याकरणशास्त्रारम्भसमर्थकादागमात् साधुशब्दानां धर्माङ्गतामभिधाय तदन्यस्य धर्मं प्रत्युपायभावमपाकरोति—**न चागमादृत इति।**

आगमादृते आगमं विना, धर्मः पुण्यं पापञ्च, धर्मपदं पापस्याप्युपलक्षणम्। तर्केण आगमामूलकेन केवलेन शुष्कतर्केण, न व्यवतिष्ठते न निश्चीयते। आगममूलकस्तु तर्को धर्मं व्यवस्थापयितुमर्हति। तदुक्तम्—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ इति।

आगमामूलकः पुरुषतर्कस्तु दृष्टमप्यर्थं व्यवस्थापयितुं न क्षमते, किमुतादृष्टस्वरूपं धर्मम्। सर्वेऽपि वादिनस्तर्कमालम्ब्य विचारे प्रवृत्ता दूरमपि गत्वा तर्कं परित्यज्यान्ते वस्तुस्वभावमेव समाश्रयन्ते, न वस्तुस्वभावं व्यतिवर्तन्ते।

तथा हि—युक्तिवादिनोऽप्यत्यन्तमनुबध्यमाना अन्ते वस्तुस्वभावमेव तथाभूतं ते वदन्ति। तद्यथा त्रैगुण्यवादी त्रिगुणात्मनः प्रधानस्य कारणस्याभेदे कथं कार्यभेद इति पृष्टस्तेषां गुणानामङ्गाङ्गिभावात् कार्यभेदमाह। गुणत्रयस्य परस्परमङ्गाङ्गिभाव एव कुत इति पुनः पृष्टः पुरुषोपभोगरूपफलात्मकनिमित्तबलादित्याह। कथं पुनरचेतनं प्रधानं पुरुषोपभोगाय प्रवर्तत इति पुनः पृष्टो न स्वभावादन्यं हेतुमाह। तदेवं दृष्टेऽपि न युक्तिः कृतास्पदा, यत्र भिन्नकार्यदर्शनाच्छक्यते शक्तिभेदानुमानम् अदृष्टस्वरूपे तु धर्मे दूरोत्सारितैव युक्तिः। तदेवमन्ते युक्तिवादिनाऽपि स्वभावस्यैव शरणीकार्यत्वेऽदृष्टार्थानां कर्मणां यागादीनां फलनियमे स्वभावसंविदागमसम्बद्धा अस्यैव कर्मण इदं फलम्, नान्यस्येति; अस्य कर्मण इदमेव फलमिति वा यः फलनियमस्तस्य नियामको यः प्रतिनियतः कर्मस्वभावस्तस्य ज्ञानमागमजन्यमेव, न तर्कजन्यमिति फलितम्।

न च दृष्टवस्तुसिद्धावपि पुरुषतर्केषु विश्वासः कार्यः, किमुतादृष्टवस्तुसिद्धौ। तथा हि—साधर्म्यवैधर्म्यमूलकाभ्यां दृष्टान्ताभ्यां हि तर्को वस्तु साधयितुं प्रक्रमते, ते च साधर्म्यवैधर्म्ये अव्यवस्थिते। सत्तया हि सर्वेषामपि साधर्म्यमेव, विशेषरूपतया च सर्वेषामपि वैधर्म्यमेवेति। अनियते च साधर्म्यवैधर्म्ये पुरस्कृत्य वस्तुसाधनेऽनिष्टमपि सिद्ध्येत्। किञ्च, तर्कस्याप्रतिष्ठितत्वात् तर्केण किमपि वस्तु निश्चेतुं न शक्यते, अतोऽप्यनाश्वासस्तर्केषु। तद् वक्ष्यते—"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः" (वा०पा० १/३४) इत्यादि।

किञ्च, येष्वार्षज्ञानवत्स्वलौकिकाचारसिद्धान्तवत्सु कपिलादिषु सूक्ष्मादिविषयत्वात् सर्वपुरुषातिशायि तर्कातीतं सर्वपदार्थदर्शित्वं श्रूयते, तेषामपि कपिलादीनामृषीणां तदार्षं ज्ञानम्। आर्षत्वं च वेदप्रभवत्वात् , ऋषिर्हि वेदोऽत्र, आगमिकेनैव = आगमविहितकर्मजन्येनैव धर्मेण संस्कृतचेतसामाविर्भवतीत्याख्यायते शिष्टैः। उपपद्यते चैतदेव। तथा हि—तेषां तदार्षं ज्ञानं

**धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः ।**
**न ताँल्लोकप्रसिद्धत्वात् कश्चित् तर्केण बाधते ।। ३१ ।।**
**अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु ।**
**भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ।। ३२ ।।**

---

बहुविकल्पेष्वपि शिष्टानां चरणेषु सन्ति साधारणाः प्रसिद्धाः पुरुषहितप्रतिपत्तिमार्गाः, येष्वन्यथा प्रवृत्तिर्लोकविरसा। न च ते तर्केण कदाचिदपि व्युदस्तपूर्वाः। काममागमोद्देशनिश्चयेनैव केचिद् विनिन्दितमपि लोकसमाचारविरुद्धाचरणं प्रतिपद्यन्ते ॥ ३१ ॥

इहाव्यभिचरिताभिमतसाहचर्यस्य दृष्टस्य सम्बन्धिनस्तत्सदृशस्य वा दर्शनाददृष्टे सम्बन्धिनि यज्ज्ञानमुत्पद्यते, तेनाप्रत्यक्षस्यार्थस्य प्रसिद्धिर्दुरवसाना।

तथा हि—अवस्थान्तरेषु विनिश्चितबलसत्त्वादीनां पुनरवस्थान्तरेषु पुरुषगम्येष्व-

---

स्वाभाविकम् = अहेतुकं यद्युच्येत, तदा तत्प्राप्तये योगाभ्यासादिकः प्रयत्नः फलाद् व्यतिरिच्येत, निरर्थको यत्नः स्यादिति फलितम्।

किञ्च, तस्य स्वाभाविकत्वे स्वभावस्य नियामकाभावेन तथाविधज्ञानप्रतिबन्धकप्रत्यवायोऽपि स्वभावतः प्रसज्येतेति तथाविधानानुत्पत्तिप्रसङ्गः, तस्मात् तर्कः स्वभावश्चेति द्वयमपि धर्मव्यवस्थापने न प्रभवत इत्यागम एव कर्मस्वभावबोधनपुरःसरं धर्मव्यवस्थापने प्रभुरिति हृदयम् ॥ ३० ॥

ननु सन्त्यागमा अपि विप्रलम्भभूयिष्ठाः, यथा वाममार्गाः। तेऽपि हि 'न काञ्चन परिहरेत्' इत्यादिवेदान्तदर्शनमन्यथा परिकल्प्य निरङ्कुशं कामिनीसुरासेवनादौ प्रवर्तकाः। अतः कुत आगमाद् धर्माः प्रतिपत्तव्या इत्याशङ्क्याह—**धर्मस्य चाव्यवच्छिन्ना इति ।**

अयं भावः—आगमभेदेन बहुप्रकारेषु सत्स्वपि शिष्टानां सिद्धान्तेषु सर्वशिष्टसाधारणा लोकप्रसिद्धा अपि सन्त्येव पुरुषहितप्रतिपत्तिमार्गा यत्राविप्रतिपत्तिः सर्वेषाम्। अत एव च सर्वैरत्यागादेतत्कालं यावदविच्छेदस्तेषामागममार्गाणाम्। श्रुतेर्वाऽपौरुषेयतया श्रुतिरूपस्मृतिमूलाविच्छेदादविच्छिन्नश्रुतिस्मृत्याख्यस्तादृश आगममार्गोऽद्यापि वर्तते, तत एवागमाद् धर्मः प्रतिपत्तव्यः। तांश्चागममार्गान् लोकप्रसिद्धत्वाद् नाद्यापि कश्चित् तर्केण बाधते, न च तर्केण बाधितपूर्वः। कामं 'न काञ्चन परिहरेत्' इत्याद्यागमोद्देशार्थमन्यथा परिकल्प्य लोकसमाचारविरुद्धाचरणं प्रतिपद्यन्ते केचित् , तेऽपि ह्यागमसमाश्रयेणैव लोकप्रसिद्धमार्गं बाधन्ते, न तर्कसमाश्रयेण। अत आगम एव धर्मप्रतिपत्तिहेतुः, न तर्क इति फलितम्।

संक्षेपेण कारिकार्थस्तु धर्मस्य येऽव्यवच्छिन्नाः श्रुतिस्मृत्याख्याः पन्थान आगममार्गाः सर्वशिष्टसम्मतत्वेन व्यवस्थिताः, तान् मार्गान् लोकप्रसिद्धत्वाल्लोके आचाररूपेण दर्शनात् कश्चिदपि तर्केण न बाधते, यतो लोकविरोधेऽनुमानरूपस्तर्को नावतिष्ठते, प्रत्यक्षबाधादिति ॥ ३१ ॥

इदानीमर्थाधिगमे तर्कस्य सामर्थ्यमपनिनीषुराह—**अवस्थादेशकालानामिति ।**

पुरुषगम्येषु वा दृश्यन्ते स्वभावव्यभिचारिणः। बाह्यानामपि बीजौषधिप्रभृतीनामवस्थाभेदादुपलभ्यते शक्तिव्यभिचारः।

तथा देशभेदादपि। अतिशीतो हैमवतीनामपां स्पर्शः। स तु बलाहकाग्निकुण्डादिषु तद्रूपाणामेवात्युष्ण उपलभ्यते। तत्र रूपसामान्यादपहृतबुद्धिः परोक्षविशेषो दुर्ज्ञानं भेदमर्वाग्दर्शिनो दर्शनमात्रेणागम्यमागमेनैव प्रपद्यते।

कालभेदादपि। ग्रीष्महेमन्तादिषु कूपजलादीनामत्यन्तभिन्नाः स्पर्शादयो दृश्यन्ते। तत्र सूक्ष्ममवस्थानविशेषं प्राकृतमप्राकृतगम्यमागमचक्षुरन्तरेणाप्रत्यक्षमनुमानमात्रेणानिश्चितं कः साधयितुमसम्मूढः प्रयतते॥ ३२॥

---

एते ह्यवस्थादेशकालाः स्वतो भिद्यमानाः स्वसंसर्गिपदार्थशक्तिं भिन्दन्ति। एवं चैकपदार्थदर्शनेन तज्जातीयस्यान्यस्य तथात्वनिश्चयः=तादृशत्वावधारणं नास्ति।

तथा हि—इहाव्यभिचरिताभिमतसाहचर्यस्य दृष्टस्य सम्बन्धिनो धूमादेः, तत्सदृशस्य वाऽऽलोकादेर्दर्शनाददृष्टे=परोक्षे सम्बन्धिनि वह्न्यादौ यज्ज्ञानमुत्पद्यते, तेनाप्रत्यक्षस्य पदार्थस्य वह्न्यादेः, पक्षे पर्वतादौ प्रसिद्धिः=सत्तानिश्चयो दुरवसाना, एकजातीयानामपि पदार्थानां स्वभावव्यभिचारदर्शनेन वह्निधूमयोर्व्यभिचारसंशयेनानुमित्युत्तरमपि पर्वते वह्निसंशयसम्भवात्।

तथा हि—अग्निं न व्यभिचरति धूमम् इत्यभिमानमात्रमेतत्। न पुनरव्यभिचारः, यतोऽवस्थाभेदादनेकरूपाः पदार्थाः। तत्र स्यादपि कश्चिद् धूमो यो नाग्नेः। यथा शालूकादपि शालूकः, गोमयादपि शालूकः। तथा वह्न्यजन्योऽपि कश्चिद् धूमः स्यात् , अवस्थादेशकालकालान्तराणामन्यतमेषु सत्सु। दृश्यन्ते चावस्थान्तरेषु विनिश्चितबलसत्त्वप्रज्ञामेधादीनां पुंसां पुनरवस्थान्तरेषु पुरुषगम्येष्वपुरुषगम्येषु वा स्वभावा व्यभिचारिणः। तद्यथा यौवने पुंसां यादृशं बलसत्त्वादिकम्, न तादृशं वार्धके। बलम् = शारीरं सामर्थ्यम्, सत्त्वं तु ज्ञानानुकूलं मानसं सामर्थ्यम् इत्येतज्जातीयक आध्यात्मिकपदार्थानामवस्थाभेदात् स्वभावभेदो बाह्यानामपि पदार्थानाम् एकजातीयानामपि पदार्थानां सहायभेदादनेककार्यजननसामर्थ्यम्। तद्यथा एकस्यैवाञ्जनयन्त्रस्य सहायभेदात् सेचनतिलादिपीडनगोधूमादिपेषणक्षेत्रकर्षणाद्यनेककार्यानुकूलं सामर्थ्यम्। यथा वा एकस्यैव मकरध्वजादिरसस्यानुपानरूपसहायभेदेन तत्तद्रोगापनयनसामर्थ्यम्। यथा वा धान्यादिबीजानामवस्थान्तरेऽङ्कुरजननसामर्थ्याभावः। तत्र प्राकृतपुरुषागम्यं मूषिकाघ्रातशालिबीजानामवस्थान्तरेऽङ्कुरजननसामर्थ्याभावः। काष्ठौषधीनां च वर्षात्ययप्रयुक्तं तत्तद्रोगापनयनासामर्थ्यप्रयोजकमवस्थान्तरमपि तथा = प्राकृतपुरुषागम्यमेव। औषधेश्च पिप्पल्याख्यस्यार्द्रावस्थायां कफजननशक्तिः शुष्कस्य च त्रिदोषशमनशक्तिरिति, इत्यवस्थाभेदः।

तथा देशभेदादपि स्वभावभेदः शक्तिभेदश्च। तद्यथा—हैमवतीनामपामतिशीतः स्पर्शः। तद्रूपाणामेव चापां बलाहकेष्वग्निकुण्डादिषु च स्थितानामत्युष्णः स्पर्श उपलभ्यते। तदेवमवस्थादिभेदाद् वस्तूनां स्वभावभेदे शक्तिभेदे च सिद्धे सति यस्यार्वाग्दृशः = बाह्यदृष्टेः क्वचित् पिप्पल्यादिपदार्थे आर्द्रे शुष्के वा रूपसादृश्यदर्शनेन स्वभावभेदबुद्धिः शक्तिभेदबुद्धिर्वाऽपहृता, अत एव तादृशपिप्पल्यादिपदार्थगतोऽवस्थाभेदात् स्वभावभेदः, शक्तिभेदो वा यस्य परोक्षः,

**निर्ज्ञातशक्तेर्द्रव्यस्य तां तामर्थक्रियां प्रति ।**
**विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते ।। ३३ ।।**

---

अग्न्यादीनां काष्ठादिविकारोत्पादने दृष्टसामर्थ्यानामभ्रपटलादिषु द्रव्येषु तथाभूतं सामर्थ्यं प्रतिबध्यते। तथा मन्त्रौषधिरसादिभिर्योग्येष्वपि द्रव्येषु दाहादिकं प्रतिबध्यते। तथैकस्मिन् विषये दृष्टसामर्थ्यानां पुनर्विषयान्तरेषु द्रव्याणां दुरवसानाः शक्तयः ॥ ३३ ॥

---

स पुमान् दुर्ज्ञानं दर्शनमात्रेणागम्यं पिप्पल्यादिपदार्थस्य स्वभावभेदः शक्तिभेदश्च, मकरध्वजादिरसानां वाऽनुपानभेदप्रयुक्तं स्वभावभेदं च चरकाद्यागमेनैव प्रतिपद्यते, तत्त्वागमचक्षुरन्तरेण तर्कशतेनापि; तर्कस्याव्यवस्थिततत्वात् ।

एवं कालभेदादपि वस्तूनां स्वभावभेदः शक्तिभेदश्च । तद्यथा—ग्रीष्महेमन्तादिषु कूपतटाकनद्यादिजलानामत्यन्तभिन्नाः स्पर्शादयो दृश्यन्ते । तथा हि—ग्रीष्मे कूपजलं शीतलं भवति, हेमन्ते तु उष्णम् । एवमन्यत्रापि ।

स्त्रीनपुंसकयोर्वा कालभेदात् स्पर्शभेदः । तदुक्तम्—

कूपोदकं वटच्छाया श्यामा स्त्री चेष्टकागृहम् ।
शीतकाले भवेदुष्णमुष्णकाले च शीतलम् ॥ इति ।

एवं नपुंसकस्यापि कालभेदेन स्पर्शभेदः । तदेवं सूक्ष्ममत एवाप्रत्यक्षमनुमानमात्रेणानिश्चितं च वस्तूनामवस्थाभेदप्रयुक्तं स्वभावभेदं शक्तिभेदं च प्राकृतम्, स्वाभाविकम्, अवस्थेतरनिमित्तानपेक्षमिति यावत् । अप्राकृतैः प्रत्यक्षधर्मभिरेव पुंभिर्गम्यं कोऽसम्मूढस्तर्कबलेन साधयितुं प्रयतेत ।

पदसमन्वयोत्थः कारिकार्थस्तु—अवस्थादेशकालानां भेदाद् भावानां भिन्नासु शक्तिषु सिद्धास्वनुमानेन तासामप्रत्यक्षविशेषाणां शक्तीनां प्रसिद्धिनिश्चयोऽतिदुर्लभः, प्रत्यक्षसाहचर्यदृष्टान्तबलेनैव तर्कप्रवृत्तेः । किन्त्वागमेनैव तत्तच्छक्तिभेदप्रसिद्धिरिति ।

तत्त्वसंग्रहे तु (४२६ पृष्ठे) इयं कारिका एवं व्याख्याता—अवस्थादेशकालभेदेन पदार्थानां शक्तयो भिन्नाः, अतो न शक्यतेऽनुमानात् तद्भावनिश्चयः कर्तुम् । न ह्येवं शक्यतेऽनुमानात् प्रत्येतुम्—देवदत्तो भारोद्वहनसमर्थो न भवति, देवदत्तत्वाद् बालावस्थदेवदत्तवदिति ।

अत्र ह्यवस्थाभेदेन शक्तिभेदसम्भवाद् व्यभिचारः । तथा देशभेदेनामलकीखर्जूरादीनां रसवीर्यविपाकभेदो दृश्यते । तत्र नैवं शक्यते कर्तुम्, सर्वामलकी कषायफला, अनुभूयमानामलकीवदिति ।

तथा कालभेदेन कूपोदकादीनां शीतोष्णादिभेदः सम्भवति । तत्र सर्वा आपः शीता इति न शक्यते निश्चयः कर्तुमित्येवमादि । अवस्थादेशकालानामिति भेदादित्यपेक्ष्य षष्ठी । भावानामिति प्रसिद्ध्यपेक्षया इति ॥ ३२॥

अवस्थादेशकालभेदाद् भिन्नानां भावशक्तीनामनुमानेन प्रसिद्धेरतिदुर्लभत्वमुक्तमुपपिपादयिषन्नाह—**निर्ज्ञातशक्तेरिति** ।

**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ।। ३४ ।।**

---

अन्यद् द्रव्यं गुणेभ्यो व्यपदेशात् । तद्यथा—सति विशेषणविशेष्यभेदे राज्ञा राष्ट्रं विशेष्यते, न परिव्राजकेन । विशेष्यते वा चन्दनेन गन्धः, न रूपादिभिः । तस्मादन्यद् द्रव्यं गुणेभ्य इत्यनुमानेन द्रव्ये व्यवस्थापिते नायमपदेशो युक्त इत्याहुः ।

---

अयं भावः—तां तां स्वानुरूपामर्थक्रियां प्रति निर्ज्ञातशक्तेर्निश्चितसामर्थ्यस्य द्रव्यस्य सा शक्तिः क्वचित् प्रतिबध्यते । तद्यथा—अग्न्यादीनां काष्ठादिदाहोत्पादने दृष्टसामर्थ्यानामभ्रपटलादिषु द्रव्येषु तत्कार्यजनकं सामर्थ्यं प्रतिबध्यते । तथा चायमग्निरभ्रपटलं दहति, अग्नित्वात् काष्ठवदिति नानुमातुं शक्यम् । तथाविशिष्टद्रव्यसम्बन्धेऽपि सा शक्तिः प्रतिबध्यते । यथा दाहयोग्येष्वपि द्रव्येषु काष्ठ-पादादिषु मन्त्रौषधिरसादिभिर्दाहादिकं प्रतिबध्यते । तेन न शक्यते दर्शनमात्रेण सर्वेष्वग्निषु दाहशक्ते-रनुमानं कर्तुम् । एवं चैकस्मिन् विषये दृष्टासामर्थ्यानां द्रव्याणां पुनर्विषयान्तरेषु शक्तयो-न निश्चेतुं शक्यन्त इत्यागमेनैव ता अवसेयाः, न तर्केणेति ।। ३३।।

यस्मिन् तर्करूपे प्रमाणे पदार्थस्वभावसाधनायेतरप्रमाणेभ्यो विविच्य समाश्रितेऽपि पदार्थ-स्वभावसिद्धेः प्राग् उक्तरीत्या व्यभिचारः, किं तस्यादरादित्याह—**यत्नेनानुमितोऽप्यर्थ इति** ।

अयं भावः—कुशलपुरुषतारतम्येन तर्कस्यानवस्थिततत्वम् । तद्यथा—द्रव्यस्य गुणेभ्योऽ-न्यत्वं व्यपदेशात् = व्यपदिश्यते व्यावर्त्यते स्वाश्रयोऽनेनेति व्युत्पत्त्या व्यपदेशो विशेषणम्, द्रव्यं प्रति विशेषणत्वादिति फलितम्, तार्किकेण सांख्यं प्रति प्रसाध्यते ।

तथा हि—द्रव्यं गुणेभ्योऽन्यत्, गुणं प्रति विशेष्यत्वात् । यत्र यत्र विशेषणविशेष्यभावः, तत्र तत्रान्यत्वम् , यथा राजराष्ट्रयोः, यथा वा चन्दनगन्धयोरिति सामान्यव्याप्तावन्वयी दृष्टान्तः । यद्यप्यनेन विशेषणविशेष्यभावरूपेण हेतुना द्रव्यस्य गुणेभ्योऽन्यत्वं व्यवस्थाप्यते, तथापि नायमपदेशः = अपदिश्यते साध्यवत्तया प्रसाध्यते पक्षोऽनेनेति व्युत्पत्त्याऽपदेशो हेतुर्युक्तः, विशेषण-विशेष्यभावस्यान्यत्वव्यभिचारित्वात् । तथा हि—वनस्य वृक्षाभेदेऽप्याम्राणां वनमिति विशेषण-विशेष्यभावस्यान्यत्वव्यपदेशो दृश्यत इत्यन्वयव्यतिरेकोभयव्यभिचारः ।

किञ्च, यथा विशेषणविशेष्यभावो नान्यत्वनियामकः, तथाऽन्यत्वमपि न विशेषणविशेष्य-भावनियामकम् । तद्यथा—सति विशेषणविशेष्यभेदे राज्ञा राष्ट्रं विशेष्यते—युधिष्ठिरस्य राष्ट्रमिति । परिव्राजकस्तु राष्ट्राद्भिन्नोऽपि न विशेषणं भवति—परिव्राजकस्य राष्ट्रमिति, अयोग्यत्वात् । एवमेव चन्दनेन गन्धो विशेष्यते—चन्दनस्य गन्ध इति, न रूपादिभिः—रूपादीनां रूपस्य वा गन्ध इति, अयोग्यत्वादेव । तस्मात् सम्बन्धप्रतियोगित्वयोग्यतैव विशेषणत्वनियामिका, नान्यत्वम् ।

विशिष्टाविशिष्टाभिधेयनिबन्धनत्वात् शब्दानाम्। चन्दनशब्देन हि विशिष्ट-रूपादिवचनेन विशेषणमर्थवद्गन्धादीनाम्। रूपादिमात्रवचनत्वात्तु रूपादीनां तावतोऽर्थस्य निर्ज्ञातत्वादनर्थकं विशेषणम्। तथा हि—कस्यायं पुरुष इति प्रश्ने विशेषान्तरावच्छेदार्थं राज्ञ इति व्यपदिश्यते, न तु निर्ज्ञातत्वात् पुरुषस्येति।

अपर आहुः—पदसमूहैकदेशभावेऽपि पदमृचा व्यपदिश्यते, न पदेन ऋक्।

अपर आह—एकत्वाभ्युपगमेनैव चन्दनेन व्यपदेशो गन्धादीनाम्, रूपादिभि-रव्यपदेश इति विरुद्धत्वादसिद्धमेतत्। श्रुतिविशेषसन्निधानासन्निधानकृतस्तु पूर्वपक्षो-पन्यासः।

---

योग्यता तु सम्बन्धप्रतियोगितावच्छेदकधर्मरूपाऽपि स्वभावादनतिरिक्ता, स्वस्य भावोऽसाधारणो धर्म इति व्युत्पत्तेः। इत्येवं न प्रागुक्तानुमानेन द्रव्यस्य गुणेभ्योऽन्यत्वं सिद्ध्यतीत्याहुः सांख्याः।

किञ्चान्यदपि चन्दनस्य गन्धविशेषणत्वे रूपादीनां तदविशेषणत्वे च कारणम्। तथा हि—चन्दनशब्दो हि विशिष्टसन्निवेशव्यवच्छिन्नान् रूपादीनाहेति विशिष्टाभिधेयनिबन्धनः। यतः साङ्ख्यमते विलक्षणसन्निवेशवन्तो रूपादय एव चन्दनम्, न तु तेषामाश्रयो द्रव्यं नाम किञ्चिदस्ति। रूपादिशब्दास्तु सर्वपदार्थसाधारणान् रूपादीनाहुरित्यविशिष्टाभिधेयनिबन्धनाः।

एवञ्च यतो विशिष्टरूपादिवाचिना चन्दनशब्देन गन्धादीनां विशेषकरणमर्थवत्, पुष्पादिस्वरूपाद् रूपादिसमुदायाद् गन्धस्य व्यवच्छेदरूपफलस्य सत्त्वात्। चन्दनस्य गन्ध इति, न तु पुष्पादेरिति। रूपादीनां रूपस्य वा गन्ध इत्युक्तौ तु रूपादिसामान्यवचनात् तावतोऽर्थस्यैतत्प्रयोगात् प्रागपि निर्ज्ञातत्वादनर्थकं रूपादिभिर्गन्धस्य विशेषणकरणम्। अनिर्ज्ञातं हि विशेषणं भवति, विशेष्यं तु निर्ज्ञातमिति हि विशेषणविशेष्यभावे नियमः, विधेयत्वेनापूर्वत्वात्।

किञ्च, रूपादीनां गन्ध इति न कुतश्चिदवच्छेदो गन्धस्य प्रतीयते, रूपादिशब्दस्य सर्वपदार्थ-साधारणरूपादिमात्रवचनत्वात्। केवलमत्र गन्धस्य रूपादिसहकारित्वं रूपादिसामानाधिकरण्यरूपं प्रतीयते। तच्च गन्धशब्दादेवावसितम्। गन्धस्य रूपादिभिर्विनाऽभावादित्येवमनर्थकं रूपादिभिर्गन्धस्य विशेषणम्।

किञ्च, यदा पुरुषस्य पारतन्त्र्यं निर्ज्ञातं कस्यचिद् भृत्योऽयमिति स्वामिविशेषस्तु न निर्ज्ञातः, तदा कस्यायं पुरुष इति प्रश्ने स्वाम्यन्तरव्यवच्छेदाय राज्ञ इति विशेषणं व्यपदिश्यते। पुरुषस्तु न विशेषणं राज्ञः, निर्ज्ञातत्वात्। एवञ्च यथा राज्ञोऽपि पुरुषत्वाद् वस्तुतः पुरुषादनन्यत्वेऽपि राजैव विशेषणम्, न पुरुषः, पुरुषविशेषादन्यत्वेऽपि च राजैव विशेषणम्, न पुरुषः, तथा चन्दनस्य गन्धादनन्यत्वेऽन्यत्वे वा चन्दन एव विशेषणं न गन्धम्, निर्ज्ञातत्वात्।

एवञ्च विशेषणत्वं नान्यत्वसाधकम्, अभिन्ने भिन्ने च सत्त्वेन व्यभिचारित्वादिति सांख्या-नामभिप्रायः।

अपरे तु तर्कस्यानवस्थितत्त्वं तेनाप्रमाणत्वञ्च वर्णयन्तो विशेषणत्वस्यान्यत्वव्यभि-चारित्वेऽन्यदुदाहरणमाहुः। तद्यथा—पदसमूहस्य वाक्याख्यस्य पदमेकदेश ऋगपि एकदेश इति,

तस्माद् दृष्टाददृष्टमनुगम्यत इत्यविरोधात् सिद्धमेतत् ।

तथा पाकाद्यनुमानार्थानि क्रियाविशेषेषु प्रतिनियतान्यङ्गानि विप्रलम्भार्थान्यपि कैश्चित् कथञ्चिदुपादीयन्ते ॥३४॥

---

पदान्येव हि विशिष्टसन्निवेशयुक्तानि ऋग् इत्येवमभेद ऋक्पदयोः । एवं सत्यपि ऋचा पदं विशेष्यते, अस्या ऋच इदं पदमिति, न तु पदेन भेदेनाभेदेन वा ऋग् विशिष्यते, अस्य पदस्येयम् ऋगिति, इदं पदं ऋगिति वा । यतः पदानि श्लोकादिसाधारणानीति न ऋचं सजातीयाद् विजातीयाद् वा व्यवच्छेत्तुं प्रभवन्ति, अन्यत्रापि सत्त्वेनाव्यभिचारित्वात् । व्यभिचारि हि विशेषणं भवति । तदुक्तमभियुक्तैः— "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति ।

तदेवम् ऋचः पदेभ्योऽभेदेऽपि विशेषणत्वान्न विशेषणत्वं गुणानां द्रव्यान्यत्वसाधकमिति ।

अपरस्तु विशेषणत्वस्यान्यत्वसाधकत्वं न केवलमभिन्नेऽपि सत्त्वप्रयुक्तेन व्यभिचारित्वेनासम्भवि; किन्तु विरुद्धत्वस्वरूपासिद्धत्वाभ्यामपि दूषणाभ्यामित्याह ।

तथा हि—चन्दनगन्धयोरेकत्वाभ्युपगमेनैव चन्दनस्यायं गन्ध इति व्यपदेशः, रूपादीनां गन्ध इति व्यपदेशाभावश्च, यतः सामान्येन चन्दनशब्दोपात्त एव गन्धरूपो भावो गन्धशब्देन विशिष्य व्यपदिश्यते, अतो गन्धविशेषणत्वं चन्दनस्य, मदिरागरलादौ तु चन्दनशब्दानुपात्ते पदार्थे न चन्दनस्य विशेषणत्वम्, सर्वत्रैव च समुदायवाचिना शब्देनोपात्तस्य विशेषरूपेण विशेष्यत्वमिति सर्वत्रैव विशेषण-विशेष्यभावस्थले समुदायावयवभावनियमः । यथा गृहस्य द्वारशाला इति । शालासमुदायो ह्यत्र गृहम्, अतस्तद्विशेषणम्, द्वारशाला त्ववयव इति विशेष्यम् । 'गृहस्य हस्ती' इति तु न व्यपदिश्यते, हस्तिनो गृहानवयवत्वेन गृहपदेनानुपात्तत्वात् ।

यत्र तु 'एतद् गृहस्य हस्ती अयम्, न तु तद्गृहस्य' इति व्यपदिश्यते, तत्र गृहपदं गृहहस्तितत्स्वामि-घटिते समुदाये लाक्षणिकमिति तथा व्यपदेशोपपत्तिः । एवं राज्ञो राष्ट्रमित्यादावपि राजपदं राष्ट्रघटिते समुदाये लाक्षणिकमिति समुदायावयवभावोपपत्तिः । सत्यपि चाभेदे न द्वारशाला गृहस्य विशेषणमिति, तस्या गृहघटितसमुदायरूपत्वाभावात् ।

तदेवं विशेषणविशेष्ययोरनन्यत्वे सिद्धेऽन्यत्वसाधनाय प्रयुक्तो विशेषणत्वरूपो हेतुर्विरुद्धः, साध्याभावव्याप्यत्वात् स्वरूपासिद्धश्च, विशेष्यरूपे पक्षेऽवर्तमानत्वादित्यायातम् ।

यदि तु विशेषणं पक्षीक्रियते, तदा स्वरूपासिद्धत्वाभावेऽपि विरुद्धत्वं को वारयिता । तस्माद् विशेषणविशेष्ययोर्वस्तुतः सर्वत्रानन्यत्वमेव ।

न चैवं कथं विशेषणविशेष्ययोरन्यत्वप्रसाधकस्य तार्किकादीनां पूर्वपक्षस्य समुत्थानमिति वाच्यम्, तार्किकादीनां पूर्वपक्षोपन्यासस्य श्रुतिविशेष-( शब्दविशेष )सन्निधानासन्निधानकृतत्वात् । तथा हि— तेषां चन्दनशब्दाच्चन्दनत्वजातिविशिष्टस्यार्थस्य बुद्धौ सन्निधानम्, गन्धशब्दवाच्यस्य चार्थस्य बुद्धावसन्निधानम् । एवं तद्विपर्ययेण गन्धशब्दवाच्यस्य चार्थस्य गुणविशेषस्य गन्धशब्दाद् बुद्धौ सन्निधानम्, चन्दनशब्दाच्चासन्निधानमिति चन्दनशब्दगन्धशब्दयोरर्थभेदमङ्गीकृत्य तार्किकाणां पूर्वपक्षसमुत्थानोपपत्तिः, न तु वस्तुगतिमाश्रित्य पूर्वपक्षसमुत्थानं सम्भवति ।

**परेषामसमाख्येयमभ्यासादेव जायते ।**
**मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम् ।।३५।।**

---

न हि रूपतर्कादयः सूक्ष्मानप्रसिद्धसंविज्ञानपदान् कार्षापणादीनां कल्पयित्वापि समधिगमहेतून् परेभ्य आख्यातुं शक्नुवन्ति ।

षड्जऋषभगान्धारधैवतादिभेदं वा प्रत्यक्षप्रमाणविषयमप्यभ्यासमन्तरेणाभियुक्ताः प्रणिधानवन्तोऽपि न प्रतिपद्यन्ते ॥३५॥

---

तस्माद् दृष्टाद्धेतोरदृष्टं साध्यमनुगम्यते = अनुमीयते इत्येतदागमाविरोधात् सिद्धम् । आगमविरोधे तु न सिद्ध्यति । मनुरपि—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणाभिसन्धत्ते स धर्मं वेद नेतरः ॥ ( मनु० १२/१०६ )

इत्याह ।

तर्कस्याप्रमाणत्व उदाहरणान्तरमपि । तद्यथा—पाकाद्यनुमानार्थानि पाकादिक्रियाविशेषेषु प्रतिनियतानि = व्याप्यानि पाकादिक्रियाङ्गानि स्थाल्यधिश्रयणादीनि काकमारणाय भिक्षुप्रतारणाय वा कैश्चित् कथञ्चिदुपादीयन्ते । चुल्ल्युपरि अन्नरहिताया एव स्थाल्या अधिश्रयणे कृतेऽन्नलोभेन काको यदि गृहं प्रविशेत् तदा कपाटपिधानपुरस्सरमाञ्जस्येन व्यापाद्येतेति ।

किञ्च, चुल्लिकायां स्थाल्यधिश्रयणं पश्यन् भिक्षुर्नाधुनाऽन्नं सिद्धमिति ज्ञात्वा न याचेतेति भिक्षुप्रतारणं स्थाल्यधिश्रयणेन । तदेवं स्थाल्यधिश्रयणादिभ्यः साधनेभ्यः पाकक्रियानुमानं न सम्भवति, प्रकृते व्यभिचारादिति रीत्या सर्वत्रैव तर्के स्थालीपुलाकन्यायेनानाश्वासः । व्यभिचारादिभिर्दोषैस्तर्कस्याप्रतिष्ठितत्वरूपमनवस्थितत्वञ्च **'तर्काप्रतिष्ठानात्'** ( ब्र० सू० ) इत्यादिब्रह्मसूत्रैस्तद्भाष्यैश्च प्रसाधितम् । प्रकृतकारिकायाः शाब्दोऽर्थस्तु व्याख्यानिरपेक्षः ।।३४।।

प्रत्यक्षानुमाने एव प्रमाणे इति बौद्धमतं दूषयितुमागमस्य प्रामाण्यमुपपाद्य तदन्यस्याभ्यासस्यापि प्रामाण्यं प्रदर्शयति—**परेषामिति ।**

अयं भावः—ये खलु रूपतर्कादयः = रूपकधातुभेदा दीनारादयस्ताँस्तर्कयन्ति परीक्षन्त इति व्युत्पत्त्या रूपतर्काः सौवर्णिका उच्यन्ते । आदिना माणिक्यपरीक्षकाः । ते कार्षापणादीनां दर्शनकाले तेषां तारतम्येन समधिगमहेतून् सूक्ष्मानप्रसिद्धसंविज्ञानपदान् = येषां समधिगमहेतूनां संविज्ञानस्याभिलापकानि पदान्यप्रसिद्धानि तथाभूतान् प्राक्तनेन वार्तमानिकेन च रूपकदर्शनाभ्यासबलेन मनसि प्रकल्प्यापि परेभ्य आख्यातुं न शक्नुवन्ति । एभिरधिगमहेतुभिरिदं सुवर्णं मयेदृशं विज्ञातमिति । तेषां परेभ्य आख्यानाशक्तौ हेतुस्तु प्रत्यक्षानुमानागोचरत्वम्, प्रत्यक्षानुमानगोचरेष्वेव पदार्थेषु शक्तिग्रहसम्भवादाख्यानकर्मत्वसम्भवः, नान्येषु । तेषां परेभ्य आख्यानासम्भवादेव च मणिरूप्यादिविज्ञानस्यागमिकत्वमपि ।

**प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः ।**
**पितृरक्षःपिशाचानां कर्मजा एव सिद्धयः ।।३६।।**

स्वप्ने हि बधिरादीनां शब्दादिप्रतिपादनम्, घनसन्निविष्टावयवानां च कुड्यादीनामवयवविभागमन्तरेणान्तर्वेशमादिषु सूक्ष्माणामर्थानां दर्शनं यत् सर्वप्रवादेषु सिद्धम्, तत्र कथम्भूतानि साधनानीत्यदृष्टशक्तिमचिन्त्यां हित्वा नान्यानि साधनान्याख्यातुं शक्यन्ते ।।३६।।

एवं मणिरूप्यादिविज्ञानं प्रत्यक्षानुमानागमप्रमाणाजन्यत्वादभ्यासमात्रप्रमाणजन्यमिति सिद्धम् ।

एवं षड्जऋषभगान्धारधैवतादिभेदं श्रावणप्रत्यक्षप्रमाणविषयमपि गन्धर्वशास्त्राभ्याससहकृतस्वरप्रत्यक्षाभ्यासमन्तरेण प्रणिधानवन्तोऽप्यभियुक्ता न प्रतिपद्यन्त इति प्रत्यक्षानुमानागमव्यतिरिक्तमस्त्यभ्यासाख्यं तुरीयमपि प्रमाणमिति सिद्धम् ।

अनया च कारिकयाऽयमनुमानप्रयोगः सूचितः—मणिरूप्यादिविदां मणिरूप्यादिविज्ञानं नानुमानिकम्, अभ्यासमात्रजन्यं वा, परेषामसमाख्येयहेतुजन्यत्वात्, यन्नैवम्, तन्नैवम्, यथा वह्न्यादिविज्ञानमिति ।।३५।।

प्रत्यक्षानुमानागमाभ्यासातिरिक्तां पञ्चमीमपि प्रतिपत्तिमाह—**प्रत्यक्षमिति ।**

अयमर्थः— याः खलु रक्षःपितृपिशाचानां सिद्धयो व्यवहितविप्रकृष्टातीतादिविज्ञानानि, तानि प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थितानि, तदजन्यत्वात् । इदं चोपलक्षणमागमाभ्यासयोरपि, अतस्तेषां ताः सिद्धयः कर्मजा एव, स्वकृतसुकृतदुष्कृतान्यतरकर्मजन्या एवेत्यदृष्टमपि पञ्चमं प्रमाणमिति सिद्धम् ।

यत्तु वृषभदेवेन 'अन्तर्धानादिसिद्धयः' इति व्याख्यातम्, तन्न, प्रमाणनिरूपणप्रसङ्गेऽन्तर्धानादिसिद्धीनामनुपयोगात् । सन्ति चान्यान्यप्युदाहरणान्यदृष्टस्य प्रमाणान्तरत्वप्रसाधकानि ।

तद्यथा—स्वप्ने बधिरस्य शब्दप्रतिपत्तिः, घनसन्निविष्टावयवानां च सीसकनिर्मितकुड्यादीनामवयवविभागमन्तरेणान्तर्वेशमादिषु सूक्ष्माणामर्थानां दर्शनम्, यत् सर्वप्रवादेषु सिद्धम् । तत्र न पूर्वोक्तानि प्रत्यक्षादीनि प्रमाणानि प्रक्रमन्त इत्यदृष्टाख्यं पञ्चममपि प्रमाणं प्रतिपत्तव्यम्, अत एव स्वीकृतं योगादृष्टजन्यमलौकिकं प्रत्यक्षं तार्किकैः । अदृष्टस्य चाचिन्त्या शक्तिः—"तौ ह यदूचतुः कर्मैव तदूचतुः" इत्यादिना बृहदारण्यकेऽन्यत्रापि च श्रुतिस्मृतीतिहासपुराणेषु प्रतिपादितेत्यदृष्टरूपप्रमाणबलेन पित्रादीनां सिद्धयः, स्वप्ने बधिराणां शब्दप्रतिपत्तिः । कुड्यव्यवहितानामपि दर्शनमित्येतत् सर्वमुपपद्यते ।।३६।।

इदानीं लौकिकप्रत्यक्षव्यतिरिक्तमदृष्टजन्यमलौकिकं प्रत्यक्षमप्यस्तीत्यदृष्टस्य प्रमाणान्तरत्वप्रसाधनायाह—**आविर्भूतप्रकाशानामिति ।**

अयं भावः—अस्ति तावदुत्पत्तेः प्रागसतां भावानां स्वकारणसामग्रीसमवधाने समुत्पत्तिरिति तार्किकादिसम्मतोऽसत्कार्यवादः । तत्र यतः स्वोत्पत्तेः प्राग् वस्तु असत्, अतोऽपदम् = अनाश्रयम् । अतो निरुपाख्यतया क्वचिदप्युपादानकारणे न सम्बद्धम्, न च शक्तिरूपेण स्थितम् । स्वरूपाभावाद-

**आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।**
**अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ।।३७।।**

तत्रोत्पत्तिपक्षे तावत् कथमपदमवस्तु निरात्मकमदृष्टाप्रतिनियतकारणशक्तिपरिग्रहमधिगन्तुं शक्यते। पक्षान्तरे च विशिष्टव्यक्तिरूपतिरोभावाद् व्यवहारं प्रति तदविज्ञेयं वस्तु निरुपाख्यैरेव तुल्यम्। अथ च तपसा निर्दग्धदोषा निरावरणख्यातयः शिष्टाः प्रतिबिम्बकल्पेन प्रत्यक्षमिव स्वासु ख्यातिषु सङ्क्रान्ताकारपरिग्रहमव्यभिचरितं सर्वं पश्यन्ति ॥३७॥

वस्तु च। अत एव निरात्कम् = निःस्वभावम्। अत एव पूर्ववता शेषवता वाऽनुमानेनाधिगन्तुं न शक्यते, यतस्तदाऽदृष्टकारणशक्तिपरिग्रहमप्रतिनियतकारणशक्तिपरिग्रहं च कार्यम्। तथा हि—यदा कार्यं दृश्यते, तदा कार्यदर्शनेन कारणे कार्यानुकूलायाः कारणशक्तेः = कार्यस्य कारणावस्थारूपायाः कार्यजननयोग्यतारूपायाः पदार्थान्तररूपाया वा परिग्रहः = स्वीकारोऽनुमीयते। ततस्ते पदार्थाः कारणशक्तिमत्तया निर्धारिताः कर्त्रा कार्योत्पादनाय परिगृह्यन्ते, उत्पत्तेः प्राक् त्वसत्कार्यवादे कार्याणामभावात्, तदा कारणे कारणशक्त्यनुमानहेतोरभावेन शक्त्यनुमानाभावे कथं कार्यार्थिनस्तत्परिग्रह इति नास्ति पूर्ववदनुमानम्।

अथातीतेन कार्येण कारणशक्तिरेतत्कार्योत्पत्तेः प्रागनुमीयते शेषवताऽनुमानेनाकारणे कारणशक्त्यभावे कार्याभावरूपव्यतिरेकव्याप्तिदर्शनमूलकेनेत्युच्यते, तदपि न, तदानीमेतत्कार्याभावेनैतत्कार्यानुकूलशक्तेरनुमानासम्भवादिति शेषवदनुमानमपि न प्रक्रमते कार्योत्पत्तेः प्राक् कारणशक्तिप्रसाधने, यदि तु तदानीं कारणगतेनासाधारणधर्मेण दण्डत्वादिना दण्डादौ घटाद्यनुकूलायाः कारणशक्तेरनुमानमुच्यते, तदपि न, अतीतकार्यदर्शनेन दण्डे कारणशक्तिरासीत्। इदानीं तु नास्ति, कार्यादर्शनादिति कालभेदेन कारणे कारणशक्तेर्व्यभिचारशङ्कासम्भवादित्यप्रतिनियतो व्यभिचारी च कारणशक्तिपरिग्रहः। सामान्यतोऽदृष्टानुमानं तु कार्योत्पत्तेः प्राक् कारणशक्तिं प्रसाधयितुं नोत्सहते, असम्भावनया दूरोत्सारितत्वात्। इत्येवमसत्कार्यवादे उत्पत्तेः प्रागनुमानेन त्रिविधेनापि कारणशक्त्यज्ञाने कथं कार्योत्पत्तये तत्तत्कारणोपादानम्? प्रत्यक्षं तु तदा कारणशक्तिं गोचरयितुं नैव प्रभवति, अदृष्टादिवत् शक्तेरतीन्द्रियत्वात्। सांख्यादिसम्मते सत्कार्यवादेऽप्युत्पत्तेः प्राग् न कार्येण कारणशक्तिरनुमातुं शक्यते। तदानीं कारणावस्थया कार्यस्य सत्त्वेऽपि विशिष्टस्य व्यवहारयोग्यस्य व्यक्तिरूपस्य तिरोभावेन तस्य कारणावस्थारूपस्याविज्ञेयस्य कार्यवस्तुनोऽव्यवहार्यत्वेन निरुपाख्यैः शशशृङ्गादिभिस्तुल्यत्वात्। विशिष्टं हि व्यक्तिरूपं व्यवहारयोग्यं वर्तमानावस्थस्यैव कार्यस्य दृष्टम्, तन्नास्त्यतीतानागतयोः।

यत्तु तदानीं कार्यमस्तीत्यभ्युपगम्यते, तद्रूपं कार्यस्याव्यवहार्यं न प्रत्यक्षसमधिगम्यम्। येनास्मदादयः शशविषाणादिवत् कार्यमपि तदानीं न प्रत्यक्षयन्ति। तपसा निर्दग्धकिल्बिषा निरावरणख्यातयः शिष्टास्तु तदानीं बहिरसतोऽप्यतीतादीन् पदार्थान् प्रतिबिम्बवत् स्वबुद्धिषु संक्रान्ताकारपरिग्रहान् वासनारूपेण स्थितानव्यभिचारेण सर्वदा प्रत्यक्षमिव पश्यन्तीति तदुपदिष्टा-

**अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।**
**ये भावान् वचनं तेषां नानुमानेन बाध्यते ।।३८।।**

---

अन्तर्यामिणमणुग्राममभिजातिनिमित्तनिबन्धनमनभिव्यक्तं शब्दब्रह्म शक्त्यधिष्ठानं देवता कर्मणामनुबन्धपरिणामशक्तिवैकल्यानि सूक्ष्ममातिवाहिकं शरीरं पृथगन्यांश्च तीर्थप्रवादेषु प्रसिद्धानर्थान् रूपादिवदिन्द्रियैरग्राह्यान् सुखादिवत् प्रत्यात्मम-संवेद्यान् ये शिष्टा व्यावहारिकादन्येन चक्षुषा मुक्तसंशयमुपलभन्ते, तेषामनुमान-

---

गमादस्माकमपि तदानीं कारणशक्तिपरिज्ञानम्, तेन तत्तत्कारणोपादानपूर्विका तत्तत्कार्येषु प्रवृत्तिश्चेति रीत्या शिष्टानां तादृशेऽलौकिके प्रत्यक्षे प्रमाणमदृष्टं सिद्धम् ।

कारिकार्थस्तु—अनुपप्लुतचेतसां तपसा निर्दग्धकिल्बिषाणामत एवाविर्भूतप्रकाशानाम् अनावरणख्यातीनां शिष्टानामतीतानागतकार्यानुकूलकारणशक्तिज्ञानमस्मदादीनां प्रत्यक्षान्न विशिष्यते न विलक्षणम्, किन्त्वलौकिकत्वेऽपि प्रत्यक्षत्वजात्या तुल्यमेवेति ।।३७।।

येऽप्येते तर्कप्रतिसरणा बौद्धादयस्तर्कबलेनैव प्रतिष्ठन्ते, तेऽपि स्वस्मिन् सिद्धान्ते कांश्चित् पदार्थान् सिद्धीरदृष्टादींश्च तर्कबहिष्कृतान् बौद्धाद्यागमादेवेच्छन्तीति सर्वैरेवागमस्य प्रामाण्यमङ्गीकृतमिति कर्तुः स्मरणाभावेनापौरुषेयादागमात् किमिति धर्माङ्गसाधुशब्दज्ञापनमूलकं व्याकरणस्य धर्माङ्गत्वं न सिद्ध्यतीत्याह—**अतीन्द्रियानिति ।**

अयं भावः—अस्ति तावदन्तर्यामी कश्चन सर्वशक्तिसम्पन्न आदित्यचन्द्रग्रहनक्षत्रवाय्वग्न्यादीनां स्वस्वक्रियासु यथाकालं नियमेन प्रवर्तकः, सन्ति च चतुर्विधाः परमाणवोऽशेषस्य जगत उपादानकारणम् । येऽभिजातिनिमित्तनिबन्धनम् = अभिजातिः, सर्गस्तस्य निमित्तमदृष्टजन्यं परमाणुष्वाद्यं कर्म, तस्य निबन्धनमाश्रयः, तेष्वेव प्रथमक्रियासमवायात् । यतः सर्गादौ चतुर्विधाः परमाणवोऽदृष्टप्रेरिताः संयोगसचिवा द्व्यणुकादिक्रमेण शरीरेन्द्रियपृथिव्यादिकार्यमारभन्त इति । अस्ति चाविद्याख्यस्वशक्त्यधिष्ठानं सर्गात् प्रागनभिव्यक्तम् = अर्थात्मनाऽविवृत्तं शब्दब्रह्माशेषस्यार्थस्योपादानकारणम् । सन्ति च देवता मूर्ता अमूर्ताश्च, या हविर्दानादावुद्दिश्यन्ते । तत्र मूर्ता वाय्वादित्याग्न्यादिरूपाः, अमूर्ता इन्द्रादिरूपाः । सन्ति च कर्मणामनुबन्धपरिणामशक्तिवैकल्यानि, तत्रानुबन्धः कृतानां कर्मणां फलप्रदः संस्कारः । स्वरूपेण तु कर्मणां न फलोत्पत्तिपर्यन्तं समवस्थानम्, प्रध्वंसित्वात् । परिणामः प्रागुक्तस्यानुबन्धस्य सहायान्तरप्रतिबोधितशक्तेः फलदानाभिमुख्यम् । शक्तिवैकल्यं कर्मणः फलान्तरोपजननेऽसामर्थ्यम् । अस्ति च सूक्ष्मम् = दिव्यमिह मृतस्य देशान्तरे शरीरान्तरग्रहणाय यदन्तराभवं शरीरम्, तद् देशमतिवाहयतीति व्युत्पत्त्याऽऽतिवाहिकम् । सन्ति चैतेभ्योऽन्येऽपि पदार्था ऋद्धिप्रातिहार्यादयः ।

तद् यथा केषाञ्चिददृष्टप्रयुक्ता ऋद्धिर्भवति, ते तया प्रभवो भवन्ति । अस्ति च केषाञ्चिद्दृष्टप्रयुक्तं प्रातिहार्यम् । तेन केचन प्रतिहाराः = राज्ञां द्वारपाला भवन्ति । तदेते पदार्था रूपादिवदिन्द्रियग्राह्या न भवन्ति, नापि च सुखादिवत् प्रत्यात्मं मनसा संवेद्याः, तथाप्येतान् पदार्थान् ये शिष्टा व्यावहारिकादन्येन चक्षुषा आर्षेण = ऋषिर्वेदस्तद्विहितनित्यनैमित्तिककर्मणां निष्कामानुष्ठान-

**यो यस्य स्वमिव ज्ञानं नातिशङ्कते ।**
**स्थितं प्रत्यक्षपक्षे तं कथमन्यो निवर्तयेत् ।।३९।।**

---

विषयतातीतं वचनं व्यभिचारिभिरनुमानैरपाकर्तुमशक्यम् । जात्यन्धानां हि रूपग्रहणमेवमुत्पद्यत इति सावस्था नैवाभ्युपगतपूर्वा कदाचित् । तस्यां कथमनुमानं प्रवर्तेत ? ॥३८॥

सन्ति प्रतिचरणं प्रतिपुरुषं चाप्ताः । येषां वचनमविचारितं स्वमिव दर्शनमत्यन्तमनतिशङ्कनीयम् , येषां चादृष्टमपि शिलाप्लवनादिप्रत्ययेन शक्यं श्रद्धातुम् ।

तथा हि—कर्मणामिह कृतानामूर्ध्वं देहादिष्टानिष्टफलप्राप्तिराप्तवचनपरिग्रहेणैव लोके प्रसिद्धा, विनापि शास्त्रोपदेशेन प्रायेण मनुष्यैरनुगम्यते ॥ ३९ ॥

---

सम्भूतेन मुक्तसंशयं पश्यन्ति, तेषामनुमानविषयतातीतार्थविषयकं वचनं व्यभिचारिभिरनुमानैरपाकर्तुमशक्तम्, यतः सर्वमेवानुमानं व्यभिचारि, अवस्थादेशकालानां भेदेन वस्तूनां शक्तिभेदस्य प्रागुपदर्शितत्वात् ।

किञ्च, जात्यन्धानां जाग्रति तमसो नीलरूपग्रहणं चक्षुर्विनैव समुत्पद्यते, स्वप्ने च तेषां सर्वरूपग्रहणमुत्पद्यते, तच्च नानुमानरूपम्, पूर्वं रूपस्याननुभूतत्वेन व्याप्तिग्रहाभावाद् दृष्टान्ताभावाच्चेति ॥ ३८ ॥

स्यादेतत्, यद्यपि तादृशानां शिष्टानां वचनमनुमानेन न बाध्यते, तथापि ये तु तद्वचनात् प्रवर्तन्ते, तेषां वचनं कथमनुमानेन बाध्येतेति प्राप्ते आह—**यो यस्येति** ।

यः शिष्टवचनपरिग्रहीता शिष्टवचनात् कर्मसु प्रवर्तमानः पुरुषः स्वं दर्शनमिव स्वप्रत्यक्षमिव, यस्य शिष्टस्य ज्ञानं प्रत्यक्षरूपं शिष्टागममूलं नातिशङ्कते, यथा स्वं प्रत्यक्षं नातिशङ्कते, तथा शिष्टप्रत्यक्षमपि नातिशङ्कते । तं प्रत्यक्षपक्षे स्थितम् , शिष्टप्रत्यक्षतुल्यम् । सदृशा एव ह्युपमेयपक्षगता भवन्ति, यथा चन्द्रकमलादयो मुखपक्षे स्थिता इति व्यपदिश्यन्ते । लोकेऽपि च सदृशानामेवैकपक्षगतत्वं दृष्टम्, यथा देवानां यक्षकिन्नरगन्धर्वाप्सरसां देवपक्षगतत्वम्, दानवासुररक्षसां च दैत्यपक्षगतत्वम् । साम्प्रतमपि वर्गवादे वर्णवादे च वर्गवर्णानुरूप्येणैव तत्तत्पक्षगतत्वं दृश्यते । अन्यस्तर्कमात्रप्रतिसरणः कथं निवर्तयेत्? यथा शिष्टवचनमागमरूपं न तर्केण बाध्यम्, तथा शिष्टवचनात् प्रवर्तमानस्य पुरुषस्य वचनमपि शिष्टागमानुसारित्वान्न बाध्यत इत्यर्थः ।

अयं भावः—सन्ति प्रतिचरणम् = वेदस्य प्रतिशाखम्; एकैकस्मिन् ग्रन्थसिद्धान्ते वा प्रतिपुरुषम् = एकैकस्य पुरुषस्य चाप्ताः, येषां वचनमविचारितं स्वमिव दर्शनमत्यन्तमनतिशङ्कनीयम् । येषां चादृष्टमपि शिलाप्लवनादिकर्म तद्वचनप्रवृत्ताप्तपुरुषप्रामाण्येनैव श्रद्धातुं शक्यम् ।

किञ्चेह कृतानां कर्मणां देहादूर्ध्वमिष्टानिष्टफलप्राप्तिराप्तवचनपरिग्रहेणैव लोके प्रसिद्धा, विनापि शास्त्रोपदेशेन प्रायेण मनुष्यैरनुगम्यते । अस्यार्थस्यानादिकालाल्लोके निरूढत्वेनास्मिन्नर्थे लोकः शास्त्रं नापेक्षते । यथा चौर्यहिंसानृतभाषणादिकर्मणां देहोर्ध्वभाविन्यनिष्टे फले लोकः शास्त्रं नापेक्षते, किन्तु तत्फलमाप्तवचनादेव प्रत्येतीति ॥ ३९॥

**इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।**
**आ चण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ।।४०।।**
**चैतन्यमिव यश्चायमविच्छेदेन वर्तते ।**
**आगमस्तमुपासीनो हेतुवादैर्न बाध्यते ।।४१।।**

---

यस्मात् प्रत्यक्षमार्षं च ज्ञानं सत्यपि विरोधे बाधकमनुमानम् ।। ४० ।।

यथा ह्यहमस्मीत्येवमादिप्रत्ययानुगतं सहजमनादि यच्चैतन्यं तन्नास्मि, न ममेत्येवमाप्तोपदेशे सत्यपि लोके रूढत्वाद् मुक्तात्मनामपि व्यवहारं प्रति न व्यवच्छिद्यते, तथैवायं श्रुतिस्मृतिलक्षणः सर्वैः शिष्टैः परिगृहीत आगमः । कार्याकार्यभक्ष्याभक्ष्यगम्यागम्यादिषु यो भिन्नानामपि प्रवादिनां प्रायेण नातिलङ्घनीयः, तमित्थम्भूतमुपसेवितं वृद्धैः सम्यगुपासीनो न तार्किकप्रवादैः कैश्चिन्न्याय्यादपनीयते वर्त्मनः । तत्रस्थश्चानिन्द्यो लोके भवति ।। ४१।।

---

अविच्छिन्नश्रुतिस्मृतिरूपादागमादप्याप्तोपदेशोऽधिकं प्रमाणम् , तदभावेऽपि तत्प्रवृत्तेरित्याह— **इदं पुण्यमिदं पापमितीति ।**

सत्यभाषणदयादानादिकं पुण्यम् , चौर्यस्वयोनिगमनादिकं पापमित्येतस्मिन् पदद्वये, पद्यते गम्यते प्रतीयते शब्दादिति पदमर्थ इति व्युत्पत्त्याऽर्थद्वये, आचण्डालं मनुष्याणां शास्त्रस्य प्रयोजनमल्पं नास्तीत्यर्थः । सर्वेषां मनुष्याणां लोके आप्तोपदेशादेव तत्सिद्धेश्चण्डालादीनां शास्त्रानधिकारादिति भावः । तस्माद् ऋषीणामतीतानागतविषयकं प्रत्यक्षम् , अतीन्द्रियासंवेद्यार्थविषयकं चार्षं ज्ञानम् = ऋषिर्वेदस्तद्विहितनित्यनैमित्तिककर्मानुष्ठानसंशुद्धस्वान्तः समुद्भूतं ज्ञानं विरोधे सत्यनुमानस्य बाधकमिति फलितम्। ४०।।

एवमागमस्य प्रामाण्ये स्थिते यदागमस्य प्रामाण्यमाश्रित्येदं व्याकरणशास्त्रं प्रवृत्तम् , तमागमं दर्शयति—**चैतन्यमिवेति ।**

यश्चायं श्रुतिस्मृतिलक्षण आगमः, चैतन्यमिवात्मस्वरूपं संवेदनमिव, अविच्छेदेन वर्तते, अपौरुषेयत्वादनादिसम्प्रदायाविच्छेदाच्चाविच्छिन्नं वर्तते, तमागममुपासीनो वैयाकरणः, हेतुवादैर्लोकतः सिद्धे शब्दार्थसम्बन्ध इदं शास्त्रं नारम्भणीयमित्यादिभिस्तर्कवादैर्न बाध्यते, तर्कादागमप्राबल्यस्य प्रागुपपादितत्वादित्यर्थः ।

अयं भावः—यथा हि 'अहमस्मि कर्त्ता भोक्ता सुखी दुःखी', 'ममेदं पशुपुत्रकलत्रादि' इत्यादिज्ञानेष्वनुगतम् = विषयतया सम्बद्धम्, अहं ममेति प्रत्ययगम्यमिति यावत् । सहजम् = स्वाभाविकम् अनाद्यविद्योपहितम्, अत एवानादिचैतन्यम्, तल्लोके रूढत्वाद् नासि कर्त्रादिरूपः, न तव पुत्रकलत्रादिकमित्येवमाप्तोपदेशे सत्यपि नास्मि कर्त्रादिरूपः, न मम पुत्रकलत्रादीत्येवं प्रत्ययाभावेन व्यवहारकाले जीवन्मुक्तानामप्येतेन विरुद्धप्रत्ययेन न व्यवच्छिद्यते = न बाध्यते । अतः प्रतिपक्षभावनावशेनाहङ्कारममकारयोर्निवृत्तिर्दृष्टेति कथमहं ममप्रत्ययगम्यस्य चैतन्यस्याविच्छेद उच्यत इत्याशङ्कितुं न शक्यते, आप्तोपदेशपारम्पर्येणाहङ्कारविच्छेदस्य सम्भवेऽप्येवमयमभिरूढोऽहङ्कारः,

**हस्तस्पर्शादिवान्धेन विषमे पथि धावता ।**
**अनुमानप्रधानेन विनिपातो न दुर्लभः ।।४२।।**
**तस्मादकृतकं शास्त्रं स्मृतिं च सनिबन्धनाम् ।**
**आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम् ।।४३।।**

---

यस्य हि स्थालीपुलाकन्यायेनैकदेशं दृष्ट्वा शिष्टेऽर्थे प्रतिपत्तिः सोऽन्ध इव विषमे गिरिमार्गे चक्षुष्मन्तं नेतारमन्तरेण त्वरया परिपतन् कश्चिदेव मार्गैकदेशं हस्तस्पर्शेनावगम्य समतिक्रान्तस्तत्प्रत्ययादपरमपि तथैव प्रतिपद्यमानो यथा विनाशं लभते, तद्वदागमचक्षुषा विना तर्कानुपाती केवलेनानुमानेन क्वचिदाहितप्रत्ययो दृष्टादृष्टफलेषु कर्मस्वागममुत्क्रम्य प्रवर्तमानो नियतं महता प्रत्यवायेन संयुज्यते ।।४२।।

---

येन नासि कर्त्रादिरूप इत्याद्युपदेष्टॄणां जीवन्मुक्तानामपि व्यवहारकालेऽहमाकारानुप्रवृत्तिरिति तत्प्रति-समाधानसम्भवात् । तथा चैवमविच्छिन्नाहंप्रत्ययगम्यचैतन्यमिवायं श्रुतिस्मृतिलक्षणः सर्वैः शिष्टैः परिगृहीत आगमः । श्रुतिस्मृतिप्रामाण्यानभ्युपगन्तॄणामपि प्रवादिनां कार्याकार्यभक्ष्याभक्ष्यगम्यागम्यादिषु विषयेषु य आगमः प्रायेण नातिलङ्घनीयः, तैरपि भक्ष्याभक्ष्यादिप्रतिपत्तौ कस्यचिदागमोक्तभेदस्याङ्गीकरणात् ।

तथा हि—विड्वराहो न भक्ष्य इति यवना अपि मन्वते । हिंसा न कार्या, हतः पशुर्न भक्ष्य इति बौद्धा अप्यभ्युपगच्छन्ति । सत्यभाषणं कार्यम्, अनृतभाषणं न कार्यम्, स्वयोनिरगम्येत्यत्र मनुष्यमात्रस्याविसंवाद इति । तमित्थम्भूतं वृद्धैरुपसेवितमागमं सम्यगुपासीनः = व्याकरणशास्त्रस्य प्रामाण्याय मूलत्वेन समाश्रयमाणो वैयाकरणः कैश्चिदपि तार्किकप्रवादैर्न्याय्याद् वर्त्मनो नापनीयते, तमागमं प्रमाणत्वेनास्थितश्च सर्वोऽपि लोको लोकेऽनिन्द्यो भवतीति ।।४१।।

यस्त्वागमनिरपेक्षादनुमानादेव प्रवर्तते, तस्य दोषमाह—**हस्तस्पर्शादिति ।**

अयं भावः—यस्य तार्किकस्य स्थालीपुलाकन्यायेनैकदेशं दृष्ट्वाऽवशिष्टेऽर्थे तद्दृष्टान्तेन तादृशोऽयमपीति निश्चयः, सोऽन्ध इव विषमे गिरिमार्गे चक्षुष्मन्तं नेतारमन्तरेण त्वरया परिपतन् कश्चिदेव मार्गैकदेशं हस्तस्पर्शेनावगम्य तं मार्गं समतिक्रान्तस्तद्दृष्टान्तेनापरमप्यवशिष्टं मार्गं तथैव समं गन्तव्यं च प्रतिपद्यमानो यथा विनाशं लभते, तद्वदागमचक्षुषा विना तर्कानुपाती केवलेनानुमानेन क्वचिदाहितप्रत्ययस्तद्दृष्टान्तेन दृष्टादृष्टफलेषु कर्मस्वागममुत्सृज्य प्रवर्तमानो नियतं महता प्रत्यवायेन युज्यते ।

तद्यथा—क्रतुदीक्षातिरिक्ते काले स्त्रीसेवाया दानस्य च लोकेऽनिन्द्यत्वमुपलभ्य तद्दृष्टान्तेन दीक्षाकालेऽपि 'दीक्षितो न ददाति, न स्त्रियं सेवते' इत्याद्यर्थकमागममतिक्रम्य प्रवर्तमानो महता एनसा युज्यते, फलाच्च परिहीयत इति ।।४२।।

प्रकृतमुपसंहरति—**तस्मादकृतकमिति ।**

तस्मात् प्रागुक्तरीत्या आगमस्य तर्कापेक्षयाऽभ्यर्हितत्वेन प्राबल्यात्, अपौरुषेयत्वेन भ्रम-विप्रलिप्सादिपुरुषदोषानाक्रान्तम्, अत एवानतिशङ्कनीयमकृतकं च विधिनिषेधविधानद्वारा पुरुषाणां हितोपदेशाय प्रवृत्तं शास्त्रमाम्नायरूपं प्रमाणीकृत्येदमाचार्यैः शब्दानुशासनं प्रक्रान्तम् ।

तस्मादपौरुषेयमनतिशङ्कनीयं पुरुषहितोपदेशाय प्रवृत्तमाम्नायं प्रमाणीकृत्य, पृषोदरादिवच्च साधुशब्दप्रयोगेषु शिष्टाचरितमविच्छिन्नपारम्पर्य्यं स्वचरणसमाचारं परिगृह्य, विरोधे च स्थितविकल्पान्युत्सर्गापवादवन्ति पूर्वेषामृषीणां स्मृतिशास्त्राणि प्रतिकालं दृष्टशब्दशक्तिस्वरूपव्यभिचाराणि प्रमाणीकृत्येदमाचार्यैः शब्दानुशासनं प्रक्रान्तमनुगम्यते ।।४३।।

---

स चाम्नायः 'अइउण्' इत्यादिचतुर्दशसूत्रीरूपः । को धातुः ? किं प्रातिपदिकम् ? कः प्रत्ययः ? इत्यादिरूपं च । किञ्च, पृषोदरादिष्विवेदमाचार्यैः शब्दानुशासनं प्रक्रान्तम् । तद्यथा—पृषोदरादीनि पूर्वस्मृतिषु लक्षणमन्तरेण केवलं साधुत्वेनैव सूचितानि, तथैवात्रापि केवलं साधुत्वेनैव सूच्यन्ते, पृषोदरादीनि यथोपदिष्टानि, तथैव साधूनि स्युरिति ।

न त्वत्र पूर्वोत्तरपदविभागपूर्वकः समासो वर्णलोपश्च लक्षणेन बोध्यते । तत्र पृषोदरादिशब्देन पङ्क्तिविंशत्यादयोऽपि गृह्यन्ते ।

किञ्च, साधुशब्दप्रयोगविषये पूर्वैः शिष्टैरप्याचरितमविच्छिन्नप्रयोगपारम्पर्यं स्वचरणसमाचारम्, स्वसिद्धान्तमूलकं स्वचारं परिगृह्येदमाचार्यैः शब्दानुशासनं प्रक्रान्तम्, येषां शब्दानामविच्छिन्नां शब्दोपनिबद्धां स्मृतिमनङ्गीकृत्य तथाप्रयोगसमाचारपारम्पर्यादेव साधुत्वमवगम्यते ।

तद्यथा—इष्टमेवैतद् गोनर्दीयस्य त्वकत्पितृको मकत्पितृक इति । किञ्च, विरोधे सति स्थितविकल्पानि, अविरोधसम्भवे उत्सर्गापवादवन्ति च, प्रतिकालं दृष्टशब्दस्वरूपव्यभिचाराणि च पूर्वेषामृषीणां स्मृतिशास्त्राणि प्रमाणीकृत्येदमाचार्यैः शब्दानुशासनं प्रक्रान्तम् ।

तत्र विरोधे सति स्थितविकल्पानि यथा—शाकल्योऽशि परे पदान्तयोर्यवयोरवर्णपूर्वयोर्लोपमिच्छति, अन्ये तु नेति विकल्पः । एवमन्येऽप्याचार्यभेदेन विधिविकल्पा उदाहर्तव्या निषेधविकल्पाश्च ।

उत्सर्गापवादवन्ति च यथा—''इको यणचि'', ''अकः सवर्णे दीर्घः'' इत्यादीनि सामान्यविशेषभावापन्नोद्देश्यनिमित्तकानि वचनानि ।

प्रतिकालं दृष्टशब्दस्वरूपव्यभिचाराणि यथा—यदा मेधाविनो मनुष्यास्तदा महता प्रकृतिप्रत्ययविभागप्रपञ्चेन शब्दास्तदानीन्तनव्याकरणस्मृतिषूपनिबध्यन्ते, यदा तु न तादृशास्तदा संक्षिप्तेनेति प्रकृतिप्रत्ययसन्निवेशव्यभिचाराद् दृष्टशब्दस्वरूपव्यभिचाराणि ।

अथवा केचित् शब्दाः कदाचिदभ्युदयाङ्गमिति ते कालभेदेन तैस्तैः स्मर्तृभिरन्यथोपनिबद्धाः, तद्यथा—पूर्वे आचार्या न्यङ्क्वोरणि अकृतैजागमस्याभ्युदयाङ्गतां स्मरन्ति । तदाहुः—न्यङ्क्वोः प्रतिषेधान्न्याङ्कवमिति । तत्सम्प्रत्यन्यथा, यतो नोपसंख्यातः प्रतिषेधः । तथा च सम्प्रति नैयङ्कवमित्येवाभ्युदयायेति ।

संक्षिप्तः कारिकार्थस्तु—तस्मादागमरूपस्य प्रमाणस्य तर्कापेक्षया प्रबलत्वाद् अकृतकं शास्त्रम्, अपौरुषेयत्वेन नित्यमनतिशङ्कनीयञ्च वेदशास्त्रम्, सनिबन्धनां पूर्वपूर्वस्मृतिमूलिकां व्याकरणस्मृतिं च प्रमाणत्वेनाश्रित्य शिष्टैः पाणिन्यादिभिः शब्दानामनुशासनमारभ्यत इति । तदेव च शिष्टैरारभ्यमाणं शब्दानुशासनं ममाऽत्र ग्रन्थेऽनुगम्य व्याख्यायत इति च ।।४३।।

**द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ।।४४।।**

---

उपादीयते येनार्थः, स्वरूपेऽध्यारोप्यते, तद्भावमिवापाद्यते, स उपादानशब्दः । एवं हि संग्रहे पठ्यते—"वाचक उपादान: स्वरूपवानव्युत्पत्तिपक्षे । व्युत्पत्तिपक्षे त्वर्थावहितं समाश्रितं निमित्तं शब्दव्युत्पत्तिकर्मणि प्रयोजकम् । उपादानो द्योतक इत्येके, सोऽयमिति व्यपदेशेन सम्बन्धोपयोगस्य शक्यत्वात्" इति । उपादेयो वा समुदाय उपादानः । तथा हि—स्वरूपपदार्थकेष्ववयवानामनुपादेयत्वाद् विभागानामप्रतिपत्तिः ।

---

तत्रारभ्यमाणे शब्दानुशासने शब्दार्थतत्सम्बन्धतत्फलान्युपदिष्टानि । तेषां चतुर्णामनुगमं कुर्वन्नर्थसम्बन्धतत्फलानां शब्दमूलत्वात् प्रथमतः शब्दस्य स्वरूपमाह—**द्वावुपादानशब्देष्विति ।**

शब्दशब्दस्य नदीघोषादावपि प्रसिद्धेस्ततो व्यवच्छेदायोपादानेति शब्दविशेषणम् । उपादीयते स्वरूपेऽध्यारोप्यते तद्भावमिवापाद्यते = स्वस्वरूपतामिवापाद्यते अर्थो येन स उपादानशब्दः ।

अयं भावः—शब्दो नाम ज्ञानात्मा, ज्ञानादभेदेन व्यपदिश्यमानो ज्योतिश्शब्देनापि श्रुत्यादिषु निर्दिश्यमानः स्वच्छः प्रकाशरूपो विभुत्वात् शरीराद् बहिरन्तश्च वर्तमानो भावः । तदुक्तमग्रेऽत्रैव—

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।
तन्मात्रामप्यतिक्रान्तं चैतन्यं सर्वजन्तुषु ॥ इति । ( वा०प० १।१२७ )

तथा च वक्तुः प्रयत्नविशेषेण समुपजातकण्ठताल्वाद्यभिघातानुकूलव्यापारविशेषरूपयोच्चारण-क्रियया सञ्जातेन ध्वनिविशेषेण वायुमारुह्य बहिर्गच्छता बहिरभिव्यक्ते स्फोटाख्ये शब्दे बाह्योऽर्थः सन्निहितो दर्पणादिष्विव प्रतिबिम्बवत् प्रतिसंक्रान्ताकारो भवति । स चार्थप्रतिबिम्बः शब्दे स्थिरो भवति, शब्दरूपस्योपाधेस्तद्ग्रहणस्वभावत्वात् । अत एव यत्रार्थोऽसन्निहितो भवति, यत्रापि शब्दोच्चारणेऽर्थस्तद्रूपतामापद्यमान इव लक्ष्यते । अत एव चार्थसन्निधाने शब्दार्थयोः सोऽयमिति तादात्म्यव्यपदेशः । स च प्रतिबिम्बकल्पोऽर्थो न वस्तुभूत इति तद्भावमिवापाद्यत इति व्युत्पत्त्यवसरे इवशब्दोपादानम् । तथा च शब्दोच्चारणकालेऽर्थो यदर्थरूपतां विहाय शब्दरूपतामापद्यते, तत्र प्रति-संक्रान्तार्थाकारेण शब्दमुच्चारयन् प्रयोक्ता प्रयोजक इति तद्भावमिवापाद्यत इति व्युत्पत्त्यवसरेऽनुपदमुक्तम् ।

तथा चेदमवधेयम्—उपादानशब्देषूच्चरत्सु द्वौ शब्दौ प्रतीयेते, यतस्तत्र शब्दस्वरूपस्य श्रावण-प्रत्यक्षरूपेण कार्येण तदभिव्यञ्जकं ध्वनिविशेषरूपं कारणमनुमीयते, यत्तदानीं स्फोटाविभागेन श्रावणप्रत्यक्षगोचरीक्रियमाणः पृथग् न प्रतीयते । तद् वक्ष्यतेऽग्रे—'स्फोटरूपाविभागेन ध्वनेर्ग्रहण-मिष्यते' ( वा० प० १/८२ ) इति ।

एको निमित्तं शब्दानाम् । यदधिष्ठाना यदुपाश्रया यदाधाराः श्रुतयः प्रत्याय्यमर्थं प्रतिपद्यन्ते, तस्य निमित्तत्वम् ।

अपरोऽर्थे । कारणव्यापारात्तु प्रतिलब्धविक्रियाविशेषः श्रोत्रानुपाती प्रकाशकभावेन नित्यं प्रत्याय्यपरतन्त्रोऽर्थेषु प्रयुज्यते ।

( अ ) लब्धानुसंहारो निमित्तम्, उपजनितक्रमस्तु प्रत्यायक इत्येके । तस्यापि क्रमरूपप्रत्यस्तमयेनैव प्रतिपत्तृषु प्राप्तसमावेशस्य प्रत्यायकत्वमाचक्षते ।

---

किञ्च, तत्रार्थप्रत्ययरूपेण कार्येण तत्कारणत्वेन शब्दोऽनुमीयते, स्वरूपेण प्रत्यक्षोऽपीति रीत्या स्फोटात्मकशब्दाभिव्यञ्जको ध्वनिविशेषरूप एकः शब्दः, अर्थप्रत्यायकश्च स्फोटपदाभिधेयोऽपर इति द्वौ शब्दौ ।

तामिमामुपादानशब्दव्युत्पत्तिमभिप्रेत्य संग्रहे एवं पठ्यते—'वाचक उपादानः, स्वरूपवान् अव्युत्पत्तिपक्षे । व्युत्पत्तिपक्षे त्वर्थावहितं समाश्रितं निमित्तं शब्दव्युत्पत्तिकर्मणि प्रयोजकम् । उपादानो द्योतक इत्येके, सोऽयमिति व्यपदेशेन सम्बन्धोपयोगस्याशक्यत्वात्' इति ।

अयमर्थः—अर्थस्य वाचकः शब्द उपादानपदेनाभिधीयते, यतोऽव्युत्पत्तिपक्षे स स्वसाधुत्वबोधनरूपस्वव्युत्पादनाय स्वस्वरूपमेव स्वव्युत्पत्तिनिमित्तमुपादत्ते, प्रकृतिप्रत्ययार्थरूपस्य व्युत्पत्तिनिमित्तस्य तदानीमभावात् ।

अव्युत्पत्तिपक्षे हि शब्दः स्वस्वरूपमेव व्युत्पत्तिनिमित्तीकृत्यार्थं गमयति । एवं चोपादानः स्वरूपवानिति संग्रहवाक्येऽव्युत्पत्तिपक्षेऽवयवार्थरूपस्य व्युत्पत्तिनिमित्तस्याभावात् शब्दस्वरूपमेव शब्दस्य व्युत्पत्तिनिमित्तभूतमत्यन्तमस्तीति स्वरूपवानिति पदे नित्ययोगे मतुप् । अत्राव्युत्पत्तिपक्षे व्युत्पत्तिर्मणिर्मणिमित्यादिपदप्रयोगरूपो व्यवहारः, स चान्ततः शब्दप्रवृत्तौ पर्यवस्यतीति व्युत्पत्तिनिमित्तं शब्दस्य स्वरूपमिति प्रवृत्तिनिमित्तमित्युच्यते ।

व्युत्पत्तिपक्षे तु—अर्थावहितम् = अर्थे गवादिरूपेऽवहितं स्थितम्, तदाह—समाश्रितमिति । अर्थे समाश्रितमित्यर्थः । तदेव गमनादिक्रियारूपं निमित्तं शब्दस्य गवादिशब्दस्य व्युत्पत्तिनिमित्तमिति गवादिशब्दस्य व्युत्पत्तिकर्मणि प्रयोजकम् । यतोऽस्मिन् पक्षे गोशब्दो विशिष्टम् = विलक्षणं मनुष्येभ्यः स्वान्यतिर्यग्भ्यश्च विजातीयं गमनं गोजात्येकार्थसमवाय्यर्थं गोशब्दव्युत्पत्तिनिमित्तत्वेनापेक्षते, तच्च शब्दस्वरूपाद् भिद्यत इति । अस्मिन् पक्षे उपादानं मूलकारणम् । गोशब्दस्य व्युत्पत्तेर्मूलकारणं गमनादिरूपोऽर्थः, सोऽस्यास्तीति व्युत्पत्तौ अर्शआद्यजन्त उपादानशब्दः, उपादानशब्दस्य मूलकारणे प्रसिद्धत्वात् ।

ये तूपादानो द्योतक इत्याहुस्तेषामयमाशयः—शब्दार्थयोः सोऽयमित्यभेदव्यपदेशेन वाच्यवाचकभावरूपसम्बन्धस्योपयोगः कर्तुं न शक्यते, सम्बन्धस्य धर्मिप्रतियोगिनोर्भेद एव सम्भवात् । तथा च प्रतिसंक्रान्तार्थाकारप्रतिबिम्बः शब्दः स्वाभेदेन व्यपदिश्यमानस्य, प्रतीयमानस्य चार्थस्य वाचकत्वासम्भवे द्योतकत्वमिति । द्योतकत्वं तु प्रकाशकत्वरूपमेकस्मिन्नपि सम्भवति, ज्ञानेऽग्न्यादित्यादिषु च दृष्टत्वात् ।

अपर आह—क्रमवानक्रमनिमित्तम् । अक्रमे तु वागात्मनि श्रुत्यर्थशक्ती संसृज्येते । एवं ह्याह—

अविभक्तो विभक्तेभ्यो जायतेऽर्थस्य वाचकः ।
शब्दस्तत्रार्थरूपात्मा सम्भेदमुपगच्छति ।।४४।।

---

तदित्थं व्युत्पत्त्यव्युत्पत्तिपक्षभेदेनोपादानशब्दस्यार्थद्वयं निर्दिष्टम् । उपादेयः समुदाय उपादान इति पक्षान्तरमपि सम्भवति । तथा हि—'अग्नेर्ढक्', 'गौरित्ययमाह' इत्यादिषु शब्दस्वरूपपदार्थकेषु स्वरूपमात्रपरा चोदना । न तत्रावयवा उपादित्सिताः, अकार्यभाक्त्वात् । यतोऽग्निशब्दावयवेभ्यो न प्रत्ययोत्पत्तिः । अनुकरणेष्वपि यद्यवयवा उपादित्सितास्ते पृथगनियतक्रमाश्च प्रतीयेरन्निति गौरित्ययमाहेत्यत औपगवमित्यत्र स्थिता औकारादयः प्रतीयेरन् । अतस्तत्रावयवानामनुपादेयत्वाद् विभागानाम् = विभज्यन्ते इति व्युत्पत्त्या वर्णानाम् अप्रतिपत्तिः । तथा चास्मिन् तृतीये पक्षे उपादीयते स्वस्मात् स्वसजातीयाद् वा शब्दात् प्रतीयत इत्युपादानः शब्दः । अत्र "कृत्यल्युटो बहुलम्" इति बाहुलकात् कर्मणि ल्युट् ।

एको निमित्तं शब्दानामिति । एको ध्वनिरूपः शब्दः, शब्दानां वाचकशब्दानाम्, निमित्तमभिव्यक्तिनिमित्तमित्यर्थः । तदुक्तं हरिणा स्वयम्—'यदधिष्ठाना यदुपाश्रया यदाधाराः श्रुतयः प्रत्याय्यमर्थं प्रतिपद्यन्ते, तस्य निमित्तत्वम्' इति । अत्राधिष्ठानपदस्यैव पर्यायभूते उपाश्रयाधार-पदे ।अतस्त्रिभिरप्येभिः पदैरनुग्राहक उच्यते । अनुग्राहकस्य चाश्रयत्वं प्रसिद्धं लोके । व्यवह्रियते च कविभिः—'यमाश्रितो हि वक्रोऽपि चन्द्रः सर्वत्र वन्द्यते' इति । अत्र यमाश्रित इत्यस्य येनानुगृहीत इत्यर्थः । येन ध्वनिविशेषेणानुगृहीताः श्रुतयो नानाविधाः पर्यायशब्दाः स्वप्रत्याय्यमर्थं प्रत्यायनेन प्रतिपद्यन्ते प्राप्नुवन्ति, तस्य ध्वनिविशेषस्य निमित्तत्वमित्यर्थः ।

अपरोऽर्थे प्रयुज्यत इति । इदमेवं व्याख्यातं हरिणा—'कारणव्यापारात्तु प्रतिलब्धविक्रियाविशेषः श्रोत्रानुपाती प्रकाशकभावेन नित्यं प्रत्याय्यपरतन्त्रोऽर्थेषु प्रयुज्यते' इति ।

अस्यार्थः—यद्यपि शब्दश्चैतन्यात्मा स्वरूपेणाविक्रियः, तथापि ध्वनिकारणीभूताद् व्यापारात् तत्तत्स्थानेषु कण्ठताल्वादिषु जिह्वाग्रोपाग्रादिरूपकरणाभिघातरूपात् सञ्जातेन ध्वनिनाऽभिव्यक्तः कत्व-खत्वादितारत्वमन्द्रत्वादिरूपतद्धर्मोपग्रहेण प्रतिलब्धविक्रियाविशेषः समुपजात इव लक्ष्यमाणः स्वेन परमार्थरूपेण चैतन्यात्मना श्रोत्राग्राह्यः केवलं मनोमात्रग्राह्योऽपि ध्वनिधर्मोपग्रहेण श्रोत्रानुपाती श्रोत्रग्राह्योऽर्थस्य प्रकाशकत्वेन च प्रतिसंक्रान्तार्थाकारोपग्रहेण नित्यमवस्थानान्नित्यं स्वार्थपरतन्त्रोऽर्थेषु बोधनीयेषु सत्सु प्रयुज्यते । अर्थबोधनाय प्रयुज्यत इत्यर्थः ।

केचित्तु ( अ ) लब्धानुसंहारो निमित्तम्, उपजनितक्रमस्तु प्रत्यायक इत्याहुः । तेषामयमाशयः— अलब्धानुसंहारः पूर्वपूर्ववर्णानुसन्धानशून्य एकैको वर्णो निमित्तं प्रत्यायकस्याभिव्यक्तौ, यतः प्रत्येकं वर्णाः परिच्छिद्यमाना अर्थस्याप्रत्यायकाः । यदा त्वन्त्यवर्णकाले समस्तशब्दपरिच्छेदिन्यां बुद्धावेकस्यां प्रत्यवभासन्ते, तदा वाचकः । एतदेवोक्तम्—उपजनितक्रमस्तु इति । तदुक्तं हरिणा—'तस्यापि क्रमरूप-प्रत्यस्तनयेनैव प्रतिपत्तृषु प्राप्तसमावेशस्य प्रत्यायकत्वमाचक्षते' इति ।

**आत्मभेदस्तयोः केचिदस्तीत्याहुः पुराणगाः ।**
**बुद्धिभेदादभिन्नस्य भेदमेके प्रचक्षते ।।४५।।**

---

आत्मभेदस्य ब्रुविकर्मत्वे द्वितीया, वाक्यस्वरूपानुकरणे तु प्रथमा । तत्र कार्य-कारणयोरन्यत्वपक्षे भेदः । पक्षान्तरे त्वेकस्यैवात्मनः शक्तिद्वयप्रविभागरूपपरिग्रहकृताद्

---

अयं भावः—यो वर्णक्रमरूपप्रत्यस्तमयेनैव प्रतिपत्तृषु चैतन्यात्मना प्राप्तसमावेशः शब्दः तस्यैव स्वव्यञ्जकवर्णक्रमाध्यारोपोपजनितक्रमस्यार्थप्रत्यायकत्वमाचक्षते शब्दविद इति ।

अपर आह—'क्रमवान् अक्रमनिमित्तम् । अक्रमे तु वागात्मनि श्रुत्यर्थशक्ती संसृज्येते' इति ।

अयं भावः—पूर्वमलब्धानुसंहारोऽक्रम एकैको वर्ण उपजनितक्रमस्य क्रमवतो निमित्तमित्युक्तम् । इदानीं तु क्रमवान् अक्रमस्य निमित्तमिति पक्षान्तरमाश्रित्याह । तच्चैतदेवमुपपद्यते—वस्तुत एक एव शब्दात्मा यः प्रयोक्तृबुद्धिव्यवस्थितः श्रोतृबुद्धिव्यवस्थितश्च, स चाक्रमोऽपि प्रयोक्तुः करणव्यापारा-दुपजातध्वनिक्रमेणाध्यारोपितेनोपजातक्रमः श्रोतृबुद्धिव्यवस्थितस्याक्रमस्य प्रत्यायकस्य निमित्तं व्यक्तौ । तस्मिन्नक्रमे श्रोतृबुद्धिव्यवस्थिते वागात्मनि श्रुतिशक्तिः प्रत्यायकस्य शब्दस्य शक्तिः प्रत्यायकत्वरूपा, अर्थशक्तिश्च प्रत्याय्यत्वरूपा शब्दार्थयोः प्रत्याय्यप्रत्यायकयोः संसर्गात् ससृज्येते इति ।

अयं भावः—यद्यपि प्रत्येकं वर्णाः परिच्छिद्यमाना अप्रतिपादकाः, तथापि तेष्वनुद्भूता प्रतिपादकत्वशक्तिरस्ति, यथा तेजःपरमाणुष्वनुद्भूता दाहशक्तिस्तत्कार्येषु त्र्यणुकादिषु दाहकत्वा-नुभवेनानुमीयते । एवमेवार्थेष्वप्यनुद्भूता प्रत्याय्यत्वशक्तिरस्ति । अत एव कैश्चिदेव शब्दैः केचनैवार्थाः प्रतिपद्यन्ते, नान्ये इति । ते च श्रुत्यर्थशक्ती क्रमवता शब्देनाभिव्यक्तेऽक्रमे श्रोतृबुद्धिव्यवस्थिते शब्दे संसृज्येते, वस्तुतोऽक्रमस्य क्रमवदभेदात्, क्रमवतश्च श्रुत्यर्थशक्तिमत्त्वात् । यतः क्रमवति शब्दे प्रयोक्तुः करणव्यापाराभिव्यक्ते व्यञ्जकवर्णाध्यारोपेण श्रुतिशक्तिरध्यारोपिताऽस्ति, अर्थस्य च तत्र प्राक्प्रति-संक्रान्ताकारत्वादर्थस्य प्रत्याय्यत्वशक्तिरपि तत्रास्ति । अत एव च प्रयोक्तुस्ततो बोधः । अत एवैवमाह कश्चिदभियुक्तः—

अविभक्तो विभक्तेभ्यो जायतेऽर्थस्य वाचकः ।
शब्दस्तत्रार्थरूपात्मा सम्भेदमुपगच्छति ।। इति ।

अयमर्थः—अविभक्तो व्यञ्जकवर्णक्रमाध्यारोपेऽपि वस्तुतो वर्णविभागतत्क्रमशून्यः श्रोतृबुद्धिस्थः शब्दो विभक्तेभ्यो वर्णेभ्यः, तत्संसर्गादिति यावत् । अर्थस्य वाचको जायते । किञ्च, तत्रार्थरूपात्मा अर्थस्वरूपमपि प्रतिसंक्रान्ताकारतया सम्भेदं तादात्म्यमुपगच्छति । एवञ्च प्रत्याय्यप्रत्यायकशक्तिसंसर्गेण श्रोतृबुद्धिस्थोऽक्रमोऽपि शब्दोऽर्थस्य वाचको जायत इति ।।४४।।

पूर्वस्यां कारिकायामुपादानशब्देषूच्चरत्सु द्वौ शब्दौ प्रतीयेते । एकः शब्दानामभिव्यक्तौ निमित्तम्, अपरश्च प्रत्यायक इति । तत्र तयोः स्वरूपभेदो वस्तुत औपाधिको वेति जिज्ञासायां दर्शनभेदेनोभय-मित्याह—**आत्मभेदस्तयोरिति** ।

बुद्ध्यवच्छेदान्नानात्वकल्पना। शब्दाकृतिव्यक्तिभेदाभेदव्यपाश्रयो वा पूर्वेषामाचार्याणां दर्शनभेद इति परस्तादेतद्वस्तुगत एव प्रपञ्चो भविष्यति ॥४५॥

---

तयोः निमित्तप्रतिपादकयोः शब्दयोः, आत्मभेदः स्वरूपान्यत्वं वस्तुभूतोऽस्तीति केचित् पुराणगाः पूर्वे स्मर्तार आहुः। एके तु वस्तुतोऽभिन्नस्यैव तस्य बुद्धिभेदात् = प्रयोक्तृश्रोतृबुद्धिरूपोपाधिभेदात्, भेदं = निमित्तत्वप्रत्यायकत्वरूपाभ्यां भेदं प्रचक्षत इति। उपपादितं चैतत्पूर्वकारिकाव्याख्यायामस्माभिः क्रमवानक्रमनिमित्तमिति पक्षस्योपपादनावसरे प्राक्।

इदं त्ववधेयम्—यद्यपि प्रयोक्तृबुद्धिस्थः शब्दो वर्णैः स्वव्यञ्जकैरभिव्यक्तौ निमित्तं श्रोतृबुद्धिस्थस्य प्रत्यायकस्याभिव्यक्तौ, निमित्तप्रत्यायकयोः स्वस्वोपाधिबुद्धिभेदेन भेदेऽपि वस्तुतोऽभेदात्। वक्ष्यते च शब्दस्य बुद्धिस्थत्वं समनन्तरकारिकायाम्—

'तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्' ॥ इति।

तत्र शब्दस्य प्रत्यायकत्वं व्यञ्जकतया, तत्र वर्णानां संसर्गेण तद्गतप्रत्यायकत्वशक्तेरपि संसर्गात्। अर्थस्य च तत्र प्रतिसंक्रान्ताकारतया तद्गतप्रत्याय्यत्वशक्तिसंसर्गोऽपि तत्रेति। यदि तु शब्दे प्रागुपवर्णितस्वरूपे स्वच्छेऽर्थस्य सन्निहितस्य तद्वाच्यस्यावाच्यस्य वा स्वरूपं न प्रतिसंक्रान्तं भवति, तदा कथं साम्प्रतं टेलीविजनयन्त्रादौ शब्दे प्रवाहिते वक्तुः स्वरूपमन्यत्रोपलभ्यते, कथं च 'सर्वे सर्वार्थवाचकाः' इत्यस्माकं पुराणः सिद्धान्त उपपद्यतेति।

अत्र 'आत्मभेदस्तयोरस्ति' इति वाक्यस्यानुक्रियमाणस्य ब्रुविकर्मत्वाद् आत्मभेदपदे अस्तेः कर्तृवाचके प्रथमा। वाक्यात् तु न द्वितीया, अप्रातिपदिकत्वात्। 'भेदमेके प्रचक्षते' इत्यत्र त्वात्मभेदस्य ब्रुविकर्मत्वाद् द्वितीया।

इयं कारिका हरिणा एवं व्याख्याता—'तत्र कार्यकारणयोरन्यत्वपक्षे भेदः। पक्षान्तरे त्वेकस्यैवात्मनः शक्तिद्वयप्रविभागरूपपरिग्रहकृताद् बुद्ध्यवच्छेदाद् नानात्वकल्पना, शब्दाकृतिव्यक्तिभेदाभेदव्यपाश्रयो वा पूर्वेषामार्याणां दर्शनभेद इति परस्तादेतद् वस्तुगत एव प्रपञ्चो भविष्यति' इति।

अयं भावः—कारणात् कार्यं भिद्यत इति येषां दर्शनम्, तेषां मते व्यक्त एव निमित्तप्रत्यायकयोर्भेदः। येषां तु न भिद्यत इति दर्शनम्, तस्मिन् पक्षे त्वेकस्यैव शब्दात्मनो निमित्तत्वप्रत्यायकत्वरूपशक्तिद्वयस्य यः प्रविभागो रूपभेदस्तस्य परिग्रहकृताद् बुद्ध्यवच्छेदाद् बुद्धिभेदाद् नानात्वकल्पना, न तु वस्तुतो नानात्वमिति। अथवा निमित्तभूतानां शब्दानामाकृतिरेका, निमित्तभूताः शब्दव्यक्तयस्तु भिन्ना इति। एवं प्रत्यायकशब्दानामप्याकृतिरेका, व्यक्तयस्तु भिन्ना इत्येवं पूर्वेषामाचार्याणां दर्शनभेद इति। एवं एतद्वस्तुगत एव = शब्दात्मकवस्तुगत एव प्रपञ्चः। एतस्य दर्शनभेदस्य प्रपञ्चो विस्तारः परस्तादग्रे भविष्यतीति।

शब्दाकृतिव्यक्तिभेदाव्यपाश्रयः पूर्वेषां दर्शनभेद इति हरिवाक्यं तु वृषभदेवेनान्यथा व्याख्यातम्। तथा हि—तत्र केषाञ्चिन्मते शब्दाकृतिर्निमित्तम्, शब्दव्यक्तिस्तु वाचिका। अपरेषामेतदेव विपरीतमिति। तयोश्च = निमित्तशब्दाकृतिप्रत्यायकशब्दाकृत्योः निमित्तशब्दव्यक्ति-प्रत्यायकशब्दव्यक्त्योः केचिद् भेदमपरे चाभेदं प्रतिपन्ना इति। इदमेव व्याख्यानं प्रकृतार्थसङ्गतं

**अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् ।**
**तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ।।४६।।**

---

एकत्वपक्षे नानात्वपक्षे वा बीजसत्तावस्थस्याविवृत्तस्य ज्योतिषो यथोत्तरेण प्रकाशात्मनाऽभिप्रज्वलितस्य स्वपररूपप्रतिपत्तिकारणत्वं प्रागसंवेद्यं पश्चादुपजायमानं दृश्यते, तथैव शब्दभेदभावनानुगते बुद्धितत्त्वे योऽयं शब्दः प्राप्तपरिपाके स्वबीजे लब्धाभिमुख्यः स्थानकरणाद्यनुगृहीतो विवर्तते, स व्यञ्जकध्वनिभेदानुपातेन व्यवच्छिद्यमानोद्देशः पौर्वापर्यवानुपलभ्यमानः स्वरूपपररूपयोः प्रकाशको भवति ।।४६।।

---

मनोरमं च प्रतिभाति । आकृतेरेकत्वं व्यक्तीनां तु भेद इति तु प्रसिद्धत्वान्नापूर्वम् । न च निमित्तप्रत्यायकयोर्भेदोऽभेदो वेति प्रकृतेऽर्थे उपयुज्यत इति ।।४५।।

तत्रैको निमित्तमिति यदुक्तं तद् व्याचष्टे—**अरणिस्थमिति** ।

यथाऽरणिस्थमनुद्भूतं ज्योतिः प्रकाशान्तरस्याभिप्रज्वलितस्य कारणम्, तद्वद् बुद्धिस्थः प्रयोक्तृबुद्धिस्थः शब्दोऽनुद्भूतोऽपि स्वव्यञ्जकवर्णरूपैर्ध्वनिभिरभिव्यक्तो वस्तुतोऽभिन्नोऽपि भिन्नः सन् पृथक्श्रुतीनां पर्यायभेदेन भिन्नानां प्रतिपादकशब्दानां कारणमभिव्यक्तौ निमित्तमित्यर्थः ।

अयं भावः—सर्वाणि भूतानि पञ्चीकरणेन पाञ्चभौतिकान्यपि स्थूलभूतैरपीतरैः संसृष्टानीत्यभ्युपगमोऽद्वैतिनाम्, इतरेषामपि स्थूलभूतानि यद्यपि न पाञ्चभौतिकानि, तथापि परस्परसंसृष्टानि तु सन्त्येवेत्यभ्युपगमः । प्रत्यक्षं चैतद् दृश्यते । एवं तेजोभूयिष्ठत्वेनारणिकाष्ठमेव ज्योतिरात्मना परिणमतीत्यायातं परिणामवादे । तथा च सत्कार्यवादेऽरणिकाष्ठे बीजभावेनावस्थितस्यानभिव्यक्तस्य ज्योतिषो मन्थनक्रिययाऽभिव्यक्तिरिति रीत्या कार्यकारणयोरेकत्वं कारणात्मना, कार्यात्मना तु नानात्वम् । तदुक्तं भामत्याम्—

कार्यात्मना तु नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ।।इति ।

असत्कार्यवादे तु कार्यकारणयोर्नानात्वेऽपि कार्यानुकूला शक्तिः कारणेऽस्त्येवेति तादृशशक्तितः काष्ठाद् ज्योतिषो जन्म । एवंरीत्याऽभिव्यक्तस्य ज्योतिषः प्रागभिव्यक्तेर्बीजभावेनावस्थितस्य स्वरूपपररूपप्रतिपत्तिकारणत्वमसंवेद्यं पश्चादुपजायमानं दृश्यते, तथैव शब्दभेदभावनानुगते बुद्धितत्त्वे = शब्दभेदानां भिन्नानां शब्दानां या भावनाः संस्काराः, यानि बीजानि तदनुगते तदन्विते बुद्धितत्त्वे, स्वबीजे = विवृत्तशब्दबीजे प्राप्तपरिपाके सति = प्राप्तः स्वहेतुकसंस्कारोद्बोधवशात् परिपाकः कार्याभिमुख्यं येनेति तथाभूते सति योऽयं शब्दो बुद्धौ बीजभावेनावस्थितः, स लब्धाभिमुख्यः = लब्धं विवर्ताभिमुख्यं येन तथाभूतः स्थानप्रयत्नाद्यनुगृहीतो विवर्तते = स्थूलशब्दाकारेण परिणमते ।

स च विवृत्तः शब्दः स्वव्यञ्जकवर्णरूपध्वनिभेदानुपातेन व्यवच्छिद्यमानप्रदेशोऽपूर्वापरोऽपि पौर्वापर्यवानिवोपलभ्यमानः स्वरूपस्य शब्दात्मकस्य पररूपस्य चार्थात्मकस्य प्रकाशको भवति । अयं च प्रयोक्तृबुद्धिस्थो विवृतः शब्दो निमित्तं प्रत्यायकस्य श्रोतृबुद्धिस्थस्य, 'श्रुतीनां कारणं पृथक्' इत्युक्तेरित्यवधेयम् ।

**वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः ।**
**करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते ।।४७।।**

---

इह शब्दार्थयो: सोऽयमिति सम्बन्धानुगमे क्रियमाणे यच्छब्दरूपमर्थे समारोपयितुमिष्यते, यस्मिंश्चार्थरूपमुपयोगेनानुप्रवेशं लभते, तत् पूर्वं बुद्धिनिरूपणया कृतसंस्पर्शमभिधेयात्मनि प्राप्यमाणं यथाभिप्रायं रूपविपर्यासेनेव रूपान्तरोपग्राहिस्वरूपं निवेशयति ।

करणेभ्यो विवृत्तेनेति । अविक्रियाधर्मकं हि शब्दतत्त्वं ध्वनिं विक्रियाधर्माणमनु विक्रियते ।

तच्च सूक्ष्मे व्यापिनि ध्वनौ करणव्यापारेण प्रचीयमाने स्थूलेनाभ्रसङ्घातवदुपलभ्येन नादात्मना प्राप्तविवर्तेन तद्विवर्तानुकारेणात्यन्तमविवर्तमानं विवर्तमानमिव गृह्यते ।। ४७ ।।

---

तदेतत् सर्वमत्रत्यहरिटीकापर्यालोचनमूलकम् । प्रायेण च सर्वत्रैव हरिटीकैव विशदीकृतेति न मम कश्चिदपूर्वः प्रयत्नः । वृषभदेवोऽपि च मम बुद्धौ हर्युक्तानामर्थानां वर्षणात् कथं न वन्द्यः ।।४६।।

कथं शब्दस्य बुद्धिस्थत्वं कथं वा निमित्तप्रत्यायकयोस्तयो: कार्यकारणभाव इति प्राप्ते आह—**वितर्कितः पुरा बुद्ध्येति ।**

पुरा उच्चारणात् प्राग् बुद्ध्या वितर्कितो विशिष्टेन विलक्षणेनान्यशब्दव्यावृत्तेन रूपेण निरूपित: क्वचिदर्थे निवेशित: सोऽयमिति व्यपदेशार्हरूपेण तादात्म्येन समारोपित:, करणेभ्यो विवृत्तेन स्थानकरणजन्येन ध्वनिना शब्दोऽनुगृह्यतेऽभिव्यज्यत इत्यर्थ: ।

अयं भाव:—इह शब्दार्थयो: सम्बन्धानुगमे क्रियमाणे = सम्बन्धव्युत्पादने क्रियमाणे, न पुनर्निष्पाद्ये सम्बन्धे, पूर्वं स्थितत्वात्, यच्छब्दरूपमर्थे सोऽयमित्यभेदेन समारोपयितुमिष्यते, यस्मिंश्च शब्दरूपेऽर्थरूपं स्वरूपसमारोपणाख्येन व्यापारेण प्रतिसंक्रान्ताकारतया दर्पणे मुखप्रतिबिम्बवदनुप्रवेशं लभते, तत् शब्दरूपमुच्चारणात् प्रागन्यशब्दव्यावृत्तेन रूपेण यथाऽभिप्रायं बुद्ध्या सोऽयमित्यर्थतादात्म्येन निरूपणेनाभिधेयात्मनि कृतसम्बन्धं क्रियमाणं शब्दरूपमपहायार्थरूपापत्त्येव ( अत्रेवशब्दोपादानं न परमार्थत: शब्दस्य स्वरूपहानमादर्शस्यैव मुखरूपप्रतिपत्ताविति मत्वा ) अर्थरूपोपग्राहिस्वरूपं बुद्धौ निवेशयति । एवमसौ शब्दो वितर्कितो बुद्ध्येत्युच्यते ।

'करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते' इत्यस्य त्वयं भाव:—सन्ति परमाणुकल्पा ध्वनिभागा:, यैरिदं व्याप्तं समस्तं नभस्तलम्, तैश्च सूक्ष्मैर्ध्वनिभि: करणव्यापारेण प्रचीयमानै:, परमाणुभिरिव स्थूलं भौतिकम्, स्थूलो ध्वनिर्जन्यतेऽभ्रैरिव सूक्ष्मैरुपचीयमानै: स्थूलोऽभ्रसङ्घात: । तद् वक्ष्यतेऽग्रे—

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिता: ।
अभ्राणीव प्रचीयन्ते शब्दाख्या: परमाणव: ।। इति । ( वा. प. १/११२)

**नादस्य क्रमजन्मत्वान्न पूर्वो न परश्च सः ।**
**अक्रमः क्रमरूपेण भेदवानिव जायते ।।४८।।**

क्रमवता हि व्यापारेणोपसंह्रियमाणप्रचयरूपो नादः सप्रतिबन्धाभ्यनुज्ञया वृत्त्या स्फोटमवद्योतयति । स तदानीमेकोऽपि विभक्तोद्देशावच्छेद इव प्रत्यवभासते । तस्य तु क्रमयौगपद्ये नित्यत्वैकत्वाभ्यां विरोधान्न विद्येते तेनासावेकत्वमनतिक्रामन् संसर्गिणो नादस्य भेदरूपमुपसंगृह्णाति । संसर्गिधर्म एवायमित्थंभूतः । तथा ह्यत्यन्तमभिन्नात्मा भिन्नरूपावयवोऽवयवी नानादेशस्थिताधारो वैचित्र्येणोपलभ्यते ॥ ४८ ॥

तच्च नादात्मकं प्राप्तविवर्तं स्थूलं ध्वनिं विक्रियाधर्माणं स्वव्यञ्जकमुपाधिमनुविक्रियतेऽविक्रियाधर्मकमपि शब्दतत्त्वम् , अत्यन्तमविवर्तमानमपि विवर्तमानमिव, अत्यन्तमनुपजायमानमप्युपजायमानमिव गृह्यत इति यावत् ।

एवं शब्दस्योच्चारणात् प्राग् बुद्ध्या निरूप्यमाणत्वाद् बुद्ध्यवच्छिन्नत्वाद् बुद्धिस्थत्वम्, न तु वस्तुतो बहिरन्तरवस्थितस्य व्यापकस्य शब्दतत्त्वस्य बुद्धिस्थत्वं सम्भवति, आकाशस्येव घटस्थत्वम् । व्यवहारस्तु तद्वत् सम्भवत्येव । किञ्चाद्वयस्यापि व्यञ्जकध्वनिधर्मोपगृहीतस्य बुद्धिरूपोपाधिभेदेन निमित्तप्रत्यायकरूपाभ्यां कार्यकारणभावोऽपि कथञ्चिदुपपद्यत इति कारिकाशयः ॥ ४७ ॥

स्फोटे कथं नियमेन ध्वनिधर्माः क्रमादय उपलभ्यन्त इति स्पष्टयन्नाह—**नादस्य क्रमजन्मत्वादिति ।**

स्फोटव्यञ्जकस्य नादस्य ध्वनेः क्रमजन्मत्वात् क्रमेणोत्पत्त्या तेन क्रमरूपेण तदा स्फोटो भेदवानिव जायते स्वतस्तु । स स्फोटोऽक्रमः, यतो न पूर्वः, नापरश्च स इत्यर्थः । नादस्यैव कुतः क्रम इति चेच्छृणु—यतो नादस्य कारणभूताः स्थानकरणाभिघाताः क्रमवन्तः, अतस्तत्सम्बन्धेन नादोऽपि क्रमवानिति ।

अयं भावः—क्रमवता स्थानकरणव्यापारेण परमाणुकल्पानां ध्वनीनां प्रचये जायमाने तैः प्रचितैर्ध्वनिभिः कादिवर्णरूपैः पदरूपस्य महतो ध्वनेरवयवैरुपसंह्रियमाणप्रचयः = उपजन्यमानप्रचय एको नादः स्थूलो ध्वनिः पदरूपो जायते । तस्य पदरूपस्य ध्वनेर्भागाः कादिवर्णरूपा ध्वनयः । न च कादयो वर्णा न ध्वनिरूपा इति वाच्यम् , कत्वादीनां ध्वनिधर्मत्वस्याध्यासभामत्यां स्पष्टमुक्तत्वात् । एवं पदध्वनिभिरपि वाक्यध्वनिरुपजन्यते ।

अयं तु विशेषः—पदध्वनिना व्यज्यमानः स्फोटः पदमिति व्यपदिश्यते, वाक्यध्वनिना व्यज्यमानस्तु वाक्यमिति, न तु वस्तुतः स्फोटे पदत्वं वाक्यत्वं वाऽस्ति । पदध्वनेरवयवभूताश्च वर्णध्वनयः पदस्फोटस्याभागस्यापि भागभूता इव लक्ष्यन्ते । तदिदमुक्तम्—

'अक्रमः क्रमरूपेण भेदवानिव लक्ष्यते' ॥ इति ।

तथा च योऽयमुत्पद्यते पदरूपस्य ध्वनेः कादिवर्णरूपो भागः, स कटाहादिपदरूपस्य स्फोटस्य भागमिवाभिव्यक्तमभ्यनुजानाति । तदन्यभागानां च टादीनामभिव्यक्तिं प्रतिबध्नातीवेत्यतः

**प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात् ।**
**तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः ।।४९।।**

---

तत्त्वपक्षेऽन्यत्वपक्षे वा चन्द्रादिप्रतिबिम्बं यत्राधारे संसृष्टमिवोपलभ्यते न हि तत्तथा। तत्तु निष्क्रियमपि तोयतरङ्गादिक्रियाधर्मोपग्रहेणैव तोयादीनां भिन्नां प्रवृत्तिमनुपतत्येव। प्राकृतस्य वैकृतस्य च नादस्य ह्रस्वदीर्घप्लुतेषु द्रुतमध्यमविलम्बितासु च वृत्तिषु तावानेव स्फोटो विचित्रां वृत्तिमनुविधत्ते ॥ ४९ ॥

---

पदस्फोटः क्रमवानवभासतेऽभिव्यज्यते च क्रमेण। एवं वाक्यस्फोटेऽपि वर्णक्रमावभासः पदक्रमावभासश्चावधेयः।

तदेवं वस्तुगत्या एकोऽपि स्फोटस्तदानीम् = स्वाभिव्यक्तिकाले परस्परव्यावृत्तैर्वर्णैः पदध्वनेरवयवैः स्वावयवैरिव गृह्यमाणैः प्रदेशभेदावच्छेदवानिव प्रत्यवभासते। प्रदेशोऽत्रावयवः।

वस्तुतस्तु तस्य स्फोटस्य क्रमयौगपद्ये नित्यत्वैकत्वाभ्यां विरोधान्न विद्येते। न हि नित्यस्यैकस्य स्फोटस्य क्रमयौगपद्ये सम्भवतः, यौगपद्यस्य क्रमाभावरूपतया क्रमाभावे तस्याप्यभावात्, अभावस्य प्रतियोगिसापेक्षत्वात्। एवं चासौ स्फोटः स्वधर्ममेकत्वमनतिक्रामन् = अत्यजन् स्वव्यञ्जकस्य स्वसंसर्गिणो नादस्य पदरूपस्य वाक्यरूपस्य वा क्रमभेदप्रयुक्तं भेदरूपमुपसंगृह्णाति। स्वसंसर्गिनादधर्म एवायं क्रमभेद इत्थम्भूतः स्फोटेऽवभासते, न तु स्वधर्मः। येन कारणेनात्यन्तमभिन्नात्मापि स्फोटो भिन्नरूपावयवोऽवयवी नानादेशस्थिताधारः = नानादेशेषु स्थिता वर्णरूपावयवरूपा आधारा यस्यावयविनः, स तथाभूतो वैचित्र्येणोपलभ्यते। यथा नीलादिगुणयुक्तेषु विभिन्नरूपवत्सु तन्तुषु समवेतोऽवयवी पटोऽविचित्रोऽपि विचित्रतन्तुसमवायाद् विचित्र इव प्रतीयते, न तु तत्र पटे नीलादिरूपाण्युत्पद्यन्ते, विरोधात्।

येषां तु मते चित्ररूपम्, तत्र नीलादिविलक्षणं समुत्पद्यते, तेषामपि मते तद्गुणान्तरं विचित्रम्, न तु तदाश्रयीभूतं द्रव्यमिति विचित्रगुणसम्बन्धादेवाविचित्रमपि द्रव्यं विचित्रं प्रतीयत इति दृष्टान्तोऽवधेयः ॥ ४८ ॥

स्फोटस्य ध्वनिधर्मक्रमादिग्रहणे निदर्शनमाह—**प्रतिबिम्बं यथान्यत्रेति**।

अयं भावः—सन्ति प्रतिबिम्बविषये त्रयो वादा वादिनाम्। तथा हि—चन्द्रादिबिम्बाभिमुख्ये तच्छायोपरक्तास्तोयावयवाः परितः प्रतिबिम्बन्ति = बिम्बप्रतिरूपा बिम्बसदृशा भवन्तीति तोयावयवानां तादृशां वस्तुतस्तोयादनन्यत्वात् प्रतिबिम्बस्यापि तोयादनन्यत्वमित्येकस्तत्त्वपक्षः।

तोयादन्यत् प्रतिबिम्बमित्यन्यत्वपक्षस्तु द्वेधा विभज्यते। तथा हि—तोये यत् प्रतिबिम्बं तस्य हेतुः = उपादानकारणम्, बिम्बमित्येकोऽन्यत्वपक्षः।

चक्षुरश्मयो भास्वरद्रव्यप्रतिहताः प्रतिस्रोतः प्रवर्तिताः परावृत्ताः स्वमेव मुखमीक्षन्ते इत्यपरः।

तत्राद्ये तत्त्वपक्षेऽयमर्थः—चन्द्रादिप्रतिबिम्बमन्यत्र तोयावयवेषु स्थितं स्थितमिवोपलभ्यमानं स्वयं निष्क्रियमपि तोयरूपो यस्तरङ्गादिस्तद्धर्मक्रियोपग्रहेणैव तोयादीनां भिन्नां

**आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते ।**
**अर्थरूपं तथा शब्दे स्वरूपं च प्रकाशते ।।५०।।**

---

यथा ज्ञानं ज्ञेयपरतन्त्रम् , ज्ञेयरूपप्रत्यवभासत्वादनिर्देश्यस्वरूपमपि ज्ञानान्तरस्येव भिन्नं स्वस्यैवात्मन: स्वरूपमात्रं दर्शयति, तथा ह्यतीतमनुपलब्धमप्यन्येन ज्ञानेन स्मृतिविषयत्वं प्रतिपाद्यते । तद्वदयमर्थे शेषभावमापद्यमान: शब्दोऽभिधेयतन्त्रस्तद्रूपोपग्राही शेषिणीमिव स्वरूपमात्रां प्रत्यवभासयति । सा तु सन्निहितप्रत्यवभासापि लोके भुज्यादिक्रियासम्बन्ध-विरोधान्नाश्रीयते । व्याकरणे त्वर्थस्य कार्यविरोधित्वात् तस्याश्चाभिधेयरूपेण व्यवस्थानाद-विरुद्ध: कार्यैर्योग: ।। ५० ।।

---

प्रवृत्तिम् = नानाविधान् व्यापारान् अनुपतति अनुसरति इव, स धर्म: स्वोपाधिधर्मपरिग्रहीतृत्वरूपो धर्मश्चन्द्रादिप्रतिबिम्बे दृष्ट: स्फोटनादयोरपि । तथा हि—प्राकृतस्य नादस्य ह्रस्वदीर्घप्लुतादिषु धर्मेषु सत्सु प्राकृतनादाभिव्यक्त: स्फोटोऽपि तद्धर्मेव लक्ष्यते, तथा वैकृतस्य नादस्य द्रुतमध्यमबिलम्बितासु वृत्तिषु सतीषु वैकृतनादेनाभिव्यज्यमान: स्फोटस्तावानपि = द्रुतादिवृत्तिरहितोऽपि विचित्रां द्रुतादि-वृत्तिमनुसरतीति ।

अयं भाव:—चन्द्रादिप्रतिबिम्बं चलं दृश्यते, न तु अचलम् । तथा हि—बिम्बच्छायोपरक्ता उदकावयवा एव प्रतिबिम्बमित्यस्मिन् प्रकृते पक्षे तोयरूपेऽवयविनि तरङ्गादिरूपतामापन्ने सा क्रियोत्पन्ना, तोयावयवास्त्ववयविक्रियावशात् क्रियावन्तोऽवभासन्ते । यदि त्ववयवेषु क्रिया स्यात्, तदा तदुत्पत्तावयवविभागपूर्वकोऽवयविविनाश: स्यादिति ।

'चक्षुरश्मयो भास्वरद्रव्यप्रतिहता: परावृत्त्य स्वमेव मुखमीक्षन्ते' इति मते प्रतिबिम्बस्य बिम्बरूपतया तोयादन्यत्वमिति पक्षेऽपि प्रतिबिम्बस्य वायुनाऽसंयोगोऽस्ति प्रतिबिम्बे क्रियोत्पत्तिरिति रीत्या निष्क्रियं प्रतिबिम्बम् ।

तोये प्रतिबिम्बं बिम्बोपादानकं बिम्बसमसत्ताकं समुत्पद्यत इति रीत्या तोयादन्यत् प्रतिबिम्बं तोये उत्पद्यत इति पक्षे तु यद्यपि वायुसंयुक्तोदकसंयोगात् प्रतिबिम्बे क्रिया सम्भवति, तथापि संयोगज: संयोगो वैशेषिकै: स्वीक्रियते, नान्यै: ।

न च वैशेषिकाणां मते बिम्बादर्थान्तरं प्रतिबिम्बमिति नान्येषाम्, न वा वैशेषिकाणां मते प्रतिबिम्बे क्रियोत्पत्तिसम्भव इति । अथवा पक्षत्रयेऽपि यथा प्रतिबिम्बं स्वयमक्रियम्, उपाधिसंसर्गात् क्रियावत् स धर्म: स्फोटनादयोरित्येवं व्याख्याने न प्रस्तुतव्याकोप इति द्रष्टव्यम् ।।४९।।

इदानीं शब्दस्यार्थाभिधानप्रकारमाह—**आत्मरूपं यथा ज्ञान इति ।**

अयं भाव:— यथा ज्ञानं स्वरूपेणार्थसम्बन्धं विनाऽनिर्देश्यस्वरूपमपि ज्ञेयप्रत्यवभासत्वात् = ज्ञेयरूपोपग्रहेण प्रत्यवभासमानत्वाद् ज्ञेयपरतन्त्रम् । न हि तज्ज्ञेयाकारापोद्धारे स्वेन रूपेण ज्ञातुं शक्यते, अतो ज्ञेयरूपं प्रकाशयदपि ज्ञानान्तरस्येव स्वस्यापि स्वरूपमात्रं दर्शयति । तथा हि—यथा 'घटमहं जानामि' इति ज्ञानान्तरेण घटज्ञाने परिच्छिद्यमाने स्पष्टपरिच्छेद्यता ज्ञानस्य, तथा

**आण्डभावमिवापन्नो यः क्रतुः शब्दसंज्ञकः ।**
**वृत्तिस्तस्य क्रियारूपा भागशो भजते क्रमम् ।।५१।।**

सर्वविभागोद्ग्राहप्रतिसंहारेण बाह्यो व्यावहारिकः शब्दोऽन्तःकरणे मयूराद्यण्डरसवत् पूर्वविभागोद्ग्राहभावनामात्रामव्यतिक्रामन् प्रतिलीयते । यथा चैकस्य शब्दस्य प्रतिलयस्तथा दाशतयादीनामपि । स त्वेवं प्रतिलीनः प्रत्यस्तमितभागः प्राप्तविवक्षाप्रतिबोधायामन्तःशब्दवृत्तौ वाक्यपदविवर्तधर्ममुद्गृह्य प्रत्येकमवयवोद्ग्राहेण क्रमशक्तिं परिगृह्णाति । सा चास्योदयप्रत्यस्तमयनिर्भासमात्रा क्रियारूपेणावसीयते ।।५१।।

---

रूपादिविषयपरिच्छेदिन्यपि ज्ञाने ज्ञानस्य परिच्छेद्यतेति । यदि त्वेवं न स्यात्, तर्हि यद्रूपादिविषयकं ज्ञानमतीतं ज्ञानान्तरेणानुपलब्धं च तस्य स्मृतिर्न स्यात्, स्वेनान्येन चाननुभूतत्वात् । अनुभूतविषया हि स्मृतिर्भवति । दृष्टा च तत्रापि स्मृतिः 'धटमहमद्राक्षम्' इति । तस्मात् स्मर्यमाणत्वादनुभूयते रूपादिविषयपरिच्छेदिन्यपि ज्ञाने स्वरूपमिति निश्चीयते । तथा ज्ञानवदेव शब्दोऽप्यर्थं विनाऽनिर्देश्यस्वरूपः, शब्दार्थयोः सोऽयमितीतरेतराध्याससस्यानादित्वात् । अत एवास्यार्थस्य वाचकः कः शब्द इति प्रश्ने गौरित्यर्थतादात्म्येनैव प्रतिनिर्देशः क्रियते ।

एवञ्च शब्दोऽप्यर्थस्य प्रकाशकतया प्रकाश्येऽर्थे शेषभावमापद्यमानोऽभिधेयपरतन्त्रस्तद्रूपोपग्राही शेषिणीमिव = प्रधानभूतामिव अर्थवत् प्राप्तधान्यां स्वरूपमात्राम् = स्वरूपमेव विषयम् । अत्र मात्राशब्दो विषयपरः, मीयत इति कर्मसाधनव्युत्पत्त्या प्रत्यवभासयति । सा च शब्दात् प्रतीयमाना स्वरूपमात्रा लोके व्याकरणे च सर्वत्रैव शब्दादुपस्थिता भवति, तथापि लोके तस्याः कर्त्रादिकारकरूपेण भुज्यादिक्रियासम्बन्धविरोधाद् भुज्यादिक्रियान्वयित्वेन तत्र सा नाश्रीयते; किन्तु वाच्यत्वसम्बन्धेनार्थे विशेषणं भवति, विशेष्ये विशेषणं तत्रापि च विशेषणमिति रीत्या । न तु विशिष्टस्य भुज्यादिक्रियाविशेषणत्वम्, असम्भवात् । व्याकरणे तु 'अग्नेर्ढक्' ( ४/२/३३ ) इत्यादावङ्गारादिरूपस्यार्थस्य ढगादिकार्यविरोधित्वादग्न्यादिशब्दादभिधेयरूपेणोपस्थितायाः स्वरूपमात्रायाः कार्यैर्ढगादिभिरविरुद्धो योग इति शब्दस्वरूपस्य विशेष्यत्वमर्थस्य च वाचकतया तत्र विशेषणत्वमिति ।।५०।।

यत् प्रागुपन्यस्तम्—क्रमवान् ध्वनिर्निमित्तम्, अक्रमः शब्दः स्फोटात्मकः श्रोतृबुद्धिस्थः प्रतिपादक इति, तथैतदेव विपरीतम्—अक्रमः शब्दो वक्तृबुद्धिस्थो निमित्तम्, क्रमवान् श्रोतृबुद्धिस्थः प्रतिपादक इति । एतदेवोदाहरणोपन्यासेन स्पष्टीकरोति—**आण्डभावमिवापन्नो यः क्रतुरिति ।**

अण्डे भवो रस आण्डस्तद्भावम्, अनभिव्यक्तकार्यरूपोपग्राहित्वम्; आपन्नः प्राप्त इव, यः शब्दसंज्ञकः क्रतुः, क्रियते स्वस्वरूपो तादात्म्येनाध्यारोप्यतेऽर्थो यया सा क्रतुर्बुद्धिः, वेदान्तेषु 'स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः' इत्यादौ निर्दिष्टा । तथा च बुद्धिर्यथा स्वरूपेऽर्थावग्रहणात् क्रतुः, एवं शब्दोऽपि स्वरूपे तादात्म्येनार्थावग्रहणात् क्रतुः । तस्य क्रियाभूता ( अत्रेवार्थे भूतशब्दः, पितृभूतो देवदत्त इति यथा ) घटादीनामुत्पत्तिविनाशक्रियैव वृत्तिर्नित्यत्वादाविर्भावतिरोभावरूपो व्यापारः । जातावेकवचनम् । भागशः कादिवर्णरूपध्वनिभागं स्वस्मिन् समारोपितं वीप्सितं

**यथैकबुद्धिविषया मूर्तिरक्रियते पटे ।**
**मूर्त्यन्तरस्य त्रितयमेवं शब्देऽपि दृश्यते ।।५२।।**

यथा सावयवा पुरुषादिमूर्तिराचिकीर्षिता क्रमोपलब्धावप्येकबुद्धिनिबन्धनत्वं प्राप्ता पटगुड्यादिषु क्रमेणाक्रियते, तथा व्यावहारिकोऽपि क्रमग्राह्यः शब्दः प्रतिसंहृतक्रम एकबुद्धिनिबन्धनो भूत्वा निरवयवक्रमं बुद्धिरूपं तस्यामात्मप्रत्यवभासमात्रायां पृथग्भूतायामिव प्रत्यस्य तद्भावमिवोपनीय करणवृत्तिक्रमध्वनिधर्मप्रतिपत्त्या पुनरपि व्यवहारमवतरति । तथा चासौ तिसृभिरवस्थाभिरविच्छेदेनावर्तमानो ग्राह्यग्राहकभावं नातिवर्तते ।।५२।।

समाश्रित्य भागं भागमिति भागशः । संख्यैकवचनाच्च वीप्सायामिति वीप्सायां शस् तद्धितः । तद्गतं क्रमं भजत इति संग्रहेण कारिकार्थः ।

अयं भावः—अयं श्रोत्रानुपात्री श्रोत्रग्राह्यो व्यावहारिकोऽर्थप्रतिपादकः शब्दः श्रोत्रा श्रोत्रेण गृह्यमाणः श्रोत्रवृत्तिद्वारा शब्दाकारमनुभवन्त्या बुद्धिवृत्त्या च गृह्यमाणः श्रोतृबुद्धौ सर्वविभागोद्ग्राहप्रति-संहारेण मयूराण्डरसवत् पूर्वविभागोद्ग्राहभावनामात्रामपरित्यजन् प्रलीयते ।

एतदुक्तं भवति—स्वरूपग्रहणानन्तरं श्रोतृबुद्धौ प्रलीयमानः शब्दः प्रलयात् प्राक् पूर्वे ये विभागोद्ग्राहाः = स्वीकृता विभागा अवयवाः, तेषा भावनामात्रां संस्कारविशेषं शक्तिरूपमपरित्यजन् सर्वविभागोद्ग्राहतिरोभावेन प्रलीयत इत्युपसंहृतावयवो बुद्धौ शब्दः प्रलीयत इति यावत् । तत्र दृष्टान्तो मयूराण्डरसवदिति । यथा मयूरादीनां दम्पतीनामङ्गसम्भवो रसोऽण्डेषूत्पत्स्यमानाङ्गप्रत्यङ्गचन्द्रकादीनां रूपोपग्रहपूर्वकं तदुत्पादने विभिन्नविचित्रशक्तिमत्तामपरित्यजन् प्रलीयते, तथा प्रागुत्पन्नः शब्दोऽप्युत्पत्स्य-मानशब्दरूपोपग्रहपूर्वकमेव श्रोतुर्बुद्धौ प्रलीयत इति । यथा चैकस्य शब्दस्य श्रोतृबुद्धौ प्रविलय उपवर्णितः, तथा दाशतयादीनामपि = दशादिशब्दावयवकानां वाक्यानां प्रविलयो बोध्यः । स त्वेवं श्रोतृबुद्धौ प्रतिलीनः प्रत्यस्तमितसर्वविभागः शब्दो यदाऽन्तःकरणे संस्काररूपेण स्थिता शब्दाकारा बुद्धिवृत्तिर्विवक्षया प्रतिबोध्यते = शब्दरूपकार्यनिष्पादनाभिमुख्यं नीयते, तदा वाक्यरूपध्वनिधर्मान् स्वस्मिन् विवर्तरूपान् उद्गृह्य प्रत्येकं वर्णरूपावयवोद्ग्राहेण क्रमाख्यां शक्तिं परिगृह्णाति । यतस्तेऽवयवाः क्रमेणावभासमुप-गच्छन्ति । तेषामवयवानां यः क्रमेणोदयप्रत्यस्तमयप्रत्यवभासः, सैवास्य शब्दस्योत्पत्तिविनाश-शब्दाभिधेया क्रिया, न त्वस्य घटादिवदुत्पत्तिविनाशावनारोपिताविति ।।५१।।

तदेवं प्रथमत उत्पन्नः क्रमवान्, ततः श्रोतृबुद्धौ प्रविलीनोऽक्रमः, पुनश्चाभिव्यक्तः क्रमवानिति प्रदर्श्य दृष्टान्तान्तरेण तदेव कथयति—**यथैकबुद्धिविषयेति** ।

यथा मूर्त्यन्तरस्य बहिष्ठाया मूर्तिः पटे आक्रियते, एवं शब्देऽपि त्रितयं रूपत्रयं दृश्यत इति योजना ।

अयमर्थः—यथा मूर्त्यन्तरस्य बहिष्ठायाः पुरुषमूर्तेः समस्तावयवोद्ग्राहिणी एकबुद्धिविषया मूर्तिरेकैकावयवबुद्धिपूर्वकं समुपजातसमस्तावयवविषयकैकबुद्धिविषया बुद्धिस्था मूर्तिः पटे आक्रियते, आकारवती क्रियते, एवं बहिष्ठा एका पुरुषमूर्तिः, आलेख्यकर्तृबुद्धिस्था द्वितीया, पटे चित्रिता

**यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्तते ।**
**व्यवसायो ग्रहीतृणामेवं तेष्वेव जायते ।।५३।।**

---

यथैव प्रयोक्ता शब्दविशेषविषयं प्रयत्नमभिपद्यमानः प्रतिशब्दं परितः परिच्छिन्नान् शब्दात्मनः संस्पृशन्निव मनः प्रणिधत्ते, तथैव प्रतिपत्तापि शब्दरूपपरिच्छेदाधीनमर्थग्रहणं मन्यमानस्तं तं शब्दं सर्वैः सम्बन्धिभिर्विशेषणैराश्रितसंसर्गानुग्रहं निर्धारयति । अर्थप्रतिपत्ति-भावनाभ्यासात् तु सा शब्दरूपपरिच्छेदावस्था न चित्रीक्रियते । तस्माच्छेषिभावकाष्ठामनुभूय सर्वार्थयोनयः सर्वे शब्दाः शेषभावमर्थेषु प्रतिपद्यन्ते ।।५३।।

---

तृतीयेति, तथा शब्देऽपि रूपत्रयं दृश्यते । तद्यथा प्रथमतः श्रवणगोचरीभूतः क्रमवान् एकः, ततो बुद्धौ प्रविलीनोऽल्पीभूतः संस्कारशेषोऽक्रमो द्वितीयः, ततः परप्रतिपादनाय प्रयुक्तः क्रमवान् तृतीय इति ।

अयं भावः—यथा पुरुषाद्यवयवानां हस्तपादादीनां चित्रकारस्य पूर्वं क्रमेणोपलब्धावपि यतः सावयवा पुरुषादिमूर्तिराकारवती कर्तुमिष्टा, अतः पश्चादेकबुद्धिनिबन्धनत्वम् = एकबुद्धिविषयत्वम्, निबध्यते स्वेन रूपेण निरूपणीया क्रियते बुद्धिर्येनेति निबन्धनं विषयः प्राप्ता सती अनन्तरं पटकुड्यादिषु आक्रियते = आकारवती क्रियते, आलिख्यते ।

तथा चेदमायातम्—चित्रकारश्चित्रं निर्मिमाणः पुरुषादिमूर्तिं पूर्वमवयवक्रमेणोपलभ्य पश्चादेकया सङ्कलनया परिच्छिद्यानन्तरमवयवक्रमेण पटकुड्यादिषु चित्रं निर्मातीति रीत्या पुरुषादिमूर्तेस्त्रिरूपता—क्रमेणोपलब्धिः, अक्रमेणोपलब्धिः, पुनः क्रमेणोपलब्धिरिति बुद्धेः क्रमत्रयमाश्रित्य । तथा व्यावहारिकोऽपि स्वाभिव्यञ्जकवर्णक्रमेण ग्राह्यः शब्दो बाह्यः पश्चाद् बुद्धौ प्रतिसंहृतक्रम एकबुद्धिनिबन्धनो = एका केवला वर्णक्रमप्रतिभासशून्या बुद्धिर्निबन्धनम् आश्रयो यस्य तथाभूतः, भूत्वा पुनरपि विवक्षासमुपजात-प्रयत्नप्रयुक्तानां करणानां स्थानकरणाभिघातरूपया वृत्त्या समुत्थितस्य ध्वनिधर्मस्य क्रमस्य प्रतिपत्त्या = स्वीकारेण पुनरपि व्यवहारमवतरति = अर्थप्रतिपादनाय लोके प्रयुज्यते ।

अयं भावः—शब्दो बुद्धौ स्वप्रविलयकाले स्वप्रत्यवभासमात्रस्वरूपायामवयवक्रमप्रतिभासवत्यां बुद्धौ निरवयवक्रमाद् बुद्धिरूपात् पृथग्भूतायामिव निरवयवक्रमं बुद्धिरूपं प्रत्यस्य = प्रक्षिप्य, अनुप्रवेश्य तदनुवेशाद् निरवयवक्रमबुद्धिरूपतामिवात्मानमुपनीय स्थानकरणाभिघातरूपकरणव्यापारजन्यध्वनि-धर्मक्रमप्रतिपत्त्या पुनरपि व्यवहारपथमवतरतीति ।

तथा चैवं तिसृभिरवस्थाभिरविच्छेदेन श्रोक्तृवक्तृपरम्परया आवृत्तिमनुभवन् शब्दो ग्राह्यग्राहकभावं नातिवर्तते । बुद्धौ प्रविलयात् प्राग् उत्तरकाले वा ध्वनिधर्मवर्णक्रमानुभवेनार्थं प्रतिपादयन् शब्दः स्वरूपमपि प्रत्याययतीत्यायतम् । तथा च ज्ञानवत् स्वस्मिन्नेकस्मिन्नपि ग्राह्यग्राहकभावं शब्दो नातिक्रामतीत्यायातम् ।

शब्दस्य तिस्रोऽवस्थाश्चैवम्—प्रथमतः क्रमरूपता, ततो बुद्धौ प्रविलयेनाक्रमरूपता, ततः स्थानकरणाभिघातरूपकरणव्यापारजन्यध्वनिधर्मक्रमप्रतिपत्त्या क्रमरूपतेति ।।५२।।

इदानीं शब्दस्य स्वरूपग्राहकत्वं पुनः साधयन्नाह—**यथा प्रयोक्तुरिति** ।

**अर्थोपसर्जनीभूतानभिधेयेषु केषुचित् ।**
**चरितार्थान् परार्थत्वान्न लोकः प्रतिपद्यते ।।५४।।**

---

यथैवायं शुक्ल इति सगुणे गुणिनि प्रतीयमाने क्रियाविशेषविषयमुपलक्षणत्वमपि गुणस्य क्वचिदेवान्यत्र विशिष्टत्वात् प्रतीयते, तथा यो गोशब्दः सोऽयं पिण्ड इत्यभिसम्बन्धे सति क्रियायोगविवक्षायामर्थस्योपलक्षणे चरितार्थं शब्दं शेषतां प्रतिपन्नमभिधेयमिव क्रियासाधनभावेन (न) लौकिकाः प्रतिपद्यन्ते ॥ ५४ ॥

---

अयं भावः—यथैव प्रयोक्ता शब्दविशेषविषयकमुच्चारणप्रयत्नमभिपद्यमानः स्वबुद्धौ प्रविलीनान् बुद्धेरव्यतिरेकं गतान् परितः सर्वतः = स्वान्यशब्देभ्यः परिच्छिन्नान् = विविक्तरूपान् उच्चारणीयशब्दातिरिक्तान् शब्दान् संस्पृशन्निव मनसा विषयीकुर्वन्निव प्रत्येकमुच्चारणीयशब्दमुद्दिश्य मनः प्रणिधत्ते; वस्तुतो न तत्र तदा शब्दः, न च परिच्छेदः, न च संस्पर्श इति संस्पृशन्निवेत्युच्यते; तथैव प्रतिपत्ताऽपि शब्दग्रहणाधीनमर्थग्रहणं मन्यते । न हि शब्दस्वरूपे प्रागगृहीतेऽर्थग्रहणं सम्भवति दृष्टं वा ।

न चैवमपि प्रत्यक्षेणैव शब्दस्य स्वरूपं गृह्यत इति कथं शब्दस्य स्वरूपग्राहकत्वं सिद्ध्यतीति वाच्यम् ; यतः श्रावणप्रत्यक्षेण गृहीतं तं तमुच्चारितं शब्दं प्रतिपत्ताऽर्थग्रहणात् प्राग् घटपदत्वघटपदार्थवाचकत्वादिधर्मरूपैर्घटशब्दसमवेतैर्विशेषणैर्घटशब्दाश्रितैर्यः संसर्गः, तेन कृतो यो घटशब्दस्य शब्दान्तरव्यावृत्तिरूपोऽनुग्रहः, तद्वन्तं निर्धारयति । न हि श्रोत्रेण घटपदस्य सुप्तिङन्तत्वलक्षणं तत्तदर्थशक्तत्वरूपं वा पदत्वं गृह्यते, किन्तु बुद्ध्यैवेत्यर्थग्रहणात् प्राक् श्रोत्रगृहीतेन शब्देनैव तत्तद्धर्मविशिष्टस्य शब्दस्य ग्रहणमिति शब्दस्य स्वरूपग्राहकत्वसिद्धिः ।

ननु यदि शब्दो विशिष्टं स्वस्वरूपं प्रथमतः प्रतिपाद्य स्वार्थं प्रत्याययति, कस्मान्न पुनरर्थात् पृथक्त्वेन गृहीतः स एव प्रवृत्तिनिमित्तीक्रियत इति चेत्, न, यतः सा अर्थग्रहणात् प्राक् तत्तद्विशेषणैः शब्दान्तरेभ्यो विविक्तत्वेन शब्दस्य परिच्छेदावस्था अर्थावबोधार्थं या तत्तच्छब्दवाच्यत्वेन तत्तदर्थस्य भावना = ध्यानरूपा चिन्ता, तस्या अभ्यासाद् न चित्रीयते = अर्थपरिच्छेदात् चित्रत्वेन विचित्रत्वेन विलक्षणत्वेन पृथक्त्वेन न ज्ञायते। अतोऽर्थात् प्राग्भाविन्यपि शब्दपरिच्छेदावस्था न प्रथमतः प्रतीयत इति स्वेन गृह्यमाणोऽपि शब्दः स्वप्रवृत्तौ न निमित्तम् ; किन्तु जात्यादिरूपोऽर्थ एवेति। यतोऽर्थावबोधार्थमभ्यस्यमानायामर्थभावनायामर्थप्रत्यवमर्शरूपायामनुगतैकाकारतया गोचरीकृतस्यार्थे विशेषणीभूतस्यैव शब्दप्रवृत्तिनिमित्तत्वम् , शब्दस्तु तदानीं प्रत्यवमृश्यमानोऽपि शब्दान्तरव्यावृत्तिक्रियाविशेष्यत्वेन स्वरूपप्रकाशने तत्पर इत्यर्थभावनाऽभ्यासाद् व्याक्षिप्तः शब्दान्तरेभ्यः स्वस्वरूपं परिच्छिन्दन्निव स्वस्वरूपमेव प्रत्यवमृशतीति नार्थस्य प्रवृत्तिनिमित्तम् ।

तस्मात् प्रागुक्तरीत्याऽर्थग्रहणात् प्राक् स्वेन स्वस्य ग्राह्यत्वेनार्थापेक्षया प्राधान्यरूपशेषिभावकाष्ठामनुभूय सर्वार्थज्ञापकाः सर्वे शब्दाः पुनरर्थेषु प्रतिपाद्येष्वर्थावधिकमप्राधान्यरूपं शेषभावं प्रतिपद्यन्त इति स्थितिः। पदसमन्वयस्तु यथाऽर्थोल्लेखात् प्राक् प्रयोक्तुर्बुद्धिः

शब्देष्वेव प्रवर्तते, एवं ग्रहीतॄणां प्रतिपत्तॄणामप्यर्थग्रहणात् प्राक् तेष्वेव शब्देष्वेव व्यवसायो बुद्धिर्जायत इति ॥ ५३॥

ननु यदि स्वरूपग्राहकत्वमपि शब्दस्य, तदा लोकेऽर्थवत् शब्दतः प्रतीयमानं शब्दस्वरूपमपि कथं न सम्भवत्क्रियाङ्गत्वं लभते ? यत्र तु न सम्भवस्तत्र मा लभतां नाम। तद्यथा—

जपोपवासनियमैस्तपसाऽनाशकेन च।
भवपारं परं गन्तुं रामः सद्भिरुपास्यताम् ॥ इति।

अस्त्यत्र सम्भवो रामशब्दस्यापि ध्यानरूपोपासनकर्मतायाः, जपोपवासादिकं तु चित्तशुद्धिद्वारा ध्याने उपकारकम्, न तु साक्षादिति न शब्दे जपादिजन्यप्रीत्यभाववति तदसम्भव इति, इति प्राप्ते आह—**अर्थोपसर्जनीभूतानिति।**

अयमर्थः—लोके शब्दतः प्रतीयमानानपि स्वात्मकशब्दानर्थोपसर्जनीभूतान् अर्थस्य प्रधानतया शब्दस्वरूपस्य च तत्रोपलक्षणत्वेनाप्रधानतां गतान्, न लोको विधेयक्रियाद्यन्वयित्वेन प्रतिपद्यते प्रत्येति।

नन्वेवं सर्वत्रैव शब्दस्वरूपस्यार्थोपलक्षणत्वे न क्वापि तस्य प्राधान्येन विधेयक्रियाद्यन्वय इति शब्दस्वरूपविषयायाः शब्दवृत्तेरचारितार्थ्यं प्राप्तमिति चेत्, न, अभिधेयेषु केषुचित् चरितार्थत्वात्।

अयं भावः—प्राधान्येनाभिधेयेषु शब्दस्वरूपेषु सत्सु केषुचित् प्रदेशेषु लोके सोऽयमित्यभेदेन व्यपदेशे गौरयमित्यत्र व्याकरणे च अग्नेर्ढगित्यादौ शब्दस्वरूपस्यैव प्राधान्येन प्रतीतिः, अर्थस्य तूपलक्षणतयेति तत्र चारितार्थ्यं शब्दस्वरूपविषयायाः शब्दवृत्तेरिति। अर्थोपसर्जनीभावे हेतुरभिधेयेषु केषुचित् चारितार्थ्यं परार्थत्वादिति न लोकः प्रतिपद्यत इत्यत्र हेतुः, योग्यत्वात् सन्निधानाच्च। परस्य स्वातिरिक्तस्यार्थस्याभिधानाय प्रयुक्तत्वेन पारार्थ्यं शब्दस्य, अतो लोके लोकः शब्दस्वरूपं क्रियासाधनभावेन न प्रतिपद्यत इत्यर्थः।

अयं भावः—यथा 'गुणवचनेभ्यो मतुपो लुगिष्टः; (वा० ४५८) इति शिष्टत्वात् शुक्लादिशब्देभ्यो द्रव्यवाचकपदसन्निधाने सर्वत्रैव सगुणो गुणी प्रतीयते, किन्तु क्रियाविशेषविषयमुपलक्षणत्वं क्वचिदेव प्रतीयते, 'शुक्लं वृषं भोजय' इत्यादौ यत्र नास्ति विशेषणत्वसम्भवः। न तु 'शुक्लं वृषं पश्य', 'अयं शुक्लः' इत्यादौ, यत्रास्ति विशेषणत्वेनान्वयसम्भवः। तथा यो गोशब्दः, स पिण्ड इत्यभिप्रायेण सोऽयमित्यभिसम्बन्धे सति ''गोपयसोर्यत्'' (४/३/१६०) इत्यादौ शब्दार्थयोरुभयोरप्युपस्थितावर्थस्य कार्यान्वयासम्भवेनोपलक्षणत्वे सति शब्दस्वरूपस्य प्राधान्येन प्रत्यायकतया चरितार्थं शब्दम् 'गामानय' इत्यादौ क्रियायोगविवक्षायां क्रियासाधनभावेनान्वयासम्भवेनार्थस्य शेषतां प्राप्तं लौकिका अर्थमिव क्रियासाधनभावेन न प्रतिपद्यन्त इति पूर्वकारिकार्थनिरूपणावसरे हरिटीकायां शब्दस्य क्रियाङ्गता विरोधात् प्रतिषिद्धा—'तस्माच्छेषिभावकाष्ठामनुभूय सर्वार्थयोनयः सर्वे शब्दाः शेषभावमर्थेषु प्रतिपद्यन्ते' इति। अत्र तस्मादित्यस्यान्वयस्तु शेषभावमर्थेषु प्रतिपद्यन्त इत्यत्राभिप्रेतः।

सम्प्रति त्वस्यां कारिकायां व्याकरणे ''अग्नेर्ढक्'' (४/२/३३) इत्यादावर्थस्योपलक्षणत्वेन शब्दस्वरूपस्य प्राधान्येन बोधकतया चारितार्थ्येन लोकेऽर्थशेषतां प्राप्तं शब्दं विधेयक्रियान्वयित्वेन न प्रतिपद्यन्त इति विशेषः। एतच्चात्राभिधेयेषु केषुचिच्चरितार्थानिति कारिकांशेनापि सूचितम्॥५४॥

**ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।**
**तथैव सर्वशब्दानामेते पृथगवस्थिते ।।५५।।**

---

घटादयो हि ग्राह्यत्वेनैव व्यवस्थिता इति घटादीनां ग्रहणकाले नैव काञ्चिदुपलब्धिसहकारित्वेनेन्द्रियस्य विषयस्य वा स्वल्पामप्यनुग्रहमात्रां कुर्वन्ति ।

तथा ग्राह्यत्वमप्रतिपद्यमानान्येव सर्वेन्द्रियाणि ग्राह्यस्य विषयस्य ग्रहणनिमित्तत्वाय कल्पन्ते । तेजस्तु तमोरूपविरोधिना रूपभेदेन युक्तमवधार्यमाणस्वरूपमनुग्राहकत्वेनोपलब्धौ कारणभावं प्रतिपद्यते ।

शब्दोऽपि भावान्तरविरोधिना शब्दान्तरविरोधिना च स्वरूपेणावध्रियमाणभेदः परिगृहीतविशेषशब्दस्वरूपः प्रत्याय्यमर्थं प्रकाशयति । ते चास्य प्रतिपाद्यप्रतिपादकशक्ती नित्यमात्मभूते पृथक्त्वेनेव प्रत्यवभासेते ॥ ५५ ॥

---

यद्यपि शब्दो ग्राह्यग्राहकभावेनोभयथा स्थितः, तथापि तेजोवदेकत्र द्वयं न विरुध्यत इति वक्तुं प्रक्रमते—**ग्राह्यत्वं ग्राहकत्वञ्चेति ।**

अयमर्थः—यथा तेज इन्द्रियसहकारितया घटादिग्राहकमिति तत्र ग्राहकत्वशक्तिः । किञ्च, तदानीमिन्द्रियेण तेजोऽन्तरानपेक्षं तत्स्वरूपमपि गृह्यत इति तत्र ग्राह्यत्वशक्तिरपीति द्वे शक्ती, न तेजसि घटादिप्रकाशकत्वरूपं स्वप्रकाशकत्वरूपं वा ग्राहकत्वम् । स्वेनैव स्वस्य प्रकाश्यत्वरूपं तु ग्राह्यत्वमत्राभिप्रेतम् , घटादौ तमोरूपावरणभङ्गरूपस्य प्रकाशस्य तेजसा कृतस्य सम्भवेऽपि तेजसि तमोरूपावरणासम्भवेनासम्भवात् । अत एव न स्वप्रकाश्यत्वरूपं ग्राह्यत्वमपि तेजसि । तेजसि स्वप्रकाश्यत्वव्यवहारस्तु सहजमावरणाभावं स्वकृतमिवाभिमत्य यथाकथञ्चिदुपपाद्यः ।

न चात्रैकस्मिन् प्रकाश्यप्रकाशकभावस्वीकारे कर्मकर्तृभावविरोधः, लोकसिद्धत्वात् । किञ्चैवं दार्ष्टान्तिके शब्दे प्रकाश्यत्वप्रकाशकत्वरूपयोर्ग्राह्यत्वग्राहकत्वयोरभावेन वैषम्यमपि । तथैव सर्वशब्दानामप्येते स्वग्राह्यत्वरूपा स्वार्थग्राहकत्वरूपा च शक्तिः शब्दानामात्मभूतत्वेन तदभिन्नाभिन्नस्येति न्यायेनाभिन्ने अपि पृथगिव स्थिते भिन्ने इव प्रत्यवभासेते इति ।

अयं भावः—यतो घटादयो ग्राह्यत्वेनैव व्यवस्थिताः, अतस्ते स्वग्रहणकाले स्वोपलब्धाविन्द्रियस्य सहकारितया न काञ्चिदपि स्वल्पामप्यनुग्रहमात्राम् = मात्राशब्दोऽत्र लेशपरः, तस्य कुर्वन्ति, यथाऽञ्जनं चक्षुषः । न वा स्वस्मिन्ननुग्रहमात्रां कुर्वन्ति, यथोदकसेकेन पृथिव्याः संस्काररूपोऽनुग्रहः सौरभतद्गन्धप्रतिपत्तिफलकः । तत्र स्वात्मनि वृत्तिविरोधाद् विषयानुग्रहो न, नापीन्द्रिये विषयकृतोऽनुग्रहः, विषयकाले तदभावकाले चेन्द्रिये विषयकृतविशेषादर्शनात् ।

एतेन प्रत्यक्षं प्रति विषयः कारणमिति कार्यकारणभावं विषयासत्त्वे प्रत्यक्षाभावेन प्रकल्प्य विषयस्य स्वग्रहे कारणत्वमिन्द्रियसहकारितयाऽभ्युपेतं प्रत्युक्तम् , इन्द्रिये विषयकृतविशेषादर्शनात् ।

न चैवं विषयासत्त्वेऽपि प्रत्यक्षापत्तिः, विषयेन्द्रियसन्निकर्षस्यापि हेतुत्वाभ्युपगमात् । दृश्यते चेन्द्रिये विषयसन्निकर्षासन्निकर्षकाले विशेषस्तत्कृतः ।

न च विषयस्यापि ग्राह्यस्य ग्रहणक्रियाकर्मणः कारकत्वेन ग्राहकत्वमपि सम्भवतीति

**विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।**
**न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः ।।५६।।**

---

यतश्चैतदेवं तस्मात्—

यदि ग्राह्यत्वेन शेषिभावमप्रतिपन्नाः शब्दाः शेषत्वमर्थेषु प्रतिपद्येरन् , ते सत्तासम्बन्धमात्रेणोपलब्धा अनुपलब्धाश्च विषयत्वमनपेक्षमाणाः स्वं स्वमर्थं प्रत्याययेयुः, न तु प्रत्याययन्ति । तस्मादङ्गभूत एषामर्थेषु गुणभावापत्तौ प्राधान्यमात्रारूपेण संस्पर्श इति ।। ५६ ।।

---

वाच्यम् , ग्रहणकर्मणोऽपि विषयस्य ग्राह्यतयैव कर्मकारकत्वम् , न तु ग्राहकत्वेन, लोकप्रतीत्यभावात् । न हि लोकः क्रियायाः कर्मकृतमुत्पत्तिरूपमुपकारं प्रतिपद्यत इति ।

तथा च सर्वत्रैव कर्मणः क्रियाफलत्वेन प्रयोजकत्वरूपं कारकत्वम् , न तु क्रियाजनकत्वरूपमसम्भवात् । नापि सत्कार्यवादं बौद्धार्थवादम् = बाह्योऽर्थो वासनारूपेण बुद्धौ स्थित इति सिद्धान्तं वाऽऽदाय जनकत्वसम्भवः, अन्वयव्यतिरेकाग्रहणादिति । तदेवं घटादिषु विषयेषु ग्राह्यत्वशक्तिरेव, न ग्राहकत्वशक्तिरिति सिद्धम् ।

तथा ग्राहकत्वेनैव व्यवस्थितानि सर्वेन्द्रियाणि ग्राह्यत्वमप्रतिपद्यमानान्येव = अगृह्यमाणान्येव ग्राह्यस्य विषयस्य ग्रहणनिमित्तत्वाय कल्पन्त इति ग्राहकाण्येव । तेजस्तु ग्राह्यत्वेन ग्राहकत्वेन चोभयथा व्यवस्थितमिति तमसो नैल्यरूपविरोधिना भास्वरशुक्लरूपेण रूपभेदेन युक्तं तमसो द्रव्यान्तरेभ्यश्च व्यावृत्तत्वेनावधार्यमाणस्वरूपं ग्राह्यमपि चक्षुषोऽनुग्राहकत्वेन रूपाद्युपलब्धौ कारणभावं प्रतिपद्यत इति ग्राहकमपीति ग्राह्यत्वग्राहकत्वरूपे द्वे शक्ती तेजसः । तथा शब्दोऽपि भावान्तरविरोधिना शब्दान्तरविरोधिना च आनुपूर्वीविशेषरूपेण स्वरूपभेदेन भावान्तरेभ्यः शब्दान्तरेभ्यश्च व्यावृत्तत्वेनावध्रियमाणस्वरूपभेदः = गृह्यमाणस्वरूपभेदो वस्तुतः सामान्यरूपोऽपि कत्वगत्वादिवर्णानुपूर्व्यादिरूपध्वनिधर्मपरिग्रहेण परिगृहीतविशेषशब्दस्वरूपो ग्राह्योऽपि प्रत्याय्यमर्थं प्रकाशयतीति ग्राहकोऽपि भवतीति रीत्या शब्दस्यापि द्वे शक्ती ग्राह्यत्वग्राहकत्वरूपे तेजोवत् ।

तदेतदुक्तं हरिणा—'शब्दोऽपि भावान्तरविरोधिना शब्दान्तरविरोधिना च स्वरूपेणावध्रियमाणभेदः परिगृहीतविशेषशब्दस्वरूपः प्रत्याय्यमर्थं प्रकाशयति' इति ।

अत्र यद्यपि 'स्वरूपेणावध्रियमाणभेदः' इत्यन्तेन यदुक्तं तदेव 'परिगृहीतविशेषशब्दस्वरूपः' इति पुनरुक्तिः, तथापि पूर्वत्र यत् शब्दस्वरूपं गृह्यमाणं भेदावधारणाङ्गमित्युक्तं तदेव 'परिगृहीतविशेषशब्दस्वरूपः' इत्यनेनानूद्यार्थप्रत्यायनाङ्गत्वेन विधीयत इति पुनरुक्तेरत्रादोषत्वमनुवादत्वेनेत्यवधेयम् । ते चास्य प्रतिपाद्यप्रतिपादकशक्ती नित्यमात्मभूते अपि परस्परं शब्दाच्च पृथक्त्वेनेव प्रत्यवभासेते इति ।। ५५ ।।

यस्मात् शब्दस्य ग्राह्यत्वग्राहकत्वरूपे द्वे शक्ती, तस्मादाह—**विषयत्वमनापन्नैरिति** ।

अयमर्थः—ज्ञानस्य विषयत्वमनापन्नैः स्वयमगृह्यमाणैः शब्दैः स्वार्थो न प्रकाश्यते, यतस्ते शब्दा अगृहीताः प्रतिपत्त्रा सत्तयैव सन्निधानमात्रेणैव लोकेऽर्थस्य प्रकाशका न दृष्टा इति प्राग् गृहीता एव स्वार्थस्य प्रकाशका इति सिद्धमिति ।

**अतोऽनिर्ज्ञातरूपत्वात् किमाहेत्यभिधीयते ।**
**नेन्द्रियाणां प्रकाश्येऽर्थे स्वरूपं गृह्यते तथा ।।५७।।**

---

शब्दस्वरूपसम्प्रत्ययाधीनमेवार्थप्रत्यायनं मन्यमाना लौकिकाः प्रयुक्तेष्वपि शब्देष्वप्रतीतस्वरूपेषु शब्दस्वरूपविशेषप्रतिपत्त्यर्थं किं भवानाहेत्याहुः। इन्द्रियाणि तु शेषिभावमात्रासंस्पर्शेनासंसृष्टान्यपरिच्छिन्नस्वलक्षणानि विषयोपलब्धौ शेषभावमुपगच्छन्ति ॥ ५७ ॥

---

एतच्च शब्दस्वरूपग्रहणं न श्रावणप्रत्यक्षरूपम् , क्रमेणोपजातानां वर्णानामेव श्रावणप्रत्यक्षगोचरत्वात् । सर्ववर्णानुसंहाररूपमर्थशेषिभावापन्नशब्दस्वरूपग्रहणं तु वर्णरूपनादाभिव्यक्तेन शब्देनैव, न तु श्रोत्रेण, सर्ववर्णानां तदानीमभावात्, प्रत्यक्षस्य च वर्तमानवस्तुविषयकत्वात् ।

नैयायिकास्तु—पदप्रत्यक्षं चरमवर्णांशे लौकिकम्—अन्यसर्ववर्णांशे तु पूर्वानुभवजनितसंस्कारजस्मृतिसहकृतेन श्रोत्रेणालौकिकम् 'इयं रजतम्' इति भ्रमस्थल इव ज्ञानलक्षणप्रत्यासत्तिजन्यमभ्युपगच्छन्ति, तत्त्वद्वैतिभिर्ज्ञानलक्षणप्रत्यासत्तेः प्रत्याख्यानात् प्रत्युक्तं वेदितव्यमिति ।

कारिकाशयस्तु—यदि ग्राह्यत्वेनार्थस्य शेषिभावमप्रतिपाद्यमानाः शब्दा ग्राहकत्वेनार्थेषु शेषत्वमेव प्रतिपद्येरन् , तदा ते ज्ञानस्य विषयत्वमनपेक्षमाणा अनुपलब्धा अपि सत्तासम्बन्धमात्रेण स्वं स्वमर्थं प्रत्याययेयुः, न तु प्रत्याययन्ति । तस्मात् शब्दानामर्थेषु गुणभावेन प्रत्यये जनिष्यमाणे तेषामर्थनिरूपितप्राधान्यमात्ररूपेण ज्ञानस्य विषयत्वलक्षणः संस्पर्शो निमित्तत्त्वेनाङ्गभूत इति शब्दस्य ग्राह्यत्वशक्तिरपि सिद्ध्यतीति ॥ ५६ ॥

गृहीतानामेव शब्दानामर्थप्रत्यायनेऽङ्गभाव इत्यत्र हेत्वन्तरमाह—**अतोऽनिर्ज्ञातरूपत्वादिति ।**

अयमर्थः—यतश्च गृहीतानामेव शब्दानामङ्गभावोऽर्थप्रत्यायने, अतः = अस्माद्धेतोः, कदाचित् शब्देऽनिर्ज्ञातस्वरूपे सति शब्दस्वरूपनिर्दिधारयिषया किमाह भवानित्यभिधीयते पृच्छ्यते लोकैः । यथा शब्दाः स्वरूपेण गृहीता एवार्थस्य प्रकाशकाः, तथाऽर्थे प्रकाश्ये ग्राह्ये सतीन्द्रियाणां स्वरूपं प्राङ् न गृह्यते, यत इन्द्रियाणि स्वरूपेणागृहीतान्येव सत्तामात्रेणार्थग्राहकाणि देशकालाव्यभिचारेण, लोके दर्शनादिति ।

अयं भावः—शब्दस्वरूपसम्प्रत्ययाधीनमेव शब्देनार्थप्रत्यायनं मन्यमाना लौकिकाः प्रयुक्तेष्वपि शब्देषु सामान्यतोऽव्यक्तरूपेण गृहीतस्वरूपेषु सत्सु शब्दस्वरूपस्य विशेषेण प्रतिपत्त्यर्थं किं भवान् आहेति पृच्छन्ति शब्दस्वरूपविशेषग्रहणं प्रति यतमानाः । ये तु भावाः स्वरूपेणागृहीता एवार्थप्रत्यायनेऽङ्गतां यान्ति, न तेषां स्वरूपग्रहणं प्रति यत्नः क्रियते, यथाऽर्थे प्रकाश्ये सति प्रागिन्द्रियाणां स्वरूपं न गृह्यते । यत इन्द्रियाण्यर्थं प्रति शब्दवत् शेषिभावरूपसम्बन्धेन न संसृष्टानि, अतोऽर्थग्रहणात् प्राक् तद्वत्परिच्छिन्नस्वरूपाणि नार्थग्रहणे शेषभावमुपगच्छन्ति; किन्तु सत्तामात्रेणैवेत्यर्थे प्रकाशयितव्ये इन्द्रियाणां स्वरूपग्रहणं प्रति यत्नो न क्रियते, क्रियते तु शब्दस्वरूपविशेषग्रहणं प्रति यत्नः । ज्ञायते गृहीता एव शब्दा अर्थस्य प्रकाशकाः, नेन्द्रियवदगृहीता इति ॥ ५७ ॥

**भेदेनावगृहीतौ द्वौ शब्दधर्मावपोद्धृतौ ।**
**भेदकार्येषु हेतुत्वमविरोधेन गच्छतः ।।५८।।**

यथैव व्यपदेशिवद्भावविषयेष्वर्थात्मसु निमित्तभेदाद् बुद्धिप्रकल्पनया व्यवस्थापितभेदेषु लोके शास्त्रे च मुख्यभेदविषयाणि सर्वाणि कार्याणि क्रियन्ते, तथा शब्देष्वपि बुद्ध्या परिगृहीतग्राह्यग्राहकशक्त्यपोद्धारेषु मुख्यार्थविषयाणीव शास्त्रे संज्ञासंज्ञिसम्बन्धादीनि भेदकार्याणि विधीयन्ते ।। ५८ ।।

'तथैव सर्वशब्दानामेते पृथगिव स्थिते' (वा०प० १/५५) इत्यत्र शब्दस्य ग्राह्यत्वग्राहकत्वशक्त्योर्भेद उक्तः, सम्प्रति तयोर्भेदकथनस्य फलमाह— **भेदेनावगृहीताविति ।**

अयमर्थः—एकस्मिन् अग्न्यादिशब्दरूपे धर्मिण्यविभागेन वर्तमानौ द्वौ शब्दधर्मौ ग्राह्यत्वग्राहकत्वशक्तिरूपौ शब्दादपोद्धृतौ बुद्ध्या शब्दस्वरूपात् पृथक्कृतौ सन्तौ भेदेनावगृहीतौ भिन्नतया विज्ञातौ सन्तौ एकस्यैवाग्न्यादिशब्दस्य सम्बन्धिषु भेदकार्येषु भेदनिमित्तककार्येषु संज्ञासंज्ञिसम्बन्धादिव्यवहारेष्वविरोधेन कथमेकस्यैवाग्न्यादिशब्दस्य संज्ञात्वेन ग्राहकत्वम्, संज्ञित्वेन च तस्यैव ग्राह्यत्वमिति विरोधमुत्सृज्य हेतुत्वं गच्छत इति ।

अयं भावः—'अग्नेर्ढक्' इति सूत्रघटकोऽग्निशब्द उच्चारितः संज्ञा, प्रयोगस्थश्च स एव संज्ञी इति हि स्थितिः । तत्र चैकस्यैवाग्निशब्दस्य ग्राह्यत्वं ग्राहकत्वं चेति बुद्धिप्रकल्पितशक्तिभेदप्रयुक्तशब्दस्वरूपभेदमाश्रित्यावकल्पत इति ।

कारिकाया निगूढोऽभिप्रायस्तु—लोके एक एवार्थो व्यपदेशिवद्भावस्य विषयः । यथा सुवर्णस्याङ्गुलीयकमिति शब्दस्य योऽर्थः, स व्यपदेशिवद्भावविषयः । वस्तुत एकस्यैव सुवर्णस्य पदद्वयेन निमित्तभेदाद् भेदप्रतीतेः । सुवर्णशब्दस्य हि जातिः प्रवृत्तिनिमित्तम्, अङ्गुलीयकशब्दस्य तु सन्निवेशविशेषो निमित्तमिति । तथा शास्त्रेऽपि एकपदा ऋक्, एकर्चं सूक्तमिति, आभ्यामित्यत्राकारोऽदन्तमङ्गमिति, विशेष्यविशेषणयोरर्थयोरैक्यमेव । निमित्तभेदात् तु प्रागुक्तो भेदव्यपदेशः । पदशब्दस्य प्रवृत्तिनिमित्तं सुप्तिङन्तयोरन्यतरत्वम्, ऋक्पदस्य तु छन्दोविशेषः, एवं सूक्तशब्दस्य प्रवृत्तिनिमित्तम् ऋक्समुदायविशेषत्वम् । एवञ्च यथा लोके एकस्याप्यर्थस्य प्रवृत्तिनिमित्तभेदाद् बुद्धिभेदः, बुद्धिभेदेन च प्रकल्पितं विषयभेदमङ्गीकृत्य सुवर्णस्याङ्गुलीयकमिति भेदनिबन्धना षष्ठी, एवं शास्त्रेऽप्येतस्या ऋच इदं पदमिति, एतस्य सूक्तस्येयमृग् इति रीत्यैकस्मिन्नपि मुख्यभेदविषयाणि सर्वाणि कार्याणि षष्ठीप्रयोगषष्ठ्यर्थबहुव्रीह्यादीनि क्रियन्ते । तथा शब्देष्वपि बुद्ध्या ग्राह्यग्राहकत्वशक्त्यपोद्धारे कृते शक्तिभेदाच्च तदाश्रयशब्दस्वरूपभेदे बुद्ध्या प्रकल्पिते सति यथा लोके मुख्यार्थविषये संज्ञासंज्ञिसम्बन्धो व्यपदिश्यते, गोपिण्डस्य गौरिति संज्ञेति, तथैव शास्त्रे शब्दस्य 'स्वं रूपं संज्ञि' इति संज्ञासंज्ञिसम्बन्धव्यपदेशरूपमेकस्मिन्नपि भेदकार्यम् "स्वं रूपं शब्दस्याशब्दसंज्ञा" ( अष्टा० १/१/६८ ) इति शास्त्रेण विधीयते । तत्प्रागुक्तञ्च "अग्नेर्ढक्" ( अष्टा० ४/२/३३ ) इत्यादौ ढगादिकार्यं स्वरूपस्यैवेति ।

**वृद्धयादयो यथा शब्दाः स्वरूपोपनिबन्धनाः ।**
**आदैच्प्रत्यायितैः शब्दैः सम्बन्धं यान्ति संज्ञिभिः ।।५९।।**

---

इह हि भिन्नरूपसंज्ञाप्रतिपाद्येषु "इको यणचि" ( पा० ६/१/७७ ) इत्यादिषु नोच्चार्यमाण इक्शब्दः स्थानी, नापि यण्शब्द आदेशः, तत्प्रत्यायितानां तु रूपान्तरयुक्तानां संज्ञानां स्थान्यादेशभावः शास्त्रेऽन्वाख्यायते । तुल्यरूपसंज्ञेष्वपि संज्ञिषु तादृशी सम्बन्धप्रतिपत्तिरिति सिद्धमेतत् ।

अत्र वृद्धयादयः शब्दाः स्वरूपाधिष्ठानाः स्वेनार्थेनार्थवन्तः स्वरूपेण शब्दान्तरस्वरूपाण्युपजिघृक्षन्तः स्वरानुनासिक्यभिन्नैराकारादिभिरादैच्छब्दादिभिः प्रत्यायितैः सम्बन्धं येन प्रकारेण प्रतिपद्यन्ते, तेनैव प्रकारेण दुरवधारत्वेऽपि भेदस्य ।।५९।।

---

वस्तुतस्तु स्वं रूपमिति शास्त्रेण लोकसिद्धं शब्दस्वरूपे स्वग्राह्यत्वमनूद्यत इति यत्र क्वचित् "जनपदे लुप्" (अष्टा० ४/२/८१ ), "तस्यापत्यम्" ( ४/१/९२ ) इत्यादौ शब्दस्यार्थं प्रति शेषत्वेन बोधने तात्पर्यम्, तत्रार्थस्यैव शब्दं प्रति शेषित्वेन प्रतीतिरितीदं सूत्रं भाष्ये प्रत्याख्यातम् ।

इदं त्ववधेयम्—इदं सूत्रं विधानं वानुवादो वा भवतु, संज्ञासंज्ञिसम्बन्धादिप्रयुक्तानि भेदकार्याणि तु "अग्नेर्ढक्" इत्यादिविहितानि स्वग्राह्यस्य शब्दस्वरूपस्यैव भवन्तीत्यत्र न काचिद् विप्रतिपत्तिः । प्रायेण च शास्त्रे शब्दस्वरूपस्यैवार्थशेषितया ग्राह्यत्वम्, कार्यसम्बन्धश्चेति तु तथ्यमेवेति ।।५८।।

बुद्ध्या अपोद्धृतौ शब्दस्य ग्राह्यत्वग्राहकत्वरूपौ धर्मौ भेदकार्येषु संज्ञासंज्ञिसम्बन्धव्यपदेशादिष्वविरोधेन हेतुत्वं गच्छत इति प्रागुक्तमर्थम् अग्निशब्दस्तथैवायमित्युदाहरणेन विशदीकरिष्यन् शास्त्रे एकस्मिन् शब्दस्वरूपे संज्ञासंज्ञिसम्बन्धस्य व्याकरणशास्त्रीयसंज्ञारूपशब्दातिरिक्तविषयकत्वं दर्शयितुमग्निशब्दस्तथैवायमिति वक्ष्यमाणार्थस्य दृष्टान्तरूपेणोपक्रमते—**वृद्ध्यादयो यथा शब्दा इति ।**

अयमर्थः—यथा "वृद्धिरादैच्" (अष्टा० १/१/१ ) इत्यादिसूत्रघटका वृद्ध्यादिशब्दाः स्वरूपोपनिबन्धनाः स्वरूपप्रवृत्तिनिमित्तकाः स्वरूपं प्रत्याययन्त एव आदैच्पदप्रत्यायितैः स्वसंज्ञिभिराकारादिभिः सम्बन्धं यान्ति, संज्ञासंज्ञिसम्बन्धमनुभवन्ति । अशब्दसंज्ञेति प्रतिषेधस्तु संज्ञाविधिसूत्रातिरिक्तविषयकः, तत्र तदा वृद्ध्यादिशब्दानां संज्ञात्वस्यापरिज्ञानादिति अतो "मृजेर्वृद्धिः" ( अष्टा० ७/२/११४ ) इत्यादौ विधिप्रदेश एव स प्रतिषेध इति ।

अयं भावः—इह हि शास्त्रे "इको यणचि" ( अष्टा० ६/१/७७ ) इत्यादिषु इक्, यण्, अच् इति संज्ञारूपस्य पदत्रयस्य स्वस्माद् भिन्नरूपाः संज्ञा इकारादयः, यकारादयोऽकारादयश्च प्रतिपाद्याः, एता अपि च स्वसवर्णानां ग्राहकत्वेन संज्ञाः । अत्र सूत्रे उच्चार्यमाणस्तु इक्शब्दो न स्थानी, नापि यण्शब्द आदेशः, प्रयोगानुपलब्धेः, "आदिरन्त्येन सहेता" ( अष्टा० १/१/७१ ) इति शास्त्रेण भिन्नरूपाणामेव संज्ञासंज्ञिभावस्य बोधनाच्च । इग्यणादिपदप्रत्यायितानां तु रूपान्तरयुक्तानामिकारादीनां च संज्ञानां स्थान्यादेशभावः शास्त्रेऽन्वाख्यायते, न त्विगादयो यणादयश्च संज्ञाः कार्यभाजः, स्वसंज्ञ्युप-

**अग्निशब्दस्तथैवायमग्निशब्दनिबन्धनः ।**
**अग्निश्रुत्यैति सम्बन्धमग्निशब्दाभिधेयया ।।६०।।**

'स्वं रूपं शब्दस्य' इति संज्ञासंज्ञिनौ भेदेनोपादीयेते । तत्र द्वौ शब्दौ श्रूयमाणौ प्रतिपादकौ, प्रतीयमानावपि द्वावेव सम्बन्धभाजौ कार्यिणौ ।

तस्मादग्निशब्दो येनार्थभूतेनाभिन्नरूपेणाग्निशब्देनार्थवान् तमग्निशब्दान्तराभिधेयस्य तुल्यश्रुतेरग्निशब्दस्य संज्ञाभावं प्रतिपादयतीति ।।६०।।

---

स्थापकतया चारितार्थ्यात् । तथा च तादृशी संज्ञासंज्ञिसम्बन्धप्रतिपत्तिस्तुल्यरूपसंज्ञेष्वपि संज्ञिष्वग्न्यादिशब्देषु "अग्नेर्ढक्" इत्यादौ "स्वं रूपम्" इति शास्त्रबलादिति सिद्धमेतत् प्रागुक्तरीत्या शक्तिभेदव्यपाश्रयेण ।

दृष्टान्तसमन्वयस्तु "वृद्धिरादैच्" इत्यादौ संज्ञाविधौ वृद्ध्यादयः शब्दाः स्वरूपाधिष्ठानाः = स्वरूपप्रवृत्तिनिमित्तकाः स्वरूपेणार्थवन्तोऽपि स्वस्वरूपे संज्ञित्वादनुप्रविष्टान्याकारादिस्वरूपाणि सोऽयमिति तादात्म्याध्यासमूलकाभेदव्यपदेशमूलकसंज्ञासंज्ञिसम्बन्धज्ञानद्वारा उपजिघृक्षन्त आदैच्शब्दप्रत्यायितैः स्वरानुनासिक्यभिन्नैराकारादिभिः संज्ञासंज्ञिसम्बन्धं येन प्रकारेण प्रतिपद्यन्ते = अनुभवन्ति, तेनैव प्रकारेण ग्राह्यग्राहकशक्तिभेदप्रयुक्तस्य स्वरूपभेदस्य दुरवधारत्वेऽप्यग्निशब्दः स्वरूपेण सह संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत इति ।।५९।।

दृष्टान्ते उक्तमर्थं दार्ष्टान्तिके योजयति—**अग्निशब्दस्तथैवायमिति ।**

अयमर्थः—तथैव वृद्ध्यादिशब्दवदेव अयमग्निशब्दः "अग्नेर्ढक्" इति उच्चार्यमाणोऽग्निशब्दः अग्निशब्दनिबन्धनः स्वरूपप्रवृत्तिनिमित्तकः, अग्निशब्दाभिधेयया सूत्रघटकाग्निशब्दवाच्यया अग्निश्रुत्या प्रयोगघटकाग्निशब्देन सह सम्बन्धं संज्ञासंज्ञिसम्बन्धम् एति गच्छति, अनुभवतीति यावत् ।

अयं भावः—यथा शब्दाः स्वस्माद् विरूपाणामर्थानां संज्ञाः, तथा सर्वेषां शब्दानां सर्वशब्दसंज्ञात्वे प्राप्ते शब्दानां यदात्मीयं रूपम्, तदेव संज्ञा स्वस्य रूपस्येति "स्वं रूपं शब्दस्याशब्दसंज्ञा" ( १/१/६८ ) इति संज्ञाशास्त्रेण नियम्यते । इदञ्च संग्राहकं वाक्यम् ।

ततश्च प्रतिलक्ष्यं "लक्षणोपप्लवः" इति न्यायेनेदं संज्ञासंज्ञिवाक्यं कल्प्यते । अग्निशब्दोऽग्निशब्दस्य, उदश्विच्छन्दः उदश्विच्छब्दस्य संज्ञेत्यादि । अस्मिंश्च वाक्ये द्वौ अग्निशब्दौ संज्ञासंज्ञिनौ भेदेनोपादीयेते । तत्र द्वौ शब्दौ श्रूयमाणौ प्रतिपादकौ । प्रथमान्तोऽग्निशब्दः संज्ञारूपस्याग्निशब्दस्याग्नेर्ढगिति सूत्रघटकस्य प्रतिपादकः, षष्ठ्यन्तोऽग्निशब्दः संज्ञिनोऽग्निशब्दरूपस्य प्रयोगघटकस्येति । द्वावेव चात्र प्रतिपाद्यावग्निशब्दौ यावेताभ्यामत्रोपस्थाप्येते । यौ संज्ञासंज्ञिसम्बन्धभाजौ शास्त्रे "अग्नेर्ढक्" इत्यादौ । यौ चात्र विधेयं संज्ञासंज्ञिसम्बन्धरूपं कार्यं प्राप्नुतः ।

तस्माद् योऽग्निशब्दः "अग्नेर्ढक्" इति सूत्रघटकः, येनार्थभूतेनाभिन्नेन प्रयोगघटकेनाग्निशब्देनार्थवान्, तम् "अग्नेर्ढक्" इति सूत्रघटकमग्निशब्दं तदभिधेयस्य तुल्यानुपूर्वीकस्य प्रयोगघटकस्याग्निशब्दस्य संज्ञाभावं तन्निरूपितं संज्ञात्वं स्वं रूपमिति सूत्रं प्रतिपादयति गमयतीति यावत् ।।६०।।

**यो य उच्चार्यते शब्दो नियतं न स कार्यभाक् ।**
**अन्यप्रत्यायने शक्तिर्न तस्य प्रतिबध्यते ।।६१।।**
**उच्चरन् परतन्त्रत्वाद् गुणः कार्यैर्न युज्यते ।**
**तस्मात् तदर्थैः कार्याणां सम्बन्धः परिकल्प्यते ।।६२।।**

---

प्रतिज्ञातस्यार्थस्योत्तरस्मिन् श्लोके हेतुं वक्ष्यति । प्रत्यायको हि परार्थमुच्चारितो यदर्थमुच्चारितस्तं कार्येषु नियुङ्क्ते, तत्र कार्याण्यासजति । तस्यापि प्रत्याय्यस्य यदा प्रदर्शनार्थमन्तःकरणसन्निविष्टस्योच्चारणं क्रियते, तदा तुल्यरूपमन्यप्रतिपाद्यं शब्दान्तरं प्रति न तस्य प्रत्यायकत्वं प्रतिबध्यते । सर्वस्यैवायमुच्चार्यमाणस्यात्मधर्म इति ॥६१॥

यथैव 'गामानय, दध्यशान' इत्यर्थतन्त्रा श्रुतिः क्रियासु साधनत्वं न प्रतिलभते, तथा शब्दान्तरतन्त्रापि, पारार्थ्यस्याविशिष्टत्वात् । तस्मात् सर्वस्य प्रत्याय्यस्यार्थस्य चक्षुरादिग्राह्यस्य च क्रियासाधनत्वं विज्ञायते ॥६२॥

---

"अग्नेर्ढक्" ( ४/२/३३ ) इत्यादौ उच्चार्यमाणोऽग्निशब्दः प्रयोगघटकस्याग्निशब्दस्य संज्ञेति तत्प्रतिपाद्यः प्रयोगघटकोऽग्निशब्द एव ढगादिकार्यभाक्, न तु सूत्रे उच्चार्यमाण इति यदुक्तं तदेव द्रढयन्नाह—**यो य उच्चार्यत इति ।**

अयमर्थः—यो यः शब्दो यत्र क्वापि उच्चार्यते, स उच्चार्यमाणः सर्वोऽपि नियतं नियमेन कार्यभाग् न भवति । अत्र नियतमिति क्रियाविशेषणं नपुंसकं कर्म । ततश्चेयं व्याप्तिरायाता—यत्र यत्र शब्दे उच्चार्यमाणत्वम्, तत्र तत्र कार्यभाक्त्वाभाव इति । किन्तु तस्याप्युच्चार्यमाणशब्दप्रतिपाद्यस्य प्रतिपत्तृबुद्धौ प्रविलयं गतस्य यदा प्रदर्शनार्थमुच्चारणं क्रियते, तस्यापि स्वान्यस्वसमानानुपूर्वीक-शब्दान्तरप्रतिपादने या शक्तिः, सा न केनापि कथमपि प्रतिबद्ध्यते । अत्र विवक्षावशात् तस्येतिपदानन्तर-मपिशब्दस्याध्याहारस्तत्पदस्य बुद्धिस्थपरामर्शकत्वं चेति ।

अत्र कारिकार्द्धेन पूर्वेण प्रतिज्ञातो योऽर्थस्तस्य हेतुमुत्तरस्मिन् श्लोके वक्ष्यति—**'उच्चरन् परतन्त्रत्वात्'** इत्यादिना ।

प्रकृतकारिकाया अयं निगूढोऽभिप्रायः—"अग्नेर्ढक्" इत्यादौ प्रत्यायको ह्यग्निशब्दः परस्य प्रयोगघटकस्याग्निशब्दस्य प्रतिपत्तये उच्चारित इति यदर्थमुच्चारितस्तमग्निशब्दं कार्येषु नियुङ्क्ते, तत्र ढगादीनि कार्याण्यासजति । तस्यापि प्रत्याय्यस्य शब्दस्यार्थं प्रत्याय्य प्रविलीनस्य प्रतिपत्तृबुद्धिसन्निविष्टस्य यदा प्रदर्शनार्थमुच्चारणं क्रियते, तदा तुल्यरूपमन्यत्प्रतिपाद्यं शब्दान्तरं प्रति न तस्य प्रत्यायकत्वशक्तिः प्रतिबुद्ध्यते । तदेवं सर्वस्यैव शब्दस्योच्चार्यमाणस्यैष शब्दान्तरं प्रति न तस्य प्रत्यायकत्वशक्तिः प्रतिबद्ध्यते । तदेवं सर्वस्यैव शब्दस्योच्चार्यमाणस्यैष स्वभावो यत् स्वान्यस्वसमानानुपूर्वीकशब्दान्तर-प्रतिपादकत्वमिति ।

इदं तु न विस्मर्तव्यम्— यो हि प्रत्याय्यः शब्दः, सोऽर्थं प्रतिपाद्य प्रलीयमानः कर्णकुहरेण

**सामान्यमाश्रितं यद्यदुपमानोपमेययोः ।**
**तस्य तस्योपमानेषु धर्मोऽन्यो व्यतिरिच्यते ।।६३।।**

इहोपमानमुपमेयं तयोश्च साधारणो धर्म इति त्रितयमेतत् सिद्धम् । तत्र 'ब्राह्मणवदधीते क्षत्रियः' इत्युपमेये श्रूयमाणं सामान्यमुपमानेऽपि प्रतीयते । तदा तु ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनम्' इत्यध्येतारौ उपमानोपमेययोः सम्बन्धित्वेनोपादीयेते, तदाध्ययनयोराश्रय-विशेषभिन्नयोः सौष्ठवादयो धर्माः साधारणत्वेन प्रतीयन्ते । सौष्ठवादीनामप्यध्ययनसन्बन्धिनां परिनिष्पत्त्यादयो धर्मा इति नास्ति व्यतिरेकस्यावच्छेदः ।।६३।।

प्रतिपत्तृबुद्धौ निविशत इति । प्रत्यायकस्तु शब्दो जातः प्रत्याय्यं शब्दान्तरमभिव्यज्य प्रलीयमानः प्रयोक्तुस्ताल्वादिस्थानरूपे करणे यदभिघाताच्छब्दनिष्पत्तिस्तत्र प्रलीयत इति ।।६१।।

"यो य उच्चार्यते शब्दो नियतं न स कार्यभाक्" इति पूर्वप्रतिज्ञातेऽर्थे हेतुमाह—**उच्चरन् परतन्त्रत्वादिति ।**

अयमर्थः—उच्चरन् "अग्नेर्ढक्" इत्यादिसूत्रेषूच्चार्यमाणोऽग्निशब्दो यतः प्रयोगघटकाग्निशब्द-प्रत्यायने गुणोऽप्राधान्यमुपगतः, अतः परतन्त्रत्वात् कार्यैर्विधेयैर्ढगादिभिर्न युज्यते, तस्मादुच्चारित-स्याग्निशब्दैः सह कार्याणां ढगादीनां सम्बन्धः परिकल्प्यत इति ।

अयं भावः—यथैव 'गामानय, दध्यशान' इत्यादौ लौकिके व्यवहारेऽर्थपरतन्त्रो गोदध्यादिशब्दः क्रियास्वानयनाशनादिषु कारकत्वं न प्रतिलभते, यत एते गवादयः शब्दा अर्थप्रतिपादनाय प्रयुक्तास्तेऽर्थं प्रतिपाद्य चरितार्थत्वान्निवृत्ता अर्थे गुणतामुपगताः सन्निहिता अप्यानयत्यादिक्रियया न सम्बद्ध्यन्ते, यतोऽर्थ एव तत्र क्रियाजन्यफलाश्रयत्वात् कर्म, न शब्दः, तदभावात् । तत्र चेयं द्वितीयेति । तथा "अग्नेर्ढक्" इत्यादौ शास्त्रीये व्यवहारे प्रयोगघटकाग्निशब्दप्रत्यायने परतन्त्रः सूत्रे उच्चार्यमाणोऽग्निशब्दो ढगादिकार्यैः सम्बन्धं न लभते, पारार्थ्यस्य लौकिकशास्त्रीयव्यवहारयोरुच्चार्यमाणे शब्देऽविशेषात् । तस्मात् सर्वस्य प्रत्याय्यस्य चक्षुरादिग्राह्यस्यार्थरूपस्य श्रोत्रग्राह्यस्य शब्दरूपस्य च क्रियासाधनत्वं विज्ञायते, न प्रत्यायकस्य शब्दस्येति ।।६२।।

वस्तुतोऽभिधानाभिधेययोरग्निशब्दयोरेकत्वेऽपि स्वाभिव्यञ्जकभिन्नध्वनिधर्मोपग्रहेण भिन्नतया प्रतीतिरिति सोऽयमिति व्यपदेशाभावेनाभिधानाभिधेयभावानुपपत्तिरित्यानुपूर्वीरूपं सामान्यधर्ममेकमाश्रित्य तयोरभेदव्यपदेशेनाभिधानाभिधेयभावोपपत्तिः क्रियते; किन्तु ध्वनीनामानुपूर्वीरूपो धर्मोऽपि क्रमाख्य उच्चारणभेदेन भिद्यत एवेति न सोऽप्यभिधानाभिधेययोः सामान्यधर्म इत्यविद्यमानेऽप्यानुपूर्वीरूपस्य धर्मस्य वास्तवेऽभेदे यावन्न कल्प्यतेऽभेदः, तावन्न पर्यवस्यति सोऽयमित्यभेदव्यपदेशमूलकोऽभिधाना-भिधेयभावः । आनुपूर्व्याश्चाभेदकल्पना सजातीयवर्णघटितत्वेन वर्णगतजात्येकत्वमादाय तदाश्रयवर्णैक्योप-पादनेन सजातीयबुद्धिविषयत्वेन बुद्धिगतजात्येकत्वमादाय वेत्येतस्मिन् सर्वस्मिन् बुद्ध्यारोहाय दृष्टान्त-माह—**सामान्यमाश्रितमिति ।**

**गुणः प्रकर्षहेतुर्यः स्वातन्त्र्येणोपदिश्यते ।**
**तस्याश्रिताद् गुणादेव प्रकृष्टत्वं प्रतीयते ।।६४।।**

यावदिदं तदिति प्राधान्येनोपादीयते, तद् द्रव्यम् । न च द्रव्यस्य प्रकर्षापकर्षौ स्त इत्याश्रितैर्भेदहेतुभिः परतन्त्रैः संसर्गिभिर्निमित्तैः प्रकर्षे सव्यापारैः प्रचिकीर्षितोऽर्थः प्रकृष्यते ।

अयमर्थः—'ब्राह्मणवदधीते क्षत्रियः' इति ब्राह्मणक्षत्रिययोरुपमानोपमेययोरुपमितौ क्रियमाणायामेकमध्ययनरूपं सामान्यमाश्रितम्; किन्तु तदपि क्रियारूपं प्रतिकर्तृभिन्नमेवेति तस्य तस्योपमानगतस्य ब्राह्मणाध्ययनस्योपमेयगतस्य क्षत्रियाध्ययनस्य चोपमानेषूपमितिषु क्रियमाणास्वन्यो धर्मः सौष्ठवादिरूपोऽध्ययनयोः सामान्यधर्मस्तयोरुपमानोपमेयभावप्रयोजकः; किन्तु सोऽपि सौष्ठवादिरूपोऽध्ययनयोर्धर्मः प्रत्याश्रयं व्यतिरिच्यते = भिद्यत इति सौष्ठवयोरप्युपमितौ क्रियमाणायां सामान्यधर्माः परिनिष्पत्त्यादय इति परम्परयाऽध्ययनयोरभेदकल्पनया ब्राह्मणक्षत्रिययोरुपमानोपमेय-योरध्ययनस्य सामान्यधर्मत्वकल्पना ।

परिनिष्पत्तिश्चात्र वर्णानां निष्पत्तौ किञ्चिद् विशेषवत् सौष्ठवमिति सौष्ठवगतस्य विशेषस्यैक्येन सौष्ठ-वयोरैक्यम् । तदैक्येन चाध्ययनयोरैक्यम्, तदैक्येन च ब्राह्मणक्षत्रिययोरुपमानोपमेयभावोपपत्तिरिति ।

अयं भावः—इह हि लोके उपमानमुपमेयम्, तयोश्च साधारणो धर्म इति त्रितयमेतत् सिद्धम् । तत्र 'ब्राह्मणवदधीते क्षत्रियः' इत्युपमेये क्षत्रिये श्रूयमाणमध्यनरूपं सामान्यमुपमाने ब्राह्मणेऽपि प्रतीयते । किन्तु यदा "ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनम्' इत्युपमानोपमेययोरध्ययनयोः सम्बन्धित्वेनाध्येतारौ ब्राह्मणक्षत्रियावुपादीयेते'' अध्ययनयोः परस्परस्माद् व्यावृत्तये, न तु उपमानोपमेयभावेन, तदाऽध्ययनयोराश्रयभेदेन भिन्नयोः सौष्ठावादयो धर्माः सामान्यधर्मरूपत्वेन प्रतीयन्ते । यदा तु 'ब्राह्मणाध्ययनसौष्ठवेन तुल्यं क्षत्रियाध्ययनसौष्ठवम्' इत्युपमानोपमेययोः सौष्ठवयोः सम्बन्धित्वेनैव ब्राह्मणक्षत्रियाध्ययने उपादीयेते, नोपमानोपमेयभावेन, तदाऽध्ययनसम्बन्धिनां सौष्ठवादीनामपि परिनिष्पत्त्यादयः सामान्यधर्मा इति । एवं परिनिष्पत्त्योरप्युपमानोपमेयभावे विवक्षितेऽन्यः कश्चित् सामान्यधर्मरूपो विशेषः कल्पयितव्य इति रीत्या नास्ति सामान्यधर्मभेदरूपस्य व्यतिरेकस्येयत्तया परम्परावध्यवच्छेद इति रीत्या सर्वथा कल्पित एवोपमानोपमेयभावस्थले सामान्यधर्मस्याभेदः । तद्वदभिधानाभिधेययोः सामान्यधर्मभेदोऽपि कल्पित एवेति ॥६३॥

पूर्वोक्तार्थ एवापरं दृष्टान्तं कथयति—**गुणः प्रकर्षहेतुर्य इति ।**

अयमर्थः—द्रव्यस्य स्वतोऽप्रकृष्टस्य स्वातन्त्र्येणान्यनिरपेक्षतया प्रकर्षहेतुर्यो गुण उपदिश्यते, अयमनयोः शुक्लतरः पट इति; अयमनयोः प्रकृष्टः शुक्ल इति वा उपदिश्यते, सोऽपि गुणो यदा-श्रयादपोद्धृत्य स्वातन्त्र्येण विवक्ष्यते शुक्लतरं रूपमस्य पटस्येति, तदा तस्य द्रव्यं प्रति विशेषणत्वाभावात् स्वप्रकर्षहेतुना भास्वरत्वगुणेन शुक्लतरमित्येवं विशेषणीयत्वाच्च द्रव्यत्वमिति रीत्या द्रव्यतामापन्नस्य तस्यापि प्रकृष्टत्वं स्वाश्रितात् स्वनिष्ठाद् भास्वरत्वस्वरूपाद् गुणादेव प्रतीयत इति ।

तद्यथा—प्रकृष्टः शुक्ल इति शुक्लेन रूपेण सत्यप्युपलक्षणत्वे प्रकर्षं प्रति सव्यापारेण तद्वानप्रकृष्टाश्रयः प्रकृष्टव्यपदेशं लभते। 'शुक्लतरं रूपमस्य' इत्यत्र तु रूपस्य द्रव्यत्वेनोपादाने क्रियमाणे रूपाश्रितनिमित्तात् प्रकृष्टव्यपदेशः प्रकल्पते।

---

अयं भावः— यावद् वस्तु इदंपदेन तत्पदेन स्वमात्रवाचकपटादिपदेन वा प्राधान्येनोपादीयते, तद् द्रव्यं वैयाकरणानाम्। न त्वत्र क्रियावद् गुणवद् वा द्रव्यमिति वैशेषिकप्रकल्पितं द्रव्यम्। तस्य च द्रव्यस्य स्वरूपतः प्रकर्षापकर्षौ न स्तः, न हि द्रव्यमन्यस्माद् विविक्तेन स्वरूपेण निर्धारयितुमपि शक्यते, किमङ्ग ! प्रकृष्टतया ज्ञातुम्। यतो द्रव्यं परिनिष्पन्नं स्वरूपमात्रेणावस्थितं नान्यस्मात्र्यूनम्, नाप्यधिकमित्यन्यस्माद् द्रव्यादव्यावर्त्यतयैवावस्थितम्, प्रकर्षश्चान्यसापेक्षतया स्वाश्रितगुणहेतुक इति। एवञ्च द्रव्यस्य स्वतः प्रकर्षापकर्षाभावे सिद्धं द्रव्यं स्वाश्रितैर्भेदहेतुभिर्गुणैरेव प्रकृष्यते, न स्वतः।

एवं हि गुणाः स्वाश्रयस्य भेदहेतवः, यतस्ते स्वाश्रयं स्वतोऽभेद्यत्वेनैवावस्थितं स्वकीयेनान्यव्यावृत्तेन रूपेणेतरस्माद् भिन्दन्तीति। यद्यपि भेदहेतुत्वं 'राज्ञः पुरुषः' इत्यत्र राजन्यप्यस्ति, न च भेदहेतोरपि तस्य पुरुषप्रकर्षहेतुत्वम्, तथापि राज्ञः पुरुषाश्रितत्वाभावाद् भेदहेतोरपि न प्रकर्षहेतुत्वम्, आश्रितानामेव भेदहेतूनां द्रव्यप्रकर्षहेतुत्वात्। यद्यपि पुरुषमनाश्रितस्य राज्ञोऽपि स्वसम्बन्धद्वारा पुरुषप्रकर्षहेतुत्वमस्त्येव, तथापि न साक्षात्।

किञ्च, 'राज्ञः पुरुषः' इत्यत्र शब्दशक्त्या राजसम्बन्धमात्रं पुरुषे प्रतीयते, न तु प्रकर्षः, अशक्यत्वात्। अयमनयोः प्रकृष्टः पुरुष इत्यत्र तु राजसम्बन्धहेतुकः प्रकर्षः प्रतीयते; राजसम्बन्धस्य पुरुषभेदकत्वात् पुरुषाश्रितत्वाच्च।

यद्यपि द्रव्याश्रितत्वं द्रव्यभेदहेतुत्वं च स्वातन्त्र्येण विवक्षितस्यापि गुणस्यास्ति पटस्य शुक्लं रूपमिति, न चात्र गुणस्य द्रव्यप्रकर्षहेतुत्वमिति; तथापि परतन्त्रैरेव गुणैर्द्रव्यं प्रकृष्यते, न स्वतन्त्रैरित्यवधेयम्। यद्यपि 'पुरुषस्य स्वामी' इत्यत्र पुरुषे स्वाम्याश्रितत्वं स्वामिभेदहेतुत्वं स्वामिपरतन्त्रत्वं चैतत्सर्वमप्यस्ति, न चास्ति स्वामिप्रकर्षहेतुत्वम्, तथापि स्वसंसर्गिभिरेव निमित्तैर्द्रव्यं प्रकृष्यते, ये यत्र संसृष्टास्तादात्म्यरूपामेकतामुपगच्छन्तो भेदहेतव इति।

एवञ्च नात्र पुरुषस्य स्वामिना सह तादात्म्योपगमरूपा संसृष्टता शुक्लरूपादिनेव पटस्येति नात्र पुरुषस्य स्वामिप्रकर्षहेतुत्वम्। यद्यपि घटत्वादिजातावप्याश्रितत्वं स्वाश्रयभेदहेतुत्वं स्वाश्रयपरतन्त्रत्वं स्वाश्रयसंसर्गित्वं चेत्येतत् सर्वमस्ति स्वाश्रयप्रकर्षकत्वं च नास्ति; तथापि प्रकर्षे सव्यापारैरेव निमित्तैः प्रचिकृक्षितोऽर्थः प्रकृष्यते। न च जातिः प्रकर्षे सव्यापारा, जातेर्द्रव्यजननमात्रलभ्यत्वेन तत्प्रकर्षेऽव्यापारात्। जायमानं हि द्रव्यमप्रकृष्टमेव जायते, तत्तु पश्चाज्जातेन स्वगुणेन शुक्लादिना प्रकृष्यत इति हि स्थितिः।

एवञ्च द्रव्यस्य जन्मकाल एव जातेः सम्बन्धः। न च तदानीं द्रव्यस्य प्रकर्ष इत्यतोऽनुमीयते न जातेर्द्रव्यप्रकर्षे व्यापार इति।

तदेवमनयोरयं पटः प्रकृष्टः शुक्ल इत्यत्र यद्यपि शुक्लगुणस्य द्रव्यव्यावृत्तये विशेषणतयोपादानम्, तथापि तस्यैव स्वाश्रयद्रव्यप्रकर्षेऽपि व्यापारः, शब्दोपात्तत्वात्। अन्यस्य च प्रकर्षहेतो-

**तस्याभिधेयभावेन यः शब्दः समवस्थितः ।**
**तस्याप्युच्चारणे रूपमन्यत् तस्माद् विविच्यते ।।६५।।**

न च गुणसामान्यं श्वेतसमवायि श्वैत्यमेकत्वाद् भेदहेतुः सम्भवतीति संसर्गिधर्मान्तराश्रयोऽवान्तरस्यैकस्यापि भेदः परिकल्प्यते ।

संविज्ञानपदान्तराभावाद् वा भावप्रत्ययैरनिर्देश्यास्तुल्यश्रुत्युपगृहीताः शौक्ल्यवदेव रूपाश्रिता विशेषाः प्रकृष्टव्यपदेशहेतवो विज्ञायन्ते । यावच्चेदं तदिति व्यपदेश्यस्य प्राधान्येनाश्रितस्य प्रकृष्टव्यपदेशः क्रियते, तावद् विच्छिन्नोऽयं निमित्तान्तरपरिकल्पनाधर्मप्रसङ्ग इति ।।६४।।

एवञ्च कृत्वोच्चार्यमाणस्य—

हेतुदृष्टान्ताभ्यां व्यतिरेकव्यवस्थानिदर्शनं कृत्वा यथाप्रकृतं स्वरूपमेव पुनरनु-

---

रसन्निधानादिति प्रकर्षं प्रति सव्यापारेण शुक्लेन रूपेणाप्रकृष्टः स्वाश्रयः प्रकृष्टव्यपदेशं लभते । यदा तु शुक्लं रूपं स्वाश्रयादपोद्धृत्य स्वातन्त्र्येण विवक्ष्यते, तदा तस्य विशेषणत्वाभावाद् विशेष्यत्वेन भेद्यत्वाच्च द्रव्यत्वमिति 'शुक्लतरं रूपमस्य' इत्यत्र द्रव्यत्वेनोपादाने क्रियमाणे रूपनिष्ठाद् भास्वरत्वरूपान्निमित्ताद् रूपस्य प्रकृष्टत्वव्यपदेशः प्रकल्पते ।

न च गुणगतं सामान्यं श्वेतरूपसमवायि श्वैत्यमेकत्वात् स्वाश्रयभेदहेतुः सम्भवतीति रूपावान्तरभेदवत एकस्यापि शुक्लरूपस्य स्वसंसर्गिणा स्वसमानाधिकरणेन भास्वरत्वरूपधर्मान्तरेण भेदः परिकल्प्यते । इदं च शुक्लरूपमाश्रयभेदेऽप्येकं नित्यं चेत्यभ्युपेत्योक्तम् ।

अथवा यद्यपि 'शुक्लतरं रूपमस्य' इत्यत्र भास्वरत्वस्य किञ्चित् संविज्ञानकरणं पदं भास्वरशब्दवन्नास्ति, न च यथा द्रव्याभिधायिनः शुक्लादिशब्दा भावप्रत्ययान्ताः शौक्ल्यशब्दरूपतामापन्नाः प्रकर्षहेतुं गुणमभिदधते, तथा गुणाभिधायिनोऽपि शुक्लादिशब्दाः भावप्रत्ययान्ताः प्रकर्षहेतुं भास्वरत्वादिकं गुणमभिदधति, ततश्च 'शुक्लतरं रूपमस्य' इत्यत्र यथा शुक्लपदेन स्वप्रवृत्तिनिमित्तं शौक्ल्यमभिधीयते, तथा भास्वरत्वादिरूपः प्रकर्षहेतुर्गुणोऽपीति वाच्यम्; भावप्रत्ययान्तेन शौक्ल्यपदेन प्रकर्षहेतोर्भास्वरत्वादिगुणस्य निर्देष्टुमशक्यत्वात् । प्रवृत्तिनिमित्ते हि "तस्य भावस्त्वतलौ" ( ५/१/११९ ) इत्यादयो भावप्रत्ययाः स्मर्यन्ते, न प्रकर्षहेतौ, प्रकृतिजन्यबोधे प्रकारो भाव इति भावलक्षणात् । तथाप्यत्र शुक्लपदमेव शुक्लरूपसामान्यमभिदधत् "निर्विशेषं न सामान्यम्" इति न्यायेन शुक्लविशेषान् भास्वरादीनप्यभिधत्त इति रीत्या तुल्येन शुक्लपदेन शौक्ल्यवदेवोपगृहीताः शुक्लरूपसामान्यक्रोडीकृताः शुक्लरूपगता विशेषा भास्वरत्वादयोऽनियतसन्निधयः प्रकरणादिना नियमिताः 'शुक्लतरं रूपमस्य' इत्यत्र प्रकृष्टव्यपदेशहेतवो विज्ञायन्ते । तेऽपि भास्वरत्वादयो यदा स्वाश्रयादपोद्धृता द्रव्यतामापन्नाः प्रकृष्टा विवक्ष्यन्ते 'रूपमस्य भास्वरतरम्' इति, तदा तत्रापि भास्वरत्वगतः कश्चिद् धर्मः प्रकृष्टव्यपदेशहेतुर्विज्ञायते ।

एवं भास्वरत्वगतधर्मस्यापि प्रकृष्टत्वव्यपदेशे तस्यापरो धर्मः, तस्याप्यन्य इत्यनवस्था ।

संह्रियते । तस्याभिधेयभूतस्य यदा यदा निदर्शनार्थमुच्चारणं प्रक्रम्यते, तदा तदा सर्वस्यैवोच्चार्यमाणस्यैवंधर्मत्वात् तस्यापि निबन्धनभूतं रूपान्तरमन्यद् विविच्यते ।

केचिदाहुः—''अभिधानमावर्तते, तदेव त्वभिधेयत्वान्न प्रच्यवते ।''

एवं हि संग्रह उक्तम्—''न हि स्वरूपं शब्दानां गोपिण्डादिवत् करणे सन्निविशते । तत्तु नित्यमभिधेयमेवाभिधानसन्निवेशे सति तुल्यरूपत्वादसन्निविष्टमपि समुच्चार्यमाणत्वेनावसीयते'' इति ॥६५॥

---

तथा च यावच्चेदं तदिति व्यपदेश्यस्य प्राधान्येनाश्रितस्य प्रकृष्टव्यपदेशः क्रियते, तावदविच्छिन्नोऽयं तत्र तत्र निमित्तान्तरपरिकल्पनाप्रसङ्ग इति ॥६४॥

'यो य उच्चार्यते शब्दः' इत्युपक्रम्य 'उच्चरन् परतन्त्रत्वात्' इति तत्र हेतुम्, 'सामान्यमाश्रितं यद्यत्' इति, 'गुणः प्रकर्षहेतुर्यः' इति च श्लोकद्वयेन तत्रैव दृष्टान्तमुक्त्वा साम्प्रतं तदेवोपसंहरति—**तस्याभिधेयभावेनेति ।**

तदुक्तं हरिणा स्वयम्—'हेतुदृष्टान्ताभ्यां व्यतिरेकव्यवस्थानिदर्शनं कृत्वा यथाप्रकृतं स्वरूपमेव पुनरनुसंह्रियते' इति ।

अत्र 'व्यतिरेकव्यवस्थानिदर्शनं कृत्वा' इत्यस्यार्थः—उच्चार्यमाणस्य शब्दस्य यः कार्यभाक्त्वाभावरूपो व्यतिरेकस्तस्य या नियमरूपा व्यवस्था, तस्या निदर्शनं निर्णयं कृत्वा यथाप्रकृतं शब्दस्वरूपमेव पुनरुपसंह्रियत इति ।

अयमर्थः—एवञ्च कृत्वा प्रागुक्तरीत्योच्चार्यमाणस्य तस्य शब्दस्याभिधेयभावेन प्रत्याय्यत्वेन यः शब्दः समवस्थितः, तस्याप्यभिधेयभूतस्य शब्दस्य निदर्शनार्थं तत्समानस्य शब्दान्तरस्योच्चारणे तस्मादभिधेयभूताद् अन्यद्रूपमुच्चार्यमाणस्य शब्दस्य विविच्यते, विवेकेन भेदेन प्रतीयत इति ।

अयं भावः—कीदृशोऽसौ प्रत्याय्य इति जिज्ञासायां यदा यदा तस्याभिधेयभूतस्य निदर्शनार्थं तदभिधानशब्दस्योच्चारणं प्रक्रम्यते, तदा तदा सर्वस्यैवोच्चार्यमाणस्यानभिधेयत्वात् तस्याप्युच्चार्यमाणस्य गोपिण्डादिवदभिधेयत्वेन निबन्धनभूतं रूपान्तरमुच्चार्यमाणादन्यद् विविच्यते, भेदेन गृह्यत इति ।

अत्र केचिदाहुः—''अभिधानमावर्तते, तदेव त्वभिधेयत्वान्न प्रच्यवते'' इति ।

अस्यार्थः—यथा कीदृशोऽसौ प्रत्याय्य इति प्रत्याय्या घटादयः पृष्टाः प्रत्यायकेन घटादिशब्देन प्रत्याय्याद् भिन्नेन कथ्यन्ते, तथाऽसावपि शब्दस्वरूपोऽभिधेयः स्वसजातीयेन शब्देनोच्चार्यमाणेन प्रत्याय्यते । न चान्यस्तस्य वाचक इति स एव चोच्चार्यमाणः शब्दो बुद्ध्याऽऽवर्तत इत्युच्चार्यमाणस्याभिधानत्वमेव । आवृत्तस्य त्वभिधेयत्वमिति तदेव त्वभिधेयमभिधेयत्वान्न प्रच्यवते, नाभिधेयमभिधेयात्मतां विहायाभिधायकं भवति । अत एव चानुकरणशब्दात् संज्ञाशब्दस्य विशेषः स्पष्टो भवति । उच्चार्यमाणमेवाभिधेयमनुकरणं भवति । संज्ञायास्तु प्रत्याय्यमेवाभिधेयम्, नोच्चार्यमाणमिति ।

एवं हि संग्रहे उक्तम्—'न हि स्वरूपं शब्दानां गोपिण्डादिवत् करणे सन्निविशते, तत्तु नित्यमभिधेयमेवाभिधानसन्निवेशे सति तुल्यरूपत्वादसन्निविष्टमपि समुच्चार्यमाणत्वेनावसीयते' इति ।

**प्राक्संज्ञिनाभिसम्बन्धात् संज्ञा रूपपदार्थिका ।**
**षष्ठ्याश्च प्रथमायाश्च निमित्तत्वाय कल्पते ।।६६।।**

---

अभिधेयान्तरप्रविवेकेऽप्यभिधानस्य स्वरूपेणाप्रविवेकं दर्शयति । स्वरूपाधिष्ठानं चोपसर्जनीभूतस्वरूपार्थः शब्दोऽर्थान्तरे वर्तते । यावत् संज्ञिना तु संज्ञा न सम्बद्धा, तावन्न संज्ञिपदार्थिकेत्यर्थान्तराभावे तस्याः प्रातिपदिकसंज्ञाभावाद् विभक्तियोगो न स्यात् । वाचकानां च व्यतिरेकहेतुत्वात् सम्बन्धिनि शब्दान्तरे प्रातिपदिकार्थव्यतिरेको न प्रकल्पते ।।६६।।

---

अस्यार्थः—यथा गवादिशब्दप्रत्याय्यानां गोपिण्डादीनां स्वरूपमुच्चार्यत्वेन स्थानप्रयत्नादिरूपे करणे न सन्निविशते, तथाऽभिधेयशब्दानां स्वरूपमप्युच्चार्यत्वेन करणे न सन्निविशते । तत्त्वभिधेयशब्दानां स्वरूपं नित्यमभिधेयमेव, न तु कदाचिदभिधायकम्, तथाप्यभिधानशब्द-स्वरूपस्योच्चार्यत्वेन करणे सन्निवेशे सति करणेऽसन्निविष्टमप्यभिधेयशब्दस्वरूपमनुच्चार्यमाण-मप्यभिधानतुल्यरूपत्वात् समुच्चार्यमाणत्वेनावसीयते निश्चीयत इति ।।६५।।

"भेदकार्येषु हेतुत्वमविरोधेन गच्छतः" ( वा० प० १/५८ ) इत्युक्तं प्राक्, तद्दर्शयन्नाह—**प्राक् संज्ञिनेति ।**

अयमर्थः—यदा वृद्ध्यादिसंज्ञाया आदैज्रूपेण संज्ञिनाऽभिसम्बन्धो भवति, तदा वृद्ध्यादिः संज्ञाशब्द आदैज्रूपस्वसंज्ञिपदार्थको भवति, संज्ञिनाऽभिसम्बन्धात् प्राक् तु वृद्ध्यादिसंज्ञापदं स्वरूपपदार्थकं भवति । अत एव स्वरूपेणार्थवत्तामादाय प्रातिपदिकत्वेन वृद्धिरिति प्रथमा विभक्तिः, अन्यथा अर्थवत्त्वाभावात् सा न स्यात् । तदेतदुक्तम्—संज्ञारूपपदार्थिका प्रथमाया निमित्तत्वाय कल्पते' इति । वृद्धिरिति प्रथमाया निमित्तत्वं प्राप्तुं प्रभवतीत्यर्थः । आदैज्रूपेण संज्ञिनाऽभिसम्बन्धे तु षष्ठ्या निमित्तत्वाय कल्पते । आदैचां वाचकं वृद्धिपदमिति ।

अयं भावः—यद्यपि वृद्ध्यादेः संज्ञापदस्य संज्ञिनादैज्रूपेणाभिसम्बन्धात् प्राग् आदैज्रूपाभिधेय-प्रविवेकस्तच्छून्यत्वरूपो भवति । किञ्च, एकाकारव्यक्तिपरित्यागेनापराकारव्यक्तिबोधने प्रवृत्तावपि प्रथमाकारव्यक्तिरूपाभिधेयान्तरप्रविवेको न भवति; किन्तूभयत्रापि स्वरूपात्मकाभिधेयान्तरप्रविवेको न भवति वृद्ध्यादिसंज्ञापदस्येत्येतमर्थं दर्शयतीयं कारिका निगूढभावा । यतः संज्ञिनाऽभिसम्बन्धेऽपि वृद्ध्यादिशब्दः स्वरूपमर्थमधिष्ठायैव = अभिधायैव बाह्यार्थे उपसर्जनीभूतस्वरूपार्थ आदैज्रूपेऽर्थान्तरे वर्तते । तथा च यावत् संज्ञिना तु संज्ञा न सम्बद्धा, तावन्न संज्ञिपदार्थिकेत्यादैज्रूपेऽर्थान्तराभावे यदि स्वरूपमप्यर्थो न स्यात्, तदा वृद्धिपदरूपायाः संज्ञायाः प्रातिपदिकसंज्ञाया अभावाद् वृद्धिरित्येवं प्रथमाविभक्तियोगो न स्यात् । वाचकानां च वाचकत्वस्य वाच्यवाचकयोर्भेदरूपव्यतिरेकहेतुकत्वात्, स्वरूपस्य वाचकत्वेन सम्बन्धिनि वृद्ध्यादिसंज्ञारूपे शब्दान्तरे प्रातिपदिकार्थभूतस्य स्वरूपस्य व्यतिरेकः सजातीयत्वेन न प्रकल्पत इति वृद्धिशब्दस्य वृद्धिशब्दः संज्ञेति षष्ठ्या व्यपदेशो न भवति, भवति त्वादैचां वृद्धिशब्दः संज्ञेति व्यपदेशः, वाच्यवाचकयोर्वैजात्येन व्यतिरेकस्य प्रक्लृप्तत्वादिति ।।६६।।

**तत्रार्थवत्त्वात् प्रथमा संज्ञाशब्दाद् विधीयते ।**
**अस्येति व्यतिरेकश्च तदर्थादेव जायते ।।६७।।**

---

स्वरूपाध्यारोपचिकीर्षायां बाह्येष्वर्थात्मसु शब्दार्थानां स्वरूपेणाधिष्ठानभूतेनार्थवत्त्वात् प्रथमा विधीयते । सोऽयमिति च संज्ञिना शक्त्यवच्छेदलक्षणः सम्बन्धो नियम्यते । तद्यथा— 'गौर्वाहीकः, सिंहो माणवकः' इति । प्रातिपदिकार्थव्यतिरेकः षष्ठीप्रवृत्तिहेतु; स्वरूपाभिधेये-नार्थवता तद्वता संज्ञाशब्देन योगात् संज्ञिशब्दानामुपजायते । एवं ह्याह—

अर्थवता व्यपदेशः सोऽयं तस्येति वा यतो भवति ।
नानर्थकेन तस्मान्नित्यः शब्दार्थसम्बन्धः ।। इति ।।६७।।

---

साम्प्रतं षष्ठीप्रथमाविभक्त्योर्विषयदेशमाह—**तत्रार्थवत्त्वादिति ।**

अयमर्थः—तत्र प्रागुक्तरीत्या वृद्ध्यादिसंज्ञाशब्दे षष्ठीप्रथमयोर्निमित्तत्वस्योपपादने कृते सति स्वरूपेणार्थवत्त्वाद् वृद्ध्यादिसंज्ञाशब्दात् प्रथमा ''वृद्धिरादैच्'' इत्यादौ विधीयते, अस्येति व्यतिरेकश्च । आदैचां वृद्धिशब्दः संज्ञेति भेदव्यपदेशस्तु तदर्थादेव आदैज्रूपं वृद्धिशब्दार्थमादायैव जायत इति ।

अयं भावः—यदा पुरुषः शब्दस्वरूपव्यतिरिक्ते बाह्येऽर्थे शब्दस्वरूपं तादात्म्येनाध्यारोपयितु-मिच्छति 'अयं पिण्डो देवदत्तः' इति, तदा शब्दानां स्वरूपेणाधिष्ठानभूतेन = प्रत्याय्येन अर्थवत्त्वात् प्रथमा विधीयते ।

किञ्चैवं सति सोऽयमिति = देवदत्तोऽयमिति, गौरयमिति व्यपदेशेन संज्ञिना पिण्डेन सह संज्ञाभूतस्य देवदत्तादिशब्दस्य तादात्म्यलक्षणः सम्बन्धो नियम्यते, अनेनैवार्थेन सहास्य शब्दस्य तादात्म्यमिति । तेन च व्यपदेशगृहीतेन सम्बन्धनियमेन तस्य संज्ञाशब्दस्य तस्मिन् पिण्डरूपेऽर्थे शक्त्यवच्छेदः = शक्तिनिर्णयो भवति ।

तथा चैतदायातं यः पुरुषः सोऽयमिति व्यपदेशं करोति, स पुरुषः संज्ञाशब्दस्य तां शक्तिं तदर्थविषयकत्वेन नियच्छति । यतः प्रत्याय्यार्थप्रतिपादिका बह्व्योऽसङ्कीर्णाः शक्तयः शब्दस्य, 'सर्वे सर्वार्थवाचकाः' इति न्यायात् । तत्र पुरुषः सोऽयमिति व्यपदेशेन तदन्याः शक्तीरवच्छिद्यैकां शक्तिं व्यवहार्यतां नयतीत्येवं शक्तिनियमः फलति । यद्वा तस्य शब्दस्यार्थान्तरप्रतिपादनशक्तिं सोऽयमिति व्यपदेशेन निरस्य तदर्थविषयैव शक्तिस्तद्व्यपदेशद्वारा प्रबोध्यत इत्येवं शक्तिनियमः । शक्तेर्नियमश्चा-र्थान्तरेभ्यो व्यावर्तनादिति ।

अत्र च बाह्येऽर्थे 'सोऽयम्' इति शब्दस्वरूपाध्यारोपः 'गोर्वाहीकः' 'सिंहो माणवकः' इतिवत् शक्त्यवच्छेदफलः ।

तथा हि—तत्र यथा तादात्म्यव्यपदेशेन वाहीकशब्देन गोशब्दस्य वाहीकार्थे शक्त्यवच्छेदे गोत्वजात्यादिनिवृत्त्या वाहीकार्थाभिधायित्वं गोशब्दस्य, तथा पुरुषेण संज्ञाशब्दानां शक्त्यवच्छेदः क्रियत इति ।

**स्वं रूपमिति कैश्चित्तु व्यक्तिः संज्ञोपदिश्यते ।**
**जातेः कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते ।।६८।।**
**सञ्ज्ञिनीं व्यक्तिमिच्छन्ति सूत्रे ग्राह्यामथापरे ।**
**जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते ।।६९।।**

---

इह केचिद् वृत्तिकाराः पठन्ति—'स्वं रूपं शब्दस्य ग्राहकं भवति द्योतकं प्रत्यायकम्' इति । अपरे तु 'स्वं रूपं शब्दस्य ग्राह्यं द्योत्यं प्रत्याय्यम्' इति । तदनेन श्लोकद्वयेनोपन्यस्तम् । जातावपि द्वयी प्रतिपत्तिराचार्य्याणाम् ।

---

किञ्चातस्मिंस्तद्रूपारोप इत्यत्राप्येतदेवोदाहरणम् । तदेवं संज्ञाशब्दात् प्रथमाभिधानमुपपादितम् । संज्ञिशब्देभ्यः षष्ठीप्रवृत्तिहेतुः प्रातिपदिकार्थव्यतिरेकस्तु शब्दस्वरूपमभिधेयमादायार्थवता संज्ञाशब्देन सह संज्ञाशब्दानां योगादनन्तरं तद्योगहेतुक उपजायते, उपजायमानो गृह्यत इति । एवं ह्याह कश्चित्—

'अर्थवता व्यपदेशः सोऽयं तस्येति वा यतो भवति ।
नानर्थकेन तस्मान्नित्यः शब्दार्थसम्बन्धः' ।। इति ।

अस्यार्थः—यतो यस्मात् कारणात् शक्तिग्रहकाले सोऽयमिति संज्ञासंज्ञिनोस्तादात्म्यव्यपदेशः, यथा "वृद्धिरादैच्" (५/१/११९) इति । यद्वा तस्येति भेदव्यपदेशः । यथा आदैचां वृद्धिशब्दः संज्ञेति । स च द्विविधोऽपि व्यपदेशोऽर्थवता संज्ञाशब्देन सह भवति, नानर्थकेन, अनर्थकात् संज्ञाशब्दात् प्रथमाविभक्त्युत्पत्तेरनुपपत्तेः । न च शक्तिग्रहकाले संज्ञाशब्दस्यान्योऽर्थ इति तदा संज्ञाशब्दस्य स्वरूपमेवार्थः । स चार्थः सदा सन्निहितत्वान्नित्यः । तस्मान्नित्यः शब्दार्थयोः सम्बन्ध इति ।। ६७ ।।

एवं शब्दस्य स्वरूपे तदतिरिक्ते चार्थे शक्तिभेदकल्पनया "स्वं रूपं शब्दस्याशब्दसंज्ञा" (अष्टा० १/१/६८) इति सूत्रार्थं वर्णयित्वा शब्दस्य जातिव्यक्तिभेदेन संज्ञासंज्ञिभावं निदर्शयन् तदेव सूत्रमन्यथा व्याचष्टे—**स्वं रूपमिति कैश्चित्त्विति** ।

अयमर्थः—स्वं रूपमिति सूत्रेण तत्तच्छास्त्रे उच्चार्यमाणाग्न्यादिशब्दव्यक्तिरग्निशब्दत्वादिरूपाया जातेः संज्ञा उपदिश्यते । सा च शब्दव्यक्तिः प्रत्युच्चारणमेकैव, न तु नाना; तथात्वे एकत्र शक्तिकल्पनेऽन्येन जातिभानासम्भवाद् विनिगमनाविरहाच्च सर्वत्र शक्तिकल्पने गौरवादिति तु कैश्चिदुच्यते ।

तथा च स्वं रूपमिति सूत्रस्यायमर्थः—शब्दस्येत्यावर्तनीयम् , शब्दस्य स्वं रूपं शब्दस्य शब्दगतायां जातेः संज्ञेति । द्वितीयं शब्दस्येति पदं शब्दगतजातिपरम् , प्रथमं तु शब्दव्यक्तिपरमिति ।

ननु जातिः प्रदेशेषु शब्देन प्रतिपादिताप्यसमर्था ढगादिकार्याणि प्राप्तुमित्याशङ्क्याह—**'कार्याणि संसृष्टा जातिस्तु प्रतिपद्यत'** इति ।

अयमर्थः—संसृष्टा व्यक्त्युपगृहीता व्यक्त्याश्रितेति यावत् । जातिरग्निशब्दत्वादिरूपा कार्याणि ढगादीनि प्रतिपद्यते, प्राप्नोतीति । व्यक्तिद्वारैव जातिर्ढगादिकार्याणि प्राप्नोति, न साक्षा-

केचिदाहुः—प्रतिनियतस्वरूपभेदा व्यक्तयः। न ह्यसंवेद्यव्यपदेश्यविद्यमानं वा व्यक्तीनां स्वरूपम्। व्यक्तिरेव हि गौः, नाकृतिः। गुण एव हि नीलः, न गुणसामान्यं नीलत्वं नीलमिति। आकृतेस्त्वकृतसमवायानामपि स एवायमिति वृद्ध्यनुवृत्तौ भेदवत्स्वर्थेषु निमित्तत्वम्। एतद्धि तस्याः सत्तायामनुमानम्।

---

दिति भावः। अथेति पक्षान्तरोपन्यासः। अपरे आचार्याः सूत्रे स्वं रूपमिति सूत्रे ग्राह्यां शब्दस्य स्वरूपेण जात्यात्मकेनाग्निशब्दत्वादिना संज्ञाभूतेन ग्राह्यां संज्ञिनीं व्यक्तिं तत्तदग्निशब्दरूपामिच्छन्ति। प्रदेशेषु अग्नेर्ढगित्यादिविधिप्रदेशेषु जात्या अग्निशब्दत्वादिरूपया संज्ञाभूतया प्रत्यायिताऽग्निशब्दरूपा व्यक्तिः कार्यार्थमुपतिष्ठत इत्यर्थः।

अयं भावः—प्रथमश्लोके स्वं रूपमिति निर्दिष्टा व्यक्तिः, सा च संज्ञा शब्दस्येति निर्दिष्टाया जातेरित्युक्तम्। अत्रापि स्वं रूपमिति निर्दिष्टा व्यक्तिरेव। सा च संज्ञिनी शब्दस्येति निर्दिष्टाया जातेरिति। ततश्चायं वृत्तिग्रन्थः पूर्वत्र स्वं रूपं शब्दस्य शब्दगताया जातेर्ग्राहकमिति। उत्तरत्र तु स्वं रूपं शब्दस्य शब्दगताया जातेर्ग्राह्यमिति। अत एवेह केचिद् वृत्तिकाराः पठन्ति—स्वं रूपं शब्दस्य ग्राहकं भवति, द्योतकं प्रत्यायकमिति।

अपरे तु स्वं रूपं शब्दस्य ग्राह्यं द्योत्यं प्रत्याय्यमिति। एतदेवानेन श्लोकद्वयेनोपन्यस्तम्। तत्र जातावपि द्वयी प्रतिपत्तिराचार्याणाम्, प्रतिपत्तिप्रकारभेदात्।

तथा हि केचिदाचार्या आहुः—लोके प्रतिनियतस्वरूपभेदा गोपिण्डादिरूपा गवादिव्यक्तयः प्रत्यक्षतः समुपलभ्यन्ते। यथा जातयः स्वत एव जात्यन्तरेभ्यो व्यावृत्ताः, तथा गोव्यक्तयः कर्मादिव्यक्तिभ्यः प्रतिनियतभेदाः। तेन जातिं विनैव गोशब्दः, तासु न कर्मादिव्यक्तिष्विति।

न च वस्तुमात्रतया गवादिव्यक्तिः सम्प्रमुग्धाऽव्यावृत्ताकारेति न जात्युपरागमन्तरेण गवादिषु कर्मादिभेदोऽवसीयत इति जात्यैव प्रतिनियतभेदा गवादिव्यक्तय इति वाच्यम्, गोव्यक्तेर्गोत्वजातियोगं विनैव स्वत एव कर्मादिव्यावृत्ततया संवेद्यत्वाद् गोपदेन व्यपदेश्यत्वाच्च। न ह्यसंवेद्यम्, अव्यपदेश्यम्=अव्यवहार्यम्, अविद्यमानं वा व्यक्तीनां स्वरूपम्, यतो या प्रत्यक्षतो व्यवहारे गौरुपलभ्यते व्यवह्रियते च, सा व्यक्तिरेव, नाकृतिः। न हि गोत्वजातियोगाद् गोव्यक्तिर्गौः, किन्तु स्वत एव, जातेरिव गोव्यक्तेरपि स्वरूपभेदस्य स्वत एव प्रतीतिसम्भवात्। एवं नीलगुण एव नील इति प्रत्यक्षतः समुपलभ्यते व्यवह्रियते च, सा व्यक्तिरेव, नाकृतिः। न तु नीलगुणगतं नीलत्वाख्यं सामान्यं नीलमिति प्रत्यक्षेण गोचरीक्रियते व्यवह्रियते वा। न हि नीलो गुणो नीलत्वजातियोगान्नीलः, किन्तु स्वत एव। एतावताकृतिर्नास्त्येवेति न मन्तव्यम्, यतः प्रतिनियतभेदवत्स्वर्थेषु व्यक्तिरूपेषु सत्स्वसाक्षात्कृताकृतिसमवायानामपि तेषामर्थानां या 'स एवायम्' इत्यनुगतैकाकारबुद्ध्यनुवृत्तिर्भिन्नेष्वभिन्नप्रत्ययरूपा तस्यामाकृतेरेव निमित्तत्वम्।

न च यथा द्रव्यगुणयोर्द्रव्यशब्दगुणशब्दाध्यारोपणेनैव द्रव्यमिति प्रत्ययः, न तु द्रव्यत्वजातिसमवायेन, सुवर्णरजताद्यतिरिक्ते द्रव्यत्वजातिसत्त्वे मानाभावात्। एवं पृथक्त्वविभागादिष्वपि गुणत्वजातिसत्त्वे मानाभावः। अत एवाद्वैतिभिः पृथक्त्वविभागयोर्भेदेऽन्तर्भावः क्रियते। तथा गोव्यक्तिषु भिन्नास्वपि गौरित्यभिन्नप्रत्ययनिमित्तं गोशब्दाध्यारोप एव किं न स्यादिति वाच्यम्, वैषम्यात्।

अन्ये तु मन्यन्ते—जातौ प्रतिलब्धस्वरूपाः शब्दास्तद्रूपतयैव व्यक्तिमव्यपदेश्यस्वरूपां प्रत्याययन्ति। सर्वत्रैव हि निमित्तान्निमित्तवत्यर्थे निमित्तस्वरूपः प्रत्यय उत्पद्यते। तत्र हि भेदेन दृष्टाभिधानान्यदृष्टाभिधानानि च निमित्तानि शब्दप्रत्ययावेकदेशसारूप्येणात्यन्तसारूप्येण च प्रवर्तयन्ति।

---

तथा हि—यत्रैकशब्देनैवाभिन्नप्रत्ययाभिलापः क्रियते, तत्र शब्दाध्यारोपो द्रव्यं गुण इति। यत्र त्वभिन्नप्रत्ययः पर्यायैरप्यभिलप्यते 'कलशः घटः कुम्भः' इति, तत्र घटत्वजातिस्वीकार आवश्यकः, शब्दभेदादिति। एतद्बुद्ध्यनुवृत्तिनिमित्तत्वमेव चाकृतेः सत्तायामनुमापकम्।

तथा हि अयमनुमानप्रयोगः—प्रतिनियतस्वरूपभेदासु घटादिव्यक्तिषु घट एवायमिति समानरूपेणानुवर्तमाना बुद्धिः सदृशविषयनिबन्धना सदृशबुद्धित्वात्, यन्नैवं तन्नैवम्, यथा घटपटादिविषया विसदृशबुद्धय इति। विषयाणां सादृश्यं चैकधर्मनिबन्धनं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं हि सादृश्यं सादृश्यनिबन्धनं वेत्यभ्युपगमात्। स चैको धर्मो नित्योऽनेकसमवेतश्च जातिपदेन व्यवह्रियते नैयायिकैरित्येवं जातेरनुमानम्। तथा चैतेषामाचार्याणां मते व्यक्तयः प्रत्यक्षाः, तत्र समवेता जातयस्त्वनुमेया इत्यायातम्।

एतदेवाचार्यमतमालम्ब्य शब्दव्यक्तिः शब्दगताया जातेः संज्ञेति प्रथमः पक्षः प्रवृत्तः। अस्मिन् मते जातेरप्रत्यक्षत्वेन संज्ञात्वासम्भवात्। न हि स्वरूपतोऽगृहीतायाः संज्ञात्वसम्भवः, लौकिकीषु देवदत्तादिपदरूपासु संज्ञासु स्वरूपतो गृहीतानामेव संज्ञात्वदर्शनादिति।

अन्ये त्वाचार्या मन्यन्ते—जातिं विना व्यक्तीनां स्वरूपमव्यपदेश्यम्। तस्य व्यपदेश्यत्वे तु तवापि जातियोगकल्पनावैयर्थ्यम्। अतो जातिरेव शब्देन व्यपदिश्यते। जातौ वाचकत्वेन प्रतिबद्धस्वरूपास्तु = सम्बद्धस्वरूपास्तु शब्दास्तत्तज्जातिरूपेणैव तत्तज्जातितादात्म्येन व्यक्तिमव्यपदेश्यस्वरूपामपि प्रत्याययन्ति। तादात्म्यं चात्र भेदाभेदौ समसत्ताकौ कल्पितो वान्यतरः।

ननु यद्यव्यपदेश्यं स्वरूपं व्यक्तीनां ताश्च जातेर्व्यावृत्तस्वभावा एवेति कथं जातिशक्तेभ्यः शब्देभ्यो जात्यभिधानपूर्वकं तासामभिधानमिति चेत्, न, सर्वत्रैव हि निमित्तान्निमित्तवत्यर्थे निमित्तस्वरूपः प्रत्यय उत्पद्यत इति दर्शनात्।

तथा हि—निमित्तं द्विविधं कारकं ज्ञापकञ्चेति। तत्र मृदादिरूपे निमित्ते उपादानकारके सर्वत्रैव निमित्तान्निमित्तवत्यर्थे निमित्तस्वरूपः प्रत्यय उत्पद्यमानो दृश्यते—'मृद् घटः, सुवर्णं कुण्डलम्' इति। एवं जातिगुणक्रियादिरूपे केवलजातिरूपे वा व्यक्तीनां ज्ञापकनिमित्तेऽपि निमित्तान्निमित्तवत्यर्थे निमित्तस्वरूपः प्रत्यय उत्पद्यते घटादिव्यक्तौ घटत्वादितादात्म्योल्लेखो घट इत्यादिरूपो घटत्वादीनां घटादिव्यक्तिज्ञापकत्वं तु व्यक्त्यविनाभावाद् धूमादीनामिव वह्न्यादिज्ञापकत्वमिति।

तानि च ज्ञापकनिमित्तानि द्वैविध्येन भिन्नानि—दृष्टाभिधानानि, अदृष्टाभिधानानि चेति।

तत्र दृष्टमभिधानं येषां निमित्तानां तानि दृष्टाभिधानानि गोत्वादीनि निमित्तानि। गोशब्दादयो हि तेषामभिधानानि।

अदृष्टाभिधानानि तु उत्पलगन्धादीनि। न ह्युत्पलगन्धशब्द उत्पलगन्धरूपं गन्धविशेषं

तथा च स्वं रूपमिति जातिरेव कैश्चित् प्रतिज्ञायते। शब्दस्येति तु शब्दशब्देन व्यक्तिर्व्यपदिश्यते। केषाञ्चित् तु विपर्ययेणायं व्यपदेशः। तत्र जातेर्व्यक्तिः संज्ञा व्यक्तेर्वा जातिः। सा च प्रदेशेषूच्चरिता व्यक्तिं कार्ययोगेन प्रत्याययति। सा च जातिरसंसृष्टा व्यक्त्या नोच्चरति। व्यक्तिरप्यसंसृष्टा जात्या प्रयोगविषयं नावतरति। तात्पर्येण तु विवक्षा भिद्यते। किञ्चिदत्र प्रधानम्, किञ्चिन्नान्तरीयकमिति। तच्च प्रतिज्ञाभेदमात्रम्।

जातिः शास्त्रे कार्ययोगिनी सञ्चिकीर्षिता, व्यक्तिः शास्त्रे कार्ययोगिनी सञ्चिकीर्षितेति।

स्वं रूपं शब्दस्येत्यत्र बहुविकल्पो वैयाकरणाधिकरणेष्वागमः।

तद्यथा—रूपमात्रमेकदेशोऽर्थवतो रूपार्थसमुदायस्य सामान्यविशेषादिशक्तियुक्तस्य शब्दस्य शब्दत्वेनाश्रितस्य संज्ञा।

---

तद्गतं जातिविशेषं वाह, शब्दद्वयेन समस्तेन सम्बन्धावच्छिन्नस्य सम्बन्धिनोऽभिधानात्। तानि च द्विविधान्यपि निनित्तान्यनुवृत्तौ शब्दप्रत्ययावेकसारूप्येणात्यन्तसारूप्येण च प्रवर्तयन्ति।

तथा हि—देवतिर्यङ्मनुष्येषु प्राणीत्यनुवृत्तः शब्दप्रयोग एकदेशसारूप्येण प्रवर्तते, प्राण्येकदेशस्य वाक्कायव्यापारमात्रस्य दर्शनात्, प्राणिशब्दस्य तत्र प्रवृत्तेः।

अत्रापि गवादिशब्देष्विव दृष्टाभिधानमेव निमित्तं प्राणसम्बन्धरूपं गोत्वादिजातिवत् तस्य सर्वत्रानुगतत्वात्। यद्यपि प्राणसम्बन्धोऽपि प्रतिशरीरं भिन्न इत्यननुगतः, तथापि संयोगत्वजात्या तस्यानुगमः।

अत्यन्तसारूप्येण यथा—गोत्वजातिरूपं दृष्टाभिधानं निमित्तं गौरिति शब्दप्रत्ययौ भूयोऽवयवसन्निवेशतुल्यत्वेन प्रवर्तयति। उत्पलगन्धादीनि त्वदृष्टाभिधानानि निमित्तानि गन्धविशेषगतं जातिविशेषरूपमत्यन्तसारूप्यमादायैवोत्पलगन्ध इत्यनुवृत्तौ शब्दप्रत्ययौ प्रवर्तयति।

तत्र दृष्टाभिधानेषु त्रयमनुवर्तते—जातिः, शब्दः, प्रत्यय इति। अदृष्टाभिधानेषु तु द्वयम्—शब्दो बुद्धिश्चेति। उत्पलगन्धादिषु जातेरनभिधानात् सम्बन्धावच्छिन्नस्य सम्बन्धिन एवाभिधानात्।

तदेवमस्मिन् मते जातेरेव व्यपदेश्यत्वेन संज्ञात्वम्, स्वतोऽव्यपदेश्याया व्यक्तेस्तु संज्ञित्वमिति।

तथा च प्रागुक्ताचार्यमतद्वयसत्त्वेन स्वं रूपमित्यत्र जातिरेव कैश्चित् संज्ञात्वेन प्रतिज्ञायते। शब्दस्येति तु शब्दशब्देन व्यक्तिरेव संज्ञित्वेन व्यपदिश्यते। केषाञ्चित्तु विपर्ययेणायं व्यपदेशः। तथा च मतभेदेन जातेर्व्यक्तिः संज्ञा व्यक्तेर्वा जातिरित्यायातम्। सा चाग्निशब्दत्वादिरूपा जातिः प्रदेशेषु व्यक्त्यविनाभावेनोच्चारिता व्यक्तिं शब्दव्यक्तिं ढगादिकार्ययोगितया प्रत्याययति। सा च जातिर्यद्यपि व्यक्त्याऽसंसृष्टा नोच्चारिता भवति, व्यक्तिरपि जात्याऽसंसृष्टा प्रयोगविषयं नावतरति। तात्पर्येण तु विवक्षा भिद्यत इति प्रागुक्तो जातिव्यक्त्योः संज्ञासंज्ञिभावे पक्षभेद उपपद्यते।

तथा हि—जातौ विवक्षितायां व्यक्तिर्नान्तरीयकत्वेनोच्यते जातिः प्रधानमिति। व्यक्तौ विवक्षितायां तु जातिर्नान्तरीयका व्यक्तिः प्रधानमिति रीत्या तात्पर्यभेदेन विवक्षाभेदः।

रूपवान् वा संसर्गिणीभिः शक्तिभिर्भिन्नः सार्थकः समुदायः श्रुतिमात्रस्य ग्राहकः। मात्राकलापो हि शब्दः। तदेकदेशाः स्वरूपादयो मात्राः। मात्राभिश्च मात्रावतामप्यस्ति भेदव्यपदेशव्यवहारः। वार्क्षी शाखेति यथा।

अपर आह—यद्यपि वस्तु न भिन्नम्, शब्दार्थस्तु भिन्नः। शब्दो ह्येकवस्तुविषयाणामपि शक्तीनामवच्छेदेनोपग्रहे वर्तते। तद्यथा—'अयं दण्डः' इति प्रत्यक्षरूपतया तदेव

---

ननु सर्वत्र तत्तत्कार्यक्रियारूपः संस्कारो जातिविशिष्टायां व्यक्तावेव प्रागुक्तपक्षद्वयेऽपि, न तु केवलायां जातौ, व्यक्तौ वा केवलायाम्।

तथा च कथं प्रागुक्तपक्षद्वयसम्भव इति चेत्, न, प्रतिज्ञाभेदमात्रेण पक्षभेदः, न तु वस्तुभेदेनेति स्थितेः।

तथा हि—जातिः शास्त्रे कार्ययोगिनी सञ्चिकीर्षिता, व्यक्तिः शास्त्रे कार्ययोगिनी सञ्चिकीर्षितेत्येवं प्रतिज्ञाभेदमात्रम्, न वस्तुभेदः।

अयं भावः—यद्यपि जातिव्यक्तिसंसर्गे सत्येव जातिविशिष्टायां व्यक्तौ तत्तत्कार्यं क्रियत इति नास्ति पक्षभेदसम्भवः, वस्तुभेदाभावात्; तथापि जातिः संस्कर्तुमिष्टाचार्यस्य नान्तरीयको व्यक्तिसंस्कार इत्येकः पक्षः, व्यक्तिर्वा संस्कर्तुमिष्टा तस्य, व्यक्तिद्वारकस्तु जातिसंस्कार इत्युभयमुभयत्र पक्षद्वये संस्क्रियत इति।

तदेवं पक्षद्वयेऽपि जातिव्यक्तिभेदात् संज्ञासंज्ञिभेदो व्युत्पादितः। अस्ति तु स्वं रूपमित्यत्र बहुविकल्पो वैयाकरणानामधिकरणेष्वागमः = सम्प्रदायः।

तद्यथा—स्वं रूपं रूपमात्रं श्रुतिमात्रं य एकदेशोऽवयवोऽर्थवतो रूपार्थसमुदायस्यार्थविषयकसामान्यविशेषादिशक्तियुक्तस्य तत् स्वं रूपमिति सूत्रे शब्दस्येति पदेन शब्दत्वेनाश्रितस्य संज्ञेत्येकः पक्षः।

अथवा रूपवान् सार्थकः समुदायोऽर्थविषयकसामान्यविशेषादिशक्तिभिः स्वसंर्गिणीभिर्विशिष्टः श्रुतिमात्रस्य संज्ञेत्यपरः पक्षः। अत्र पक्षे स्वं रूपमिति रूपवतः समुदायस्य स्वं रूपं शब्दस्येत्यनेन च पदेन श्रुतिमात्रं गृह्यते।

एतदुक्तं भवति—अग्निशब्दस्याग्निसामान्येऽग्निविशेषे स्वरूपे च शक्तिमतेऽर्थवत एकदेशो रूपमात्रं श्रुतिमात्रं संज्ञा। एतद्विपर्ययेण च रूपवान् समुदायः संज्ञारूपं तु श्रुतिमात्रं संज्ञि इति, यतो मात्राकलापः शब्दः। तदेकदेशाः स्वरूपञ्च श्रुतिमात्रम्, अर्थश्च स्वरादयश्च तद्धर्मा मात्रा इति। यद्यप्यवयवेभ्योऽव्यतिरिक्तोऽवयवीति संज्ञासंज्ञिभावेन भेदव्यपदेशो न प्रकल्पते, तथाप्यवयवावयविनोरस्ति भेदोऽपि, अत्यन्ताभेदेऽत्यन्तभेदे वाऽवयवावयविभावव्यवहारदर्शनात्। तथा च दृश्यतेऽवयवावयविनोर्लोके भेदमूलको व्यपदेशः, यथा वार्क्षी शाखा इति। अत्र हि शाखासमुदायमात्रं वृक्षः, तस्यैकदेशः शाखा इत्यभेदः, तथापि कल्पितं भेदमादाय वार्क्षी शाखेति भेदव्यपदेशः। तदेवमत्र पक्षद्वयेऽपि समुदायैकदेशभेदात् संज्ञासंज्ञिभेद इति व्युत्पादितम्।

अपर आह—यद्यपि दण्डादिरूपं वस्तु स्वरूपेण न भिन्नम्, तथापि तत्तच्छब्दार्थत्वेन तत्तत्प्रवृत्तिनिमित्तोपग्राहित्वेन भिन्नम्। यत एकवस्तुविषयाणामपि शक्तीनां प्रवृत्तिभेदमूलकेनार्थभेदेन

**कार्यत्वे नित्यतायां वा केचिदेकत्ववादिनः ।**
**कार्यत्वे नित्यतायां वा केचिन्नानात्ववादिनः ।।७०।।**

---

वस्तु सर्वनाम्नाभिधीयते, नोपलभ्यमानेनापि दण्डजातियोगेन । दण्डजातियोगाभिधाने हि तस्यासामर्थ्यं सर्वनाम्नः, दण्डशब्दस्य च विशिष्टजातीयार्थाभिधायिनः प्रत्यक्षत्वेऽपि सति तस्य वस्तुनः प्रत्यक्षरूपतया प्रत्यायने प्रतिबध्यते शक्तिः ।

तथा ''स्वं रूपम्'' इत्यनेनाग्न्यादिश्रुतयः सत्यपि शब्दजातियोगेऽग्न्यादिरूपतयैव प्रत्याय्यन्ते, ( न ) शब्दजातियोगित्वेन । शब्दशब्देन तु शब्दजातियोगित्वमेवाख्यायते, नाग्न्यादिश्रुतियोगः ।

तत्र शब्दान्तरार्थः शब्दान्तरार्थस्य प्रसिद्धभेदस्य संज्ञात्वेनोपादीयमानस्य संज्ञिभावं प्रतिपद्यत इति तदेतन्निदर्शनमात्रम्, प्रसक्तानुप्रसक्तविचारणाप्रसङ्गनिवृत्त्यर्थं तु सर्वे स्वं रूपसूत्रमतभेदा उदाह्रियन्ते ।।६८-६९।।

येषामेकशब्दत्वं तेषामयं जातिव्यक्तिव्यवहारो न सम्भवतीति जात्युपन्यासादनन्तरमिदमुपन्यस्तम् । तत्र नित्यतायामत्यन्तमुख्यमेकत्वम् । कार्यत्वे तु सकृदुच्चरितस्य

---

परस्परमवच्छेदात् = व्यावृत्तेः, तत्तत्प्रवृत्तिनिमित्तोपग्रहवत्यर्थे स स शब्दो वर्तते । एकस्मिन्नपि वस्तुनि प्रवृत्तिनिमित्तभेदान्नानाशब्दप्रवृत्तिरिति यावत् । तद्यथा—''अयं दण्डः'' इति, तदेव वस्तु प्रत्यक्षरूपतया इदंपदेन सर्वनाम्नाऽभिधीयते, उपलभ्यमानेनापि तु दण्डत्वजातियोगेन नाभिधीयते, दण्डत्वजातियोगाभिधाने सर्वनाम्न इदंपदस्यासामर्थ्यात् । यतो नेदंशब्दप्रयोगाद् दण्डत्वजातिविशिष्टविषया प्रतीतिर्जायते, दण्डरूपार्थपरित्यागेनान्यत्रापि घटादाविदंशब्दप्रयोगात् । न हि स तस्यार्थो यो येन विनापि प्रतीयते । दण्डशब्दस्य च विशिष्टजातीयार्थाभिधायिनः शक्तिस्तस्य वस्तुनः प्रत्यक्षत्वेऽपि सति प्रत्यक्षरूपतया प्रत्यायने प्रतिबध्यते ।

तथा स्वं रूपमित्यनेनाग्न्यादिश्रुतयः सत्यप्यग्निशब्दत्वादिजातियोगेऽग्न्यादिश्रुतिरूपतयैव प्रत्याय्यन्ते, नाग्निशब्दत्वादिजातियोगेन । शब्दस्येति शब्दशब्देन तु अग्निशब्दत्वादिजातियोगित्वमेवाख्यायते, नाग्न्यादिश्रुतियोगः ।

तत्र शब्दान्तरार्थस्य स्वसंज्ञिना सह प्रसिद्धभेदस्य स्वं रूपमित्यत्र संज्ञात्वेनोपादीयमानस्यादिश्रुतिरूपस्य शब्दान्तरार्थोऽग्निशब्दत्वजातियोगी संज्ञिभावं प्रतिपद्यत इति स्थितम् ।

तदेवमत्र पक्षे शब्दान्तरार्थोऽग्न्यादिश्रुतिरूपः संज्ञा, शब्दान्तरार्थश्चाग्निशब्दत्वजातियोगी संज्ञीति स्वरूपकृत एव संज्ञासंज्ञिनोर्भेदव्यपदेशः ।

अर्थभेदेन च शब्दभेदमाश्रित्य शब्दान्तरार्थः शब्दान्तरार्थस्य चेत्युक्तम् । तदेतन्निदर्शनं स्वं रूपमिति सूत्रे स्थितानां पक्षभेदानाम् । प्रसक्तानुप्रसक्तविचारणाप्रसङ्गनिवृत्त्यर्थं तु सर्वे स्वं रूपमिति सूत्रविषये मतभेदा नोदाह्रियन्त इति हरिणा स्वयमुक्तमित्यलम् ।।६८-६९।।

येषामभेदेऽप्येकशब्दत्ववादस्तेषां मते एक एव गोशब्दः, न बहव इति जातिमन्तरेण स्वयमेकप्रत्ययप्रवृत्तेर्नात्र जातिपरिकल्पना इत्ययं समनन्तरपद्यद्वयोक्तो जातिव्यक्तिभेदव्यवहार-

वर्णस्य पदस्य वा पुनरुच्चारणे स एवायमित्यव्यभिचारिप्रत्ययाभेद उत्पद्यमान एकत्वं प्रकल्पयति। एकत्वदर्शनं चाश्रित्योक्तम्—'एकत्वाकदारस्य सिद्धम्' इति।

उपलब्धिव्यवधानं तु कालशब्दाभ्याम्, न वर्णरूपव्यवधानम्। देशपृथक्त्वदर्शनं च सत्ताकृतिजलबिम्बदर्शनवत्।

अनेकत्वपक्षेऽपि कार्येष्वपि शब्देष्ववश्यं पुनरुच्चारणे व्यवहारार्थमौपचारिकमेकत्व-माश्रयणीयम्।

भिन्नार्थानां तु पदानां भिन्नपदस्थानां च वर्णानामत्यन्तनानात्वं नित्यपक्षे कार्यपक्षे वा नानात्ववादिभिरभ्युपगम्यते ॥७०॥

---

प्रयुक्तः संज्ञासंज्ञिभेदव्यवहारो न सम्भवति; किन्तु शब्दनानात्ववाद एवेत्यभिप्रेत्य जातिव्यक्तिभेदव्यवहार-प्रयुक्तसंज्ञासंज्ञिभेदव्यवहारोपन्यासानन्तरं शब्दैकत्वनानात्ववादौ उपन्यस्यति— **कार्यत्वे नित्यतायां वेति।**

अयमर्थः—प्रक्रान्तत्वात् शब्दस्येति कारिकायामध्याहर्तव्यम्। तथा च शब्दस्य कार्यत्वे उत्पाद्यत्वपक्षे तस्य नित्यत्वपक्षे वा केचित् शब्दैकत्ववादिनः।

तथा हि—पदरूपस्य गवादिशब्दस्य वाक्यरूपस्य च वेदशब्दस्यात्मादिवन्नित्यत्वम्, न त्वस्मदादिवाक्यरूपस्य शब्दस्येति मीमांसकानां शब्दनित्यत्ववादः। गवादिशब्दस्य वियदादिवत् कल्पादौ समुत्पन्नस्य कल्पान्तकालपर्यन्तावस्थायिनो वियदादिवत् कार्यत्वमेवेति व्यवहारे मीमांसकमतमनुसरतां ब्रह्माद्वैतमभीप्सतामद्वैतिनां शब्दकार्यत्ववादः। तथा चैतेषामुभयेषामपि गवादिशब्दार्थभेदेऽपि प्रत्युच्चारणं प्रतिव्यक्तिं चैक एव गोशब्द इति दर्शनम्।

केचित्तु शब्दस्य कार्यत्वे नित्यतायां वा शब्दनानात्ववादिनः। तथा हि—भिन्नेष्वर्थेषु व्यक्तिरूपेषु प्रयुक्ता गवादयः शब्दा भिन्ना एव। ते नैयायिकमत इव कार्याः स्युः, मीमांसकमत इव नित्या वेति ? इदमेव शब्दनानात्वदर्शनं मूलीकृत्य अर्थमर्थं प्रति प्रत्यर्थमिति व्युत्पत्त्या प्रत्यर्थं शब्दाभिनिवेश इति भाष्यसिद्धान्तः।

तथा च शब्दनित्यत्ववादेऽपि शब्दनानात्ववाद आवश्यकः, अर्थभेदेन शब्दभेदस्य घटपटादिशब्देषु भिन्नार्थेषु भिन्नरूपेषु च दर्शनादिति।

अयं भावः—ये केचित् शब्दस्य कार्यत्वे नित्यतायां वा शब्दैकत्ववादिनः, तेषां शब्द-नित्यतायामत्यन्तमुख्यमेकत्वम्। शब्दस्य कार्यत्वे तु सकृदुच्चरितस्य वर्णस्य पदस्य वा पुनरुच्चारणे स एवायमित्यव्यभिचारिप्रत्ययाभेद उत्पद्यमानः शब्दैकत्वं प्रकल्पयतीति शब्दकार्यत्ववादे उपचरित-मेकत्वम्। शब्दैकत्वदर्शनं चाश्रित्य 'एकत्वादकारस्य सिद्धम्' इति भाष्यं प्रवृत्तम्।

ननु शब्दस्य वर्णरूपस्य पदरूपस्य वा कालेन शब्दान्तरेण वा व्यवधानं दृश्यत इति तेन व्यवधानेन शब्दस्य नानात्वमायाति। न ह्येकस्य नित्यस्य विभोः शब्दस्य कालेन शब्दान्तरेण वा व्यवधानं सम्भवतीति चेत्, न; तत्र कालशब्दाभ्यां शब्दोपलब्धेरेव व्यवधानम्, न तु वर्णरूपस्य पदरूपस्य वा शब्दस्येत्यभ्युपगमात्।

तथा हि—सन्निहितेऽभिव्यक्तिनिमित्तेऽकार उपलभ्यते, विनष्टे त्वभिव्यक्तिनिमित्तेऽकारो

**पदभेदेऽपि वर्णानामेकत्वं न निवर्तते।**
**वाक्येषु पदमेकञ्च भिन्नेष्वप्युपलभ्यते ।।७१।।**

---

अर्कः, अश्वः, अर्थ इति भिन्नेष्वप्येतेषु पदेषु कालशब्दान्तराभ्यां व्यवहितोपलब्धिरभिव्यक्तिनिमित्तासन्निधानात् तिरोभूतरूपः, निमित्तभेदाद् भिन्नेषु प्रयोक्तृषु देशपृथक्त्वे भेदरूपेण प्रत्यवभासमान एक एवायमकारश्छायादर्शजलादिप्रतिबिम्बभेदकल्पेन लोके प्रयुज्यते। वाक्येषु च प्रविवेकि निर्ज्ञातार्थभेदं वा यावत् तुल्यरूपं पदं गौरक्ष इति सर्वं तदेकम्। नामाख्यातभेदेऽपि चैकमेवाक्ष्यश्च इत्येवं प्रकारं पदम् ।।७१।।

---

नोपलभ्यत इति। शब्दस्य देशपृथक्त्वदर्शनमपि न शब्दभेदसाधकम् एकस्मिन्नपि देशपृथक्त्वदर्शनात्।

तद्यथा—भिन्नदेशेष्वपि द्रव्यादिषु युगपदुपलभ्यमाना सत्ता नैकत्वं जहाति, भिन्नदेशेष्वपि जलमुकुरादिषु युगपदुपलभ्यमानं सूर्यबिम्बं नैकत्वं जहाति। बिम्बातिरिक्तं तु प्रतिबिम्बं नास्त्येवेत्येतदभिप्रेत्येदम्।

शब्दनानात्वपक्षेऽपि कार्येष्वपि शब्देष्ववश्यं गवादिशब्दस्य पुनः पुनरुच्चारणे शाब्दबोधरूपव्यवहारोपपत्तये औपचारिकं शब्दैकत्वमाश्रयणीयम्। यतो योऽयं गवादिशब्देभ्यो गवाद्यर्थबोधरूपः शब्दो व्यवहारः, नासौ गोशब्दैकत्वं विना घटते। गोशब्दभेदे ह्येकेनोच्चारिते गोशब्दे गृहीतशक्तिकस्तदन्योच्चारितेन गोशब्देन न प्रतिपद्येतार्थम्, अगृहीतसङ्केतत्वात् तस्येति।

भिन्नार्थानां तु पदानां भिन्नपदस्थानां वर्णानां चात्यन्तनानात्वं शब्दनित्यत्वपक्षे शब्दकार्यत्वपक्षे वा नानात्ववादिभिरभ्युपगम्यतें।

तद्यथा—गोशब्दस्य नानार्थस्य पृथिव्यादिषु नवस्वर्थेषु नवशो गोशब्दाः प्रयुज्यन्ते, गोपिण्डेषु तु सर्वेष्वेक एव गोशब्दः, तथा प्रत्येकमपि गवादिष्वेक एव गोशब्द इति ।।७०।।

यद्यपि शास्त्रेषु शब्दैकत्ववादः शब्दनानात्ववादश्चेति द्वयमप्यस्ति, तथापि शब्दैकत्ववाद एव ममाभिमत इति वर्णयन्नाह—**पदभेदेऽपि वर्णानामिति**।

अयमर्थः—यतः पदभेदेऽपि 'गौः, गवयः, गगनम्' इत्यादौ गकारादीनां वर्णानामेकत्वबुद्धिर्न निवर्तते, त एवेमे गकारादयो वर्णा इति प्रत्यभिज्ञानात्। अतो भिन्नेष्वपि पदेषु वर्णानामेकत्वमेवेति स्थितम्। एवं भिन्नेष्वपि वाक्येषु 'गामानय, गां बधान' इत्यादिषु पदञ्च वर्णवत्, पदमपि एकमुपलभ्यते एकत्वेनोपलभ्यते, तदेवेदं पदमिति प्रत्यभिज्ञानात्। तस्माद् भिन्नार्थानां भिन्नवाक्यस्थानामपि पदानामेकत्वमेवेति सिद्धान्त इति।

अयं भावः—'अर्कः, अश्वः, अर्थः' इति भिन्नेष्वप्येतेषु पदेष्वेक एवायमकारश्छायादर्शजलादिप्रतिबिम्बभेदसदृशेन देशभेदेन प्रत्यवभासमानो लोके प्रयुज्यते। तथा हि— छाया नाम न किञ्चिद् वस्त्वन्तरम्, स एव त्वेकः पुरुषो भिन्नदिक्स्थः प्रदीपभेदाद् भिन्न इव दृश्यते। एवमादित्यादिप्रतिबिम्बस्यापि वस्तुतो बिम्बानतिरेकादेकत्वेऽप्यादर्शजलादिरूपोपाधिरूपनिमित्तभेदाद् भेदेनोपलब्धिः, तथा पदभेदे वर्णानामेकत्वेऽपि भिन्नेषु प्रयोक्तृषु युगपद्भिन्नदेशपरिग्रहेण

**न वर्णव्यतिरेकेण पदमन्यच्च विद्यते।**
**वाक्यं वर्णपदाभ्यां च व्यतिरिक्तं न किञ्चन।।७२।।**

---

न हि क्रमजन्मभिरुच्चरितप्रध्वंसिभिरयुगपत्कालैः सावयवैर्वर्णैः शब्दान्तरारम्भः सम्भवतीति वर्णमात्रमेव पदम्। तेषामपि सावयवत्वात् क्रमप्रवृत्तावयवानामाव्यवहारविच्छेदात् तुरीयतुरीयकं किमप्यव्यपदेश्यं रूपं व्यवहारातीतमस्तीति न वर्णपदे विद्येते। वर्णपदाभावे कुतो वाक्यस्य व्यतिरेकः ?

तथा चोक्तम्—'अनित्यत्वमेवं सम्प्राप्नोति' इति। समुदायाभावादुपगृहीतार्थ उपगृहीतो वा न कश्चिच्छब्दो विद्यत इति ॥७२॥

---

स्थितेषु स्थानकरणाभिघातजन्या ये वर्णाभिव्यक्तिनिमित्तभूता ध्वनयस्तेषां देशभेदात् स्वरूपभेदाच्च वर्णानामपि देशभेदेन प्रत्यवभासः।

किञ्च, यदिदं कालव्यवधानं शब्दान्तरव्यवधानञ्च वर्णानां भेदसाधकमुपन्यस्यते, यथा अर्क इत्यत्राद्याकारस्यान्त्याकारस्य च रेफककाराभ्यां मात्राकालेन च व्यवधानाद् भेदः, न ह्येकस्य वस्तुनः कालव्यवधानं वस्त्वन्तरव्यवधानं वा सम्भवति। एवं करकादिपदे ककारादिवर्णानां कालव्यवधानं वर्णान्तरव्यवधानं चोदाहार्यम्। तदप्येकस्यैव वर्णस्योपलब्धेरेव व्यवधानम्, न तु वर्णस्य। स्वाभिव्यक्तिनिमित्तभूतध्वनीनामसन्निधानात् तु तदानीं तिरोभूतरूपो वर्ण इति कालशब्दान्तराभ्यां व्यवहित इव लक्ष्यते। यथा च पदभेदेऽपि वर्णानामेकत्वम्, तथा वाक्यभेदेऽपि पदानामेकत्वमेव। तथा हि— वाक्येष्वपोद्धारे क्रियमाणे यान्येतानि पदानि विविच्यन्ते = पृथक् क्रियन्ते, तेषां सर्वेषामेकत्वमेव। यथा वा निर्ज्ञातार्थभेदं यावत् तुल्यरूपं पदं गौरक्ष इति सर्वं तदेकम्।

अयं भावः—यथा गोशब्दः पृथिव्यादिषु नवस्वर्थेषु वर्तते, किन्तु य एव गोशब्दः पृथिव्यादिषु, स एव भूयः सास्नादिमति प्रयुज्यते, नान्यः, अबाधितप्रत्यभिज्ञाविषयत्वात्। पृथिव्यादिषु प्रयुक्तस्यैव गोशब्दस्य सास्नादिमति भूयः = पुनः प्रयोगस्तु सकलगोशब्दानामेकत्वेनोपग्रहाय। नवस्वर्थेषु प्रयुक्तानां गोशब्दानामेकत्वे कारणं तु तेषां श्रुत्यभेद एकरूपेणैव श्रावणप्रत्यक्षविषयत्वरूपः, तथाऽक्षशब्दोऽपि विभीतकादिषु भिन्नार्थः; किन्तु भयो भूय उच्चार्यमाणोऽप्येक एव विभीतकशब्दो भिन्नार्थानामपि नामपदानां कयाचिन्मात्रयाऽर्थसामान्यं भवत्येव। यथा पृथिव्यादीनां नवानां गोपदार्थानां द्रव्यत्वसत्त्वादिनाऽर्थसामान्यम्। नामाख्यातयोस्तु न कयाचिन्मात्रयाऽर्थसामान्यम्, किन्तु तत्रात्यन्त-विलक्षणोऽर्थः, यथाऽक्षि अश्व इति। अत्र 'अक्षि' इत्यक्षतेरशेर्वा लटि शपि लुकि च कृते सिपि रूपम्। अदेर्वा लुङि घस्लृभावेऽडागमे कर्मण्युत्तमैकवचने मन्त्रत्वाच्च्लेर्लुकि रूपम्। अश्व इति तु श्वयतेर्लुङि मध्यमपुरुषैकवचनेन 'अगमः' इत्यर्थकम्। अक्षि अश्व इत्यनयोर्नामत्वं तु प्रसिद्धमेव। तथा च नामत्वेन आख्यातत्वेन च भेदेऽप्येकमेव 'अक्षि' 'अश्वः' इत्येवंप्रकारकं पदम् ॥७१॥

तदेवं वर्णानां पदानां चैकत्वे स्थिते यतो वर्णा एव पदं पदान्येव च वाक्यम्, ततो वर्णपदाभ्यां वाक्यस्य न व्यतिरेकः, वाक्यान्तराद् व्यतिरेकतत्त्वेऽपीत्याह—**न वर्णव्यतिरेकेणेति।**

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ।।७३।।**

अपर आह—

वर्णप्रतिपत्तिनिर्भासाभ्यो बह्वीभ्यः प्रतिपत्तिभ्यः समुदायविषयस्य प्रयत्नस्य भेदात् सत्यपि पदाभिव्यक्तिविषयस्य ध्वनेर्भेदे सादृश्यानुगमाद् वर्णविभागप्रतिपत्त्युपाया पदे प्रतिपत्तिरुत्पद्यते।

अयमर्थः—पदञ्च वर्णव्यतिरेकेणान्यद् वर्णभेदरूपान्यत्वविशिष्टं न विद्यते, किन्तु वर्णा एव पदमिति। तदुक्तं ब्रह्मसूत्रशाङ्करभाष्ये—'वर्णा एव शब्द इति भगवानुपवर्षः' ( अ० १, पा० ३, अधि० ९, सू० २८ ) इति। वाक्यञ्च = वाक्यमपि वर्णपदाभ्यां व्यतिरिक्तं किञ्चन किमपि नेति।

अयं भावः—न हि वर्णरूपैरवयवैः शब्दान्तरस्य पदरूपस्यावयविन आरम्भः सम्भवति, ध्वनि-रूपाणां वर्णानां स्थानकरणाभिघातात् पौर्वापर्यक्रमेण जायमानत्वात्, क्रमेण जायमानत्वेऽप्युच्चरित-प्रध्वंसित्वेनायुगपत्कालत्वात्। यतो युगपदवस्थितानामेवावयवानां द्रव्यान्तरारम्भकत्वं दृष्टमुपपद्यते च।

किञ्च, पदावयवत्वेन सम्भावितानां वर्णानामपि सावयवत्वात् तैः पदारम्भो न सम्भवति। तथा हि—वर्णानामप्यवयवा बुद्ध्या कल्पनारूपया पृथक् कर्तुं शक्यन्ते, करेण यन्त्रेण वा पृथक् क्रियासम्भवाभावेऽपि। यथा 'आ ऐ औ ऋ' इत्यादीनामवयवाः। एवं तदवयवानामपि बुद्ध्या प्रविवेचनम्। एवं तदवयवानामपि। सैषाऽवयवानां क्रमधारया बुद्ध्या पृथक्क्रियाप्रवृत्तिस्तावत्कालं यावदवय-वानामपकर्षपर्यन्तः; किन्तु तत्र 'इदं नामैतदवयवस्य भागः' इति व्यवहारस्य विच्छेदः, स चापकर्ष-पर्यन्तरूपां चरमकाष्ठामाप्तो भागस्तुरीयतुरीयपदेनोच्यते। तुरीयस्य तुरीयो भागः षोडशी कला तद्रूपः।

यद्वा तुरीयशब्दोऽत्रापकृष्टत्वादग्राह्यपरः, दृश्यते चाग्राह्ये निर्विशेषे आत्मनि तुरीयशब्दस्य प्रयोगो माण्डूक्ये। ततश्चात्र "प्रकारे गुणवचनस्य" ( पा० ८/१/१२ ) इति द्विरुक्तिस्तुरीयतुरीयकमिति। अग्राह्यात्मसदृशमित्यर्थः। तच्च रूपं किमपि केनापि प्रकारेणाव्यपदेश्यं व्यवहारातीतमस्ति, अतः परम्परया तदारब्धानां वर्णानां कत्वखत्वादिना व्यपदेश्यानां न वस्तुसत्त्वम्, अवयवसंस्थानविशेष-रूपस्यावयविनोऽवयवानतिरेकात्। तदेवं वर्णासत्त्वे तदारब्धस्य पदस्याप्यसत्त्वम्। वर्णपदाभावे च न ताभ्यां वाक्यस्य व्यतिरेकः। अतो वाक्यस्य पदानारब्धस्य नित्यत्वमखण्डत्वञ्च स्थितम्।

एतदेवोक्तं तत्र तत्र भाष्ये—'अनित्यत्वमेव सम्प्राप्नोति' इति। एवं वाक्यस्य वर्णपदसमुदायरूप-त्वात्। 'इदं पदमेतदर्थसम्बन्धि' इति, 'इदं वाक्यमेतद्वाक्यार्थसम्बन्धि' इत्येवमुपगृहीतार्थः, 'इदं पदमेतद्वर्णव्यूहवत्' इति, 'इदं वाक्यमेतत्पदकदम्बकवत्' इत्येवमुपगृहीतो वा पदरूपो वाक्यरूपो वा कश्चित् शब्दो वस्तुभूतो न विद्यते, नित्येऽखण्डेऽव्यपदेश्यरूपे च वाक्ये वाक्यार्थसम्बन्धस्य वर्णपदसम्बन्धस्य चासम्भवात्। प्रागसम्बद्धयोर्हि विशिष्टबुद्धिनियामकः सम्बन्धोऽभ्युपेयते, अविक्रिये च

तत्त्वक्रममपूर्वापरमेकमेव नित्यमभेद्यं वर्णतुरीयोपपादित इवैकात्मा। वर्णानां त्वव्यपदेश्यानि व्यवहारातीतानि भिन्नरूपाभिमतान्यकारादीनां तुरीयाणि प्रतिपादकानि कल्पितानि। तेन तेषां सुज्ञानतरमेकत्वं प्रसिद्धं शास्त्रव्यवहारे। वाक्यस्य चैकानेकपदस्वरूपस्यार्थे प्रयोगाद् वाक्यप्रतिपत्त्युपायभूता पदे प्रतिपत्तिरुत्पद्यते। अतत्त्वभूतास्तस्मिन्नेव वाक्यात्मनि वर्णपदरूपनिर्भासाः क्रमवत्यो बुद्धय उत्पद्यन्ते।

तस्मादेवंभूताद् वाक्यादभेद्यान्निर्भागाच्छब्दात्मनो वर्णानां पदानां चात्यन्तमविवेक इति ॥७३॥

---

नित्ये वाक्ये सम्बन्धोत्पत्तिरूपाया विक्रियाया अभावात्, नित्यस्य चानुपदोक्तरीत्या सम्बन्धत्वासम्भवादिति ॥७२॥

नानात्वदर्शनमधिकृत्यापर आह—**पदे न वर्णा विद्यन्त इति।**

अयमर्थः—सत्यपि पदेषु वर्णानामपोद्धारकल्पने वस्तुतः पदे वर्णा न विद्यन्ते। किञ्च, वर्णेष्ववयवानामपोद्धारकल्पनायामपि वर्णेषु च = वर्णेष्वपि अवयवा वस्तुभूता न सन्ति। एवं वाक्यात् कल्पनयाऽपोद्धृतानां पदानां ततोऽत्यन्तं प्रविवेकः कश्चन वस्तुभूतो नास्ति। एवं वर्णानां पदानवयवत्वे पदानाञ्च वाक्यानवयवत्वे वर्णानां चाप्यवयवाभावेऽखण्डा नित्या एव वर्णाः, पदानि वाक्यानि च तथाविधान्येवेति परस्परं वर्णपदवाक्यानां भेदः। पदे वाक्ये चापोद्धृतानां वर्णानां पदानाञ्च पदवाक्यभेदेन भेदः। सति तु वर्णपदवाक्यानां परस्परमवयवावयविभावे तेषामेकत्वदर्शनं सम्भाव्येतापि, न त्वेतदस्ति।

अयं भावः—सन्ति तावद् वर्णाः पदवाक्यानवयवाः स्वतन्त्राः, तद्विवक्षानिष्पादितैस्तु ध्वनिभिरभिव्यक्तानां तेषां बुद्धिरुपजायते, सा चान्या। सन्ति च पदेषु वाक्येषु चापोद्धारकल्पनयाऽपोद्धृता कल्पिता वर्णाः। पदे चाभिव्यञ्जनीये तद्विवक्षाया अभावेऽपि तदविवक्षानिष्पादितध्वन्यभिव्यक्तात् पदादपोद्धारपरिकल्पनाऽपोद्धृतवर्णविषयाऽन्या बुद्धिरुपजायते। साा च बुद्धिः स्वाभिव्यञ्जकध्वन्यभिव्यक्तस्वतन्त्रवर्णबुद्धिवद् निर्भासते। ताभ्यश्च बह्वीभ्योऽपोद्धृतवर्णप्रतिपत्तिभ्यस्तादृशवर्णसमुदायरूपस्य पदस्य प्रतिपत्तिर्भवतीति स्थितिः।

यद्यपि च पदेऽभिव्यञ्जनीयेऽपोऽद्धृतवर्णानां विवक्षा नास्ति, तथापि तत्प्रतिपत्तेः पदप्रतिपत्त्युपायत्वात् तदभिव्यक्त्यनुकूला ध्वनयस्तत्र जायन्ते। तेभ्यस्तु बहुभ्यो ध्वनिभ्यो वर्णसमुदायरूपस्य पदस्याभिव्यक्त्यनुकूलो महाध्वनिरेक उपजायते।

एवं तेभ्योऽपि पदध्वनिभ्य एको वाक्यध्वनिः पदसमुदायरूपस्य वाक्यस्याभिव्यक्त्यनुकूलः। तथा च स्वतन्त्रवर्णाभिव्यक्तिनिमित्तध्वनीनां सदृशा एवापोद्धृतवर्णाभिव्यक्तिनिमित्तभूता ध्वनयः, स्वतन्त्रवर्णप्रतिपत्तीनां सदृश्य एव च पदेष्वपोद्धारकल्पनयाऽपोद्धृतकल्पितवर्णप्रतिपत्तय इत्येवं सादृश्यानुगमाद् वर्णविभागप्रतिपत्तिभ्यः पदे प्रतिपत्तिरुत्पद्यते।

एवञ्च पदप्रतिपत्त्युपायभूता येऽपोद्धृता वर्णास्तद्गतं भेदमुपेये पदे निवेश्य पदमेव भेदवत् प्रतियन्ति।

वस्तुतस्तु पदस्य स्वरूपमक्रममपूर्वापरमेकमेव वर्णप्रविभागशून्यं नित्यमभेद्यम्। एकमेका-

**भिन्नं दर्शनमाश्रित्य व्यवहारोऽनुगम्यते ।**
**तत्र यन्मुख्यमेकेषां तत्रान्येषां विपर्ययः ।।७४।।**

---

आचार्या हि परस्मिन्नक्रमेऽन्तःसन्निवेशिनि शब्दतत्त्वे प्रत्यधिकरणमागमभेदपरिग्रहेण भिन्नानि दर्शनानि श्रिताः शास्त्रव्यवहारमनुगच्छन्ति ।

तद्यथा—श्रुत्यभेदादनेकार्थत्वेऽप्येकशब्दत्वम्, अर्थभेदादेकश्रुतित्वेऽप्यनेकशब्दत्वमिति ।

तत्र चैकेषामौपचारिको भेदो मुख्यमेकत्वम् । अन्येषां तु पृथक्त्वं मुख्यं व्यावहारिकमेकत्वमिति ।

---

त्मकमपि पदं स्वापकृष्टवर्णरूपभागोपपादितमिव प्रतीयते । तदिदमुक्तं हरिणा—'तत्तु अक्रममपूर्वापरमेकमेव नित्यमभेद्यं वर्णतुरीयोपपादित इवैकात्मा' इति । वर्णानां त्वकारादीनां प्रतिपत्त्युपायभूतान्यवयवस्वरूपाण्यव्यपदेश्यानि व्यवहारातीतानि वर्णेभ्यो भिन्नरूपत्वेनाभिमतानि तुरीयाणि = अपकृष्टानि 'आ ऐ औ ऋ ऌ' इत्यादिषु स्फुटं प्रतीयमानानि कल्पितानि । तेन येषां वर्णानां वस्तुतोऽवयवभेदाभावेन प्रत्युच्चारणं प्रतिपदं सुज्ञानतरमेकत्वं प्रसिद्धञ्च शास्त्रव्यवहारे व्याकरणभाष्ये द्वितीयाह्निकादौ । वाक्यस्य च द्वारमित्येकपदरूपस्य 'द्वारं पिधेहि' इति चानेकपदरूपस्य प्रवृत्तिनिवृत्तिरूपव्यवहारसिद्धये प्रयोगाद् वाक्यप्रतिपत्त्युपायभूतापोद्धारकल्पनया पदे प्रतिपत्तिरुत्पद्यते । तथा च तस्मिन्नेव वर्णपदप्रविभागशून्ये एकस्मिन् वाक्यात्मन्युच्चार्यमाणेऽपोद्धारकल्पनया वर्णपदरूपनिर्भासाः क्रमवत्यो बुद्धय उत्पद्यन्ते ।

तस्मादेवंभूताद् वाक्यात् सत्यभिधेयनिबन्धनभेदाभावे प्रत्युच्चारणमभेद्याद् निर्भागाच्छब्दात्मनो वर्णानां पदानाञ्च कल्पितानामत्यन्तमविवेकः । यथा रज्जौ कल्पितानां सर्पादीनां रज्जुतोऽत्यन्तमविवेकः, तथा च वर्णपदवाक्यानामखण्डत्वेन परस्परमवयवावयविभावशून्यत्वेन शाखावृक्षादिवदेकत्वसम्भावना निरस्तेति शब्दनानात्वदर्शिनां हृदयम् । इदञ्च सर्वमत्रत्यहरिटीकाऽवधानपर्यालोचनमूलकम् ।।७३।।

इमे द्वे अपि एकत्वनानात्वदर्शने आश्रित्य शास्त्रे व्यवहारः क्रियत इत्याह—**भिन्नं दर्शनमाश्रित्येति** ।

अयमर्थः—शब्दानामेकत्वमिति शब्दानां नानात्वमिति परस्परं भिन्नं दर्शनं लक्ष्यसिद्धयेऽनभिनिवेशेनाश्रित्याचार्यैः शास्त्रीयो व्यवहारोऽनुगम्यते आश्रीयते क्रियत इत्यर्थः ।

कथमिमे भिन्ने परस्परविरोधिनी दर्शने एकत्र शास्त्रे समाद्रियते इत्याशङ्कायामाह—'तत्र यन्मुख्यमेकेषां तत्रान्येषां विपर्ययः' इति । येषां मते शब्दैकत्वं मुख्यम्, तत्र शब्दैकत्वेऽन्येषां शब्दनानात्वदर्शिनां विपर्ययो भ्रान्तिरूपा शब्दैकत्वरूपा बुद्धिरारोपितार्थविषया । एवं येषां शब्दनानात्वं मुख्यम्, तत्रापि योजनीयम् । एकत्वे मुख्ये नानात्वमुपचरितम्, नानात्वे च मुख्ये एकत्वमुपचरितमिति फलितम् ।

**स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।**
**ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ।।७५।।**

---

तथा ह्युक्तम्—"एकश्च शब्दो बह्वर्थोऽक्षाः पादा माषाः" इति । 'तथा ग्रामशब्दोऽयं बह्वर्थः' इत्युक्त्वा भेदेनोपसंहारं करोति—"तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तस्येदं ग्रहणम्' इति ॥७४॥

इह नित्यत्वादात्मतत्त्वस्य स्फोटानां स्थितौ नास्ति कालपरिमाणवृत्तेः स्वल्पोऽपि व्यापारः । ध्वनिना तु संसृष्टं स्फोटस्य स्वरूपमुपलभ्यते यस्मात् तस्माद् ध्वनेः स्थितिकालः स्फोटोपलब्धिरूपः परिवर्तते । तेन च स्फोटविषयेण ग्रहणेनोपाधिना भिन्नकालेन प्रकल्पितभेदाः स्फोटस्य द्रुतमध्यमविलम्बिता वृत्तयस्त्रिभागोत्कर्षेण युक्ताः समाख्यायन्ते ॥७५॥

---

अयं भावः— यद्यपि योऽसौ ज्ञानादव्यतिरिक्तः परः शब्दस्तस्यैव परमार्थतः शब्दरूपत्वम्, वक्ष्यति चाग्रे—"वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।" ( वा० प० १/१०८ ) इति ।

बाह्यस्य तु शब्दस्य ध्वनिरूपस्य तदभिव्यञ्जकस्य तदनुकारित्वादारोपितं शब्दत्वम्, तथापि परस्मिन् चिद्रूपेऽक्रमेऽन्तःसन्निवेशिनि = अन्तःसमुपलभ्यमाने शब्दतत्त्वे दुरधिगमे ध्वन्यभिव्यक्ते ध्वनिधर्मोपग्रहेण प्रतीयमाने प्रतिसिद्धान्तं सम्प्रदायभेदपरिग्रहेण भिन्नानि यानि दर्शनानि, तानि श्रिता आचार्याः शास्त्रीयं व्यवहारमनुगच्छन्ति । शब्दविषयकेषु भिन्नेषु दर्शनेष्वेक एव पन्था लक्ष्यसिद्धये आस्थातुं न शक्य इत लक्ष्यसिद्ध्यनुकूलशास्त्रीयव्यवहारोपपत्तये सर्वाणि दर्शनान्याश्रितानि ।

तद्यथा—अर्थभेदेऽपि श्रुत्यभेदात् = एकजातीयश्रावणप्रत्यक्षविषयत्वात्, एकजातीयध्वन्यभिव्यङ्ग्यत्वाद् वा एक एव हरिशब्दो नानार्थ इति केचिदाचार्या मन्वते ।

केचित्तु श्रुत्यभेदेऽप्यर्थभेदादनेक एव हरिशब्दा इति ।

अयमेषामाशयः—शब्दार्थयोरभेदलक्षणे सम्बन्धे स्थित एकस्य शब्दस्य परस्परभिन्नसर्वार्थरूपता न युगपत् सम्भवतीत्येकार्थोपग्रह एवैकस्य शब्दस्यैकदा इति रीत्या तस्यार्थाकारस्य स्वीकारादन्यत्वं प्रत्यर्थं हरिशब्दस्येति ।

ये त्वेकत्ववादिनस्तेषामयमाशयः—एकैकार्थप्रतिपादनेन कार्येणेदमवसातुं शक्यम् । नानार्थेष्वेकैव योग्यतालक्षणा हरिशब्दस्य शक्तिरिति । योग्यतालक्षणशक्त्यैक्येन च शब्दैक्यसिद्धिरिति । एवं शब्दविषये दर्शनभेदे स्थिते एकेषामौपचारिकः शब्दभेदः, शब्दैकत्वं तु मुख्यम् । अन्येषां तु पृथक्त्वं मुख्यम्, व्यावहारिकम् = व्यवहारार्थकल्पितम् एकत्वमिति ।

तथा ह्येकत्ववादमभिप्रेत्योक्तं भाष्ये—"एकश्च शब्दो बह्वर्थोऽक्षाः पादा माषाः" इति । अत्राक्षशब्द एको विभीतकस्य, इन्द्रियस्य, रथाक्षस्य, द्यूताक्षस्य, पाशस्य च वाचकः । एवं पादशब्दः चरणस्य, श्लोकपादस्य, द्रव्यचतुर्थांशस्य, उन्मानस्य च वाचकः । तथा माषशब्दो धान्यविशेषस्य, उन्मानविशेषस्य, त्वग्दोषविशेषस्य च वाचकः । तथा च नानार्थकोशः—'माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोषभेदयोः' इति ।

**स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।**
**प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ।।७६।।**

---

यद्येवं ह्रस्वदीर्घप्लुतेष्वपि ध्वनिरेव कालभेदहेतुः । ''तपरस्तत्कालस्य'' ( पा० १/१/९० ) इति दीर्घप्लुतयोर्यथैव, वृत्तिभेदेऽपि तथैव तत्कालव्यपदेशप्रसङ्गः । ''द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात्'' इत्येतस्मिन् पर्यनुयोगे प्रसक्ते प्रविधीयते ।

इह द्विविधो ध्वनिः—प्राकृतो वैकृतश्च । तत्र प्राकृतो नाम येन विना स्फोटरूपमनभिव्यक्तं न परिच्छिद्यते । वैकृतस्तु येनाभिव्यक्तं स्फोटरूपं पुनरविच्छेदेन प्रचिततरकालमुपलभ्यते । एवं हि सङ्ग्रहकारः पठति—

शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ।।

---

तथा नानात्वदर्शनमभिप्रेत्य—'ग्रामशब्दोऽयं बह्वर्थः' इत्युक्त्वा भेदेनोपसंहारं करोति 'तद् यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तस्येदं ग्रहणम्' इति । अत्र नान्येषां ग्रामशब्दानामत्र ग्रहणमिति प्रतीत्या शब्दभेदः प्रतीयते ।।७४।।

शब्दस्वरूपस्य शब्दप्रत्ययस्य च प्रतिपादनप्रसङ्गेनानुषङ्गिकं शब्दस्वरूपे एकत्वानेकत्वदर्शने, जातिव्यक्तिभेदेन संज्ञासंज्ञिभावभेद इत्यादिकं समाप्य सामान्येन यदुक्तम्—'नित्याः शब्दार्थसम्बन्धाः' इति, तत्र नित्यस्य कालभेदाभाव इत्येतदुपदर्शनार्थं प्रसङ्गेन वृत्तिभेदमाह—**स्फोटस्याभिन्नकालस्येति** ।

अयमर्थः—चिद्रूपज्ञानतत्त्वस्यात एव नित्यत्वादभिन्नकालस्यापि स्थानकरणभिघातजन्यस्वाभिव्यञ्जकध्वनिकालानुपातिनस्तादृशध्वनिकालानुबन्धेन प्रतीयमानस्य ग्रहणोपाधिभेदेन, ग्रहणं बुद्धिस्तस्य भेदेन, यद्वा गृह्यतेऽभिव्यञ्जनद्वारा प्रतीयते शब्दो येनेति ग्रहणं ध्वनयः, तद्रूपोपाधिभेदेन । वस्तुतोऽभिन्नस्यापि स्फोटस्य वृत्तिभेदं प्रचक्षते शब्दैकत्ववादिन आचार्याः ।

अयं भावः—इह ज्ञानरूपतयात्मतत्त्वरूपस्य शब्दस्य नित्यत्वाद् जन्यानां परिच्छेदकं यत् कालरूपं परिमाणम्, तस्य या वृत्तिः क्रमयौगपद्यचिरत्वक्षिप्रत्वादिरूपा तस्या व्यापारः कालसंसृष्टे वस्तुनि कार्यरूपे क्रमयौगपद्यचिरत्वक्षिप्रत्वाद्यापादनं स स्वल्पोऽपि व्यापारः स्फोटानां स्थितौ नास्ति । यतो नित्यानां नास्ति कालवृत्त्यनुग्रहः । चिरं क्षिप्रमित्यादयश्च कालकृता व्यपदेशाः । ते च नित्ये स्फोटे न सम्भवन्ति; किन्तु स्फोटाभिव्यञ्जकेषु ध्वनिषु स्थानकरणाभिघातजन्येषु । यतस्तु ध्वनिनाऽभिव्यञ्जकेन संसृष्टमभिव्यङ्ग्यस्य स्फोटस्य स्वरूपमुपलभ्यते, तस्मात् क्रमयौगपद्यचिरत्वक्षिप्रत्वादियोगो ध्वनेः स्थितिकाल आरोपिततादृशध्वनिधर्मवत् स्फोटोपलब्धिरूपवान् परिवर्तते = तद्रूपवत्तया परिवर्तमानः प्रतीयते, तेन च तादृशध्वनिधर्मवत्स्फोटविषयेण तादृशस्फोटोपलब्धिरूपेण ग्रहणेन स्फोटाभिव्यञ्जकध्वनिरूपेण वा ग्रहणेन उपाधिना भिन्नकालेन प्रकल्पितभेदा द्रुतमध्यमविलम्बिना वृत्तयस्त्रिभागोत्कर्षेण युक्ता ध्वनिनिष्ठा अपि स्फोटस्य समाख्यायन्ते ।

तत्र तथा सन्निवेशविशेषात् तुल्यमात्राविभागपरिमाणानि गर्गादिवाक्यानि कानिचिदुच्चारणावृत्तिप्रचयग्राह्याणि, कानिचिदपचितरूपावृत्तिग्राह्याणि। तथा स्वभावभेदादपचितध्वनिद्योत्यो ह्रस्वः। तावताऽभिव्यक्तिनिमित्तेन स्वरूपस्य ग्राहिका बुद्धिस्तत्रोत्पद्यते। प्रचितध्वनिद्योत्यस्तु दीर्घः। प्रचिततरध्वनिप्रतिपाद्यस्तु प्लुतः। स च प्राकृतध्वनिकालो व्यतिरेकाग्रहणादध्यारोप्यमाणः स्फोटे स्फोटकाल इत्युपचर्यते शास्त्रे ॥७६॥

---

अयं भावः—अभिन्नेऽपि स्फोटे ता एव बुद्धय उपाधिभूतास्त एव ध्वनयो वा उपाधिभूताः, कालभेदेनावर्तमाना भिद्यन्ते, तत्कृतश्चायं स्फोटस्याभिन्नकालस्यापि द्रुतादिवृत्तिभेदः। द्रुतादिवृत्तिषु च वर्णानां ध्वनिरूपाणां त्रिभागेनोत्कर्षो भवति। तथा हि—द्रुतायां यत्परिमाणा वर्णास्ते त्रिभागे नोत्कृष्यन्ते मध्यमायाम्, ततोऽपि त्रिभागेनोत्कृष्यन्ते विलम्बितायाम्। तदेवं ध्वनिधर्मा अपि द्रुतादिवृत्तयो ग्रहणोपाधिभेदेन स्फोटस्य समाख्यायन्त इति ॥७५॥

ननु यद्येवं ह्रस्वदीर्घप्लुतेष्वपि ध्वनिरेव कालभेदहेतुः, स्फोटस्य त्वभिन्नकालस्य न वस्तुतः कालभेदप्रयुक्तानि ह्रस्वत्वादीनि धर्माः। तथा च यथैव दीर्घप्लुतयोस्तत्कालव्यपदेशप्रसङ्गेन 'तपरस्तत्कालस्य' ( पा० १/१/९० ) इत्यस्य प्राप्तिः, तथैव द्रुतादिवृत्तिभेदेऽपि तत्कालव्यपदेशप्रसङ्गेन 'तपरस्तत्कालस्य' इत्यस्य प्राप्तिः। एवञ्च "अतो भिस ऐस्" ( पा० ७/१/९ ) इति दीर्घप्लुतयोरपि प्राप्नोतीति दीर्घत्वप्लुतत्वयोर्ध्वनिधर्मयोः शब्दभेदाप्रयोजकत्वादित्यतिप्रसङ्गः। वृत्तिभेदेऽपि च प्राप्नोतीति "द्रुतायां तपरकरणे मध्यविलम्बितयोरुपसंख्यानं कालभेदात्" इति वार्त्तिकानुत्थानमित्येतस्मिन् पर्यनुयोगे प्राप्ते प्रतिविधीयते—इति।

अयमर्थः—नित्यत्वे नित्यः शब्द इत्यस्मिन् दर्शने शब्दस्य नित्यत्वे स्थिते ह्रस्वदीर्घप्लुतादिषु ह्रस्वत्वदीर्घत्वप्लुतत्वादिषु कालभेदप्रयुक्तेषु ध्वनिधर्मेष्वेव स्थितेषु ह्रस्वत्वादिधर्मप्रयुक्ताद् ध्वनेः स्वभावभेदात् स्वरूपभेदात् प्राकृतस्य शब्दाभिव्यक्तिनिमित्तस्य ध्वनेः कालः चिरक्षिप्रत्वादिधर्मयोगी चिरक्षिप्रादिपदव्यपदेश्यः स्फोटस्येत्युपचर्यते स्फोटसम्बन्धित्वप्रकारिका या आरोपात्मिका बुद्धिः स्फोटस्यायं काल इति तद्विषयो भवतीति।

अयं भावः—इह द्विविधो ध्वनिः, प्राकृतो वैकृतश्चेति। तत्र प्राकृतो नाम येन विनाऽनभिव्यक्तं स्फोटरूपं न परिच्छिद्यते। शब्दाभिव्यक्तिकाले ध्वनिस्फोटयोर्नीरक्षीरन्यायेन पृथक्त्वेनानुपलम्भात् तं स्फोटं तस्य ध्वनेः प्रकृतिं स्वभावमिव मन्यन्ते। ततश्च प्रकृतौ स्फोटस्वभावे स्फोटस्वरूपे भवो वर्तमानः प्राकृतो ध्वनिरिति व्युत्पत्त्या प्राकृतपदस्य शब्दाभिव्यक्तिनिमित्ते ध्वनौ प्रयोगः। तदुत्तरकालभावी तु तस्य कालभेदेन स्थितिभेदहेतुर्ध्वनिस्तस्माद् विलक्षण एवोपलभ्यत इति तेन ध्वन्यात्मना विकारापत्तिरिव स्फोटस्य भवतीति वैकृत उच्यते। विकृत एव वैकृत इति प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः। प्राकृतेन ध्वनिनाऽभिव्यक्तं स्फोटरूपं येन ध्वनिना प्रचितप्रचिततरं कालं पुनः पुनरविच्छेदेनोपलभ्यते, स वैकृतः। यावदयं ध्वनिर्नोपरमति तावदुपलभ्यते स्फोट इति हि स्थितिः। प्राकृतवैकृतध्वनिविषये एवं हि सङ्ग्रहकारः पठति—

शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते॥ इति।

**शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदं तु वैकृताः ।**
**ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ।।७७।।**

---

तद्यथा प्रकाशो जन्मानन्तरमेव घटादीनां ग्रहणे हेतुः, अवतिष्ठमानस्तु ग्रहण-प्रबन्धहेतुर्भवति, एवमभिव्यक्ते शब्दे ध्वनिरुत्तरकालमनुवर्तमानो बुद्ध्यनुवृतिं शब्दविषयां विषय( नाभि )व्यक्तिबलाधानादुपसंहरति । तस्मादुपलक्षितव्यतिरेकेण वैकृतेन ध्वनिना संसृज्यमानोऽपि स्फोटात्मा ताद्रूप्यस्यानध्यारोपात् शास्त्रे ह्रस्वादिवत् कालभेदव्यवहारं नावतरति ।।७७।।

---

अयमर्थः—शब्दाभिव्यक्तेः प्राग् जायमानः प्राकृतो ध्वनिः शब्दस्य ग्रहणेऽभिव्यक्तौ हेतुरिष्यते । शब्दाभिव्यक्तेरूर्ध्वं जायमानस्तु घण्टानादाभिस्वनवद् वैकृतो ध्वनिः शब्दस्य चिराचिरस्थितिभेदे निमित्तत्वं प्रतिपद्यत इति । तदेवं वृत्तिभेदे स्थिते मात्राविभागेन = अवयवविभागेन तुल्यपरिमाणान्यपि द्वात्रिंशदक्षरात्मकानि गर्गादिप्रोक्तश्लोकवाक्यानि कानिचिद् अप्रसन्नसन्निवेशवशाद् दुरवधाराणीत्या-वृत्तिप्रचयग्राह्याणि, कानिचित् तु तत्परिमाणान्येव प्रसन्नसन्निवेशवशादपचितरूपावृत्तिग्राह्याणि, यथा स्वभावभेदापचितध्वनिद्योत्यो ह्रस्वः । तावतैवाभिव्यक्तिनिमित्तेन ध्वनिना शब्दस्वरूपस्य ग्राहिका बुद्धिस्तत्रोत्पद्यते । प्रचितध्वनिद्योत्यस्तु दीर्घः । प्रचिततरध्वनिप्रतिपाद्यस्तु प्लुतः । स चायं स्फोटः कदाचिदपि न प्राकृतध्वनिव्यतिरेकेणोपलब्ध इति प्राकृतध्वनिकालं ह्रस्वत्वादिभेदप्रयोजकं स्फोटेऽध्यारोप्य स्फोटस्यायं काल इति व्यवह्रियते शास्त्र इति ह्रस्वत्वादीनामारोपितानां शब्दभेदप्रयोजकत्वाद् ''अतो भिस ऐस्'' (पा० ७/१/९ ) इति दीर्घप्लुतयोर्न प्रवर्तते । वैकृतो ध्वनिस्तु शब्दाभिव्यक्त्युत्तरकालभावी शब्दाद् व्यतिरेकेणोपलब्ध इति न तद्धर्मा द्रुतादिवृत्तयः शब्दे उपचर्यन्ते, उपचारहेतोस्तादात्म्या-ध्यास्याभावादिति ''द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात्'' इति वार्त्तिकस्योत्थानम् । तत्र सन्निवेशभिन्नानि गर्गादिवाक्यानि तुल्यपरिमाणत्वेन तुल्यकालान्यपि भिन्नाभिरावृत्तिभिः प्रचिता-पचितरूपाभिर्ग्राह्याणि, यथा तुल्यकालत्वेऽपि ह्रस्वादयः प्रचितापचितरूपभिन्नध्वनिव्यङ्ग्यस्वभावा इत्येतावता दृष्टान्त इति ।।७६।।

अथेदानीं ध्वनिप्रसङ्गेन वैकृतध्वनीनां कालं कार्यञ्च प्रदर्शयन् तेषां प्राकृतध्वनिवत् तादात्म्यानध्यासान्न शब्दभेदकत्वमित्याह—**शब्दस्योर्ध्वमभिव्यक्तेरिति** ।

अयमर्थः—वैकृतास्तु ध्वनयः प्राकृतध्वनिभिः शब्दस्याभिव्यक्तेरूर्ध्वं जायमाना द्रुतादिवृत्तिभेदं समुपोहन्ते शब्दं प्रति नयन्ति, शब्दे सम्पादयन्तीति यावत् । सप्तम्यन्तपाठस्तु वृषभवादिदेवहेलाराजो-पेक्षितत्वादुपेक्ष्यः । स्फोटात्मा तु तैर्द्रुतादिवृत्तिभेदैर्न भिद्यते । स्फोटाभिव्यक्तिवैकृतध्वन्युत्पत्त्योर्भिन्नकालत्वेन स्फोटस्य वैकृतध्वनीनाञ्च भेदप्रतीत्या तादाम्यानध्यासादिति ।

अयं भावः—यथा प्रदीपप्रकाशः स्वजन्मानन्तरमेव प्राक् सन्तमसावस्थितानां घटादीनां ग्रहणे हेतुः, अवतिष्ठमानस्तु स घटादीनां ग्रहणस्य योऽविच्छेदलक्षणः प्रबन्धस्तद्धेतुर्भवति, न तु स्वोपलभ्यस्य घटादेः प्रचयमन्यद्वा धर्मान्तरं दर्शयति । एवं प्राकृतध्वनिभिः शब्देऽभिव्यक्ते सति तदुत्तरकालमनुवर्तमानो वैकृतो ध्वनिर्ग्रहणविषयस्य शब्दस्याभिव्यक्तौ स्थित्यनुकूलं बलमादधानः

**इन्द्रियस्यैव संस्कारः शब्दस्यैवोभयस्य वा ।**
**क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम् ।।७८।।**

कथं पुनर्ध्वनिः शब्दोपलब्धिनिमित्तत्वं प्रतिपद्यते—

एतस्मिन् श्लोके शब्दाभिव्यक्तिप्रक्रियामात्रं प्रतिज्ञायते । उत्तरौ तु दृष्टान्तप्रदर्शनविषयौ ।

तत्र केचिन्मन्यन्ते—ध्वनिरुत्पद्यमानः श्रोत्रं संस्करोति, तच्च संस्क्रियमाणं शब्दोपलब्धौ द्वारतां प्रतिपद्यते ।

अन्ये त्वभिव्यक्तिवादिनो मन्यन्ते—शब्द एव ध्वनिसंसर्गात् प्राप्तसंस्कारः श्रोत्रस्य विषयत्वमुपगच्छति । केषाञ्चिद् ध्वनिरुभयोः शब्दश्रोत्रयोरनुग्रहे वर्तते । ताभ्यामिन्द्रिय-

---

शब्दविषयकस्य ग्रहणस्यानुवृत्तिमविच्छेदलक्षणामुसंहरति = शब्दसमीपं नयति, अभिव्यक्तस्य शब्दस्याविच्छेदेन ग्रहणं सम्पादयतीति यावत् । किन्तु प्राकृतेन ध्वनिना स्फोटेऽभिव्यक्ते वैकृतध्वन्युपलब्धेः स्फोटोपलब्धिपश्चाद्भावित्वाद् वैकृतध्वनेः स्फोटाद् भेद उपलक्ष्यते । अत एव स्फोटवैकृतध्वन्योर्भेदमुपलक्षयन्तो लोका वैकृतध्वनिगतं द्रुतादिवृत्तिभेदप्रयोजकं कालभेदं स्फोटे नाध्यारोपयन्ति ।

एवञ्च स्फोटात् समुपलक्षितभेदवता वैकृतेन ध्वनिना स्वाभिव्यक्त्युत्तरकालं संसृज्यमानोऽपि स्फोटात्मा ताद्रूप्यस्यानध्यासात् प्राकृतध्वनिगतह्रस्वत्वादिविषयकशास्त्रीयव्यवहारमिव वैकृतध्वनिगतकालभेदविषयकं व्यवहारं शास्त्रे नावतरति। स्फोटे कालभेदव्यवहारः शास्त्रे न क्रियत इति यावदिति ।।७७।।

शब्दाभिव्यक्तेर्निमित्तं प्राकृता ध्वनयः, वैकृतास्तु ध्वनयोऽविच्छेदेन शब्दोपलब्धिहेतव इत्युक्तप्रायं प्राक् । साम्प्रतं कथं पुनस्ते प्राकृता ध्वनयः शब्दाभिव्यक्तिनिमित्तत्वं प्रतिपद्यन्त इत्याह—**इन्द्रियस्यैव संस्कार इति ।**

अस्य श्लोकस्य वाक्यार्थो निगदव्याख्यातः । एतस्मिन् श्लोके च शब्दाभिव्यक्तिप्रक्रियामात्रं प्रतिज्ञायते, न त्वत्र हेतुरुपदिश्यते । एतदनन्तरोत्तरौ तु श्लोकौ दृष्टान्तप्रदर्शनेन तत्साधकौ । एवञ्चोत्तरत्रैव हेतवोऽर्थतो निर्दिष्टाः । तथा चैवमुत्तरत्रानुमानयोगः सेत्स्यति—(१)श्रोत्रं संस्कृतं सत् स्वविषयग्राहकम्, इन्द्रियत्वात्, समाधानाञ्जनादिसंस्कृतमनश्चक्षुरादिवत् ।(२) शब्दः संस्कृतः सन् इन्द्रियग्राह्यः, विषयत्वात्, आतपोदकसेकादिसंस्कृततैलपृथिव्यादिगन्धवत् ।(३) शब्दश्रोत्रे युगपत्संस्कृते ग्राह्यग्राहकभावभाजी, कादाचित्कतद्भावाश्रयत्वात्, चक्षुषः प्राप्यकारित्वपक्षे चक्षुर्विषयवत् ।

तत्र केचिन्मन्यन्ते—ध्वनिरुत्पद्यमानः श्रोत्रं संस्करोति । तत्र श्रोत्रस्य संस्कारो नाम ग्रहणासमर्थस्य श्रोत्रस्यापूर्वशक्त्याधानम्, विद्यमानाया शब्दग्रहणशक्तेरनभिव्यक्तायाः प्रबोधोऽभिव्यञ्जनम्, शब्दग्रहणरूपार्थक्रियानुकूलं श्रोत्रे ध्वनिसान्निध्यमेव वा श्रोत्रस्य संस्कारो ध्वनिकृत इति त्रय इन्द्रियस्य संस्कारविकल्पाः । एवं संस्क्रियमाणं श्रोत्रं शब्दोपलब्धौ द्वारतां प्रतिपद्यते, तथा संस्कृतेन्द्रियोत्पन्ना बुद्धिश्च स्वविषयपरिच्छेदायालं भवति ।

**इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिः ।**
**विषयस्य तु संस्कारस्तद्गन्धप्रतिपत्तये ।।७९।।**

---

विषयाभ्यां सहकारिणा निमित्तान्तरेणानुगृहीताभ्यां शब्दविषया बुद्धिरुत्पाद्यते । प्रदीप-प्रकाशानुग्रहादिवद् दृश्येष्वर्थेषु सहकारिनिमित्तान्तरापेक्षया हि शक्तयो निमित्तानां समग्रतां नातिक्रामन्ति ।।७८।।

समाधानं हि प्राकृतमलौकिकं वा न विषयात्मनि दृश्ये विशेषमादधाति । तथाञ्जनादिद्रव्यं चक्षुरेव संस्करोति, न बाह्यं विषयम् । अलौकिकमपि समाधानं सूक्ष्मव्यवहितविप्रकृष्टोपलब्धौ चक्षुरेवानुगृह्णाति । विषयानुग्रहे हि तस्यान्यैरपि ग्रहणं प्रसज्येत, विशेषाभावात् । विषयसंस्कारस्तु तैलादीनामातपादिभिः पृथिव्याश्चोदकेन गन्धप्रतिपत्तिकाले दृष्टः, न घ्राणेन्द्रियस्य । घ्राणेन्द्रियसंस्कारे तु संस्कृतासंस्कृतेषु विषयेषु प्रतिपत्तिभेदो न स्यात्, विशेषाभावात् ।।७९।।

---

अन्ये त्वभिव्यक्तिवादिनो मन्यन्ते—शब्द एव स्वाभिव्यञ्जकध्वनिसंसर्गात् प्राप्तसंस्कारः श्रोत्रस्य विषयत्वमुपगच्छति । एतन्मते ध्वनिकृता शब्दस्याभिव्यक्तिरेव संस्कारः । केषाञ्चिन्मते ध्वनिः शब्दश्रोत्रयोरुभयोरपि संस्कारद्वाराऽनुग्राहकः । एतन्मते ध्वनिकृतावुभयोः संस्कारौ प्रागुक्तावेव । शब्दोपलब्धौ सहकारिणा ध्वनिरूपेण निमित्तान्तरेणानुगृहीताभ्यां ताभ्यामिन्द्रियविषयाभ्यां शब्दविषया बुद्धिरुत्पाद्यते । अर्थेषु घटादिषु दृश्येषु सत्सु यथा चक्षुर्विषयशक्तयो ग्राह्यग्राहकत्वयोग्यतारूपाः प्रदीपप्रकाशरूपस्वसहकारिनिमित्तान्तरकृतं स्वाश्रयसंस्काररूपमनुग्रहमपेक्षन्ते, तथा शब्दश्रोत्रयोः शक्तयोऽपि ग्राह्यत्वग्राहकत्वयोग्यतालक्षणा ध्वनिरूपसहकारिनिमित्तान्तरकृतं स्वाश्रयसंस्कारमपेक्षन्त इति शब्दोपलब्धौ ध्वनिरूपसहकारिनिमित्तान्तरशक्तयो निमित्तानां समग्रताम् = कारणसामग्रीं नातिक्रामन्ति; किन्तु ध्वनिरूपसहकारिनिमित्तान्तरशक्तयः शब्दोपलब्धेः कारणसामग्र्यामन्तर्भवन्तीति ।।७८।।

तत्राद्ये पक्षद्वये दृष्टान्तमाह—**इन्द्रियस्यैवेति** ।

तत्र समाधानं चेतसोऽभिसंस्कार एकाग्रतारूपः । तच्च द्विविधम्—लौकिकमलौकिकञ्च । तत्र लौकिकं यदर्वाग्दृशां मादृशाम् । अलौकिकं तु योगिनां युञ्जानानां देवानाञ्च दिव्यदृष्टीनाम् । अञ्जनं तु चक्षुषः संस्कारः । तथा च समाधानाञ्जनादिभिरिन्द्रियस्यैव मनश्चक्षुरादेः संस्कारः, न त्विन्द्रियविषय-योरन्यतरस्य द्वयोर्वा । विषयस्य तु गन्धतैलादीनामातपादिभिः पृथिव्याश्चोदकसेकेन कुङ्कुमस्य च गोघृत-मर्दनेन संस्कारस्तेषां गन्धप्रतिपत्तये दृष्टः । अत्राधारसंस्कारद्वारा आधेयस्य गन्धस्य संस्कारो विवक्षितः, आधारस्य तैलादेर्घ्राणागोचरत्वादित्यर्थः ।

अयं भावः—समाधानं लौकिकमलौकिकं वा न दृश्ये विषयात्मनि विशेषमादधाति, किन्तु मनः संस्कुर्वत् तत्संयुक्तं चक्षुरपि संस्करोति । तथाऽञ्जनादि द्रव्यं चक्षुर्निक्षिप्तं चक्षुरेव संस्करोति, न बाह्यं विषयम् । अलौकिकमपि समाधानं सूक्ष्माणां परमाण्वादीनां कुड्यपर्वतादिव्यवहितानाञ्च भावानां विप्रकृष्टानां च नन्दनवनादीनामुपलब्धौ चक्षुरेवानुगृह्णाति, न विषयम् । विषयानुग्रहे हि

**चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि ।**
**विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः ।।८०।।**

---

इहालोकानुगृहीतं घटादिविषयं सन्तमसेऽवस्थितोऽयं प्रतिपद्यते । तत्र येषामप्राप्यकारि चक्षुस्तेषामालोकेन विषयः प्रायेणानुगृह्यते । प्राप्यकारित्वे तु चक्षुषस्तुल्यजातीयेन तेजसा नयनरश्म्यनुग्रहः क्रियते ।।८०।।

---

तस्यान्यैरप्यसंस्कृतेन्द्रियैर्ग्रहणं प्रसज्येत, विशेषाभावात् । विषयसंस्कारस्तु तैलादीनामातपादिभिः पृथिव्याश्च निदाघघर्मसन्तप्ताया उदकसेकेन गन्धप्रतिपत्तिकाले दृष्टः, न घ्राणेन्द्रियस्य, घ्राणेन्द्रियसंस्कारे हि संस्कृतासंस्कृतेषु विषयेषु गन्धप्रतिपत्तिभेदो न स्यात्, विषयेषु विशेषभावात् । अनुभूयते च गन्धप्रतिपत्तिभेद इति ।।७९।।

इदानीं शब्दश्रोत्रयोरुभयोरपि ध्वनिभिः संस्कार इति चरमपक्षे दृष्टान्तमाह—**चक्षुषः प्राप्यकारित्व इति ।**

चक्षुषः प्राप्यकारित्वे चक्षुर्विषयदेशं गत्वा विषयेण संयुज्य विषयं गृह्णातीति पक्षे । "कृभ्वस्तयः क्रियासामान्यवचना" इति सिद्धान्तेनात्र कृधातोर्ग्रहणेऽर्थे प्रयोगः । तेजसा तु सौराद्यालोकेनेन्द्रिय-विषययोर्द्वयोरप्यनुग्रहविशेषरूपः संस्कार इष्टः । स एव क्रमः, सैव रीतिः शब्दश्रोत्रयोर्ध्वनिभिः संस्कारेऽव-गन्तव्येत्यर्थः ।

अयं भावः—सन्तमसेऽवस्थितोऽपि लोको बहिरालोकानुगृहीतं घटादिविषयं प्रतिपद्यते । तत्रालोकेन विषयानुग्रहे विप्रतिपत्तिरेव नास्ति, घटादेरालोकानुग्रहानुग्रहयोरुपलब्ध्यनुपलब्धिदर्शनात् । आलोकेन चक्षुषोऽनुग्रहे परं विप्रतिपत्तिः पक्षभेदेन ।

तथा हि—चक्षुस्तैजसमिति सर्वेषां मतम्, किन्तु तस्य तैजसत्वेऽपि स्वरूपविषये द्वे दर्शने । केषाञ्चिद् बुद्बुदमानं चक्षुरिति दर्शनम् । बुद्बुदो मानमुपमानं यस्येति तदर्थः । बुद्बुदसदृशमित्यर्थः । यद्वा बुद्बुदपरिमाणमित्यर्थः । तथा चैतन्मते खद्योतादितेजोवत् चक्षुरपि स्वगोलकस्थितमेव बहिरवस्थितं घटादिकमप्राप्यैव गृह्णाति, चक्षुषः सूर्यादिमण्डलग्रहे तत्प्राप्तिकल्पनायां गौरवादननुभवाच्च । मध्यस्थितानां ग्रहान्तराणामपि मध्येमार्गं चक्षुःसङ्गतानां ग्रहणप्रसङ्गाच्चेति चक्षुषोऽप्राप्यकारित्ववादिनो बौद्धाः ।

चक्षुषः प्राप्यकारित्ववादिनो नैयायिकादयस्तु रश्मिमात्रं चक्षुरिति । तत्र यदा सन्तमसेऽवस्थितो लोक आलोकवति बहिर्देशे स्थितं द्रव्यमुपलभते, तदा नयनरश्मयः सूक्ष्मा नयनात् सन्ततं निर्गत्य तेजःपरमाणूनां व्यापित्वेन सर्वत्र सुलभत्वाद् अन्तरालवर्तिभिस्तेजःपरमाणुभिः सम्बध्यमानाः सूक्ष्मतरं रश्मिद्रव्यान्तरं पृथ्वग्रमारभमाणस्तावद् गच्छन्ति यावदालोकः । तत आलोकेन तेषां चक्षुः स्वरूपभूतानां रश्मीनां संस्कार इति कल्प्यते ।

यत्तु चक्षुषः प्राप्यकारित्वे सूर्यमण्डलग्रहकाले मध्येमार्गं स्थितानां ग्रहान्तराणामपि चाक्षुषत्वप्रसङ्ग इत्यापादनम्, तन्न, परिमाणाल्पत्वेन दूरत्वदोषेण च तद्ग्रहात् । अस्ति च दूरत्वदोषे सत्यपि सूर्यमण्डलग्रहे परिमाणभेदस्तच्चाक्षुषत्वहेतुः । दृश्यते च पञ्चषपदपरिच्छिन्नेऽपि देशेऽदूरस्थि-

**स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते ।**
**कैश्चिद् ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः प्रकल्पितः ।।८१।।**

---

अथापरेऽभिव्यक्तिवादिनां त्रयो दर्शनभेदाः । शब्देन संसृष्टो ध्वनिरुपाश्रयानुराग इव स्फटिकादीनामविभक्त उपलभ्यते ।

केषाञ्चित् तु यथेन्द्रियाणीन्द्रियगुणाश्चासंवेद्यस्वरूपा एव विषयोपलब्धिहेतवः, तथायं ध्वनिरगृह्यमाणरूपः शब्दग्रहे निमित्तं भवति ।

---

तानां पुत्तिकादीनामग्रहणं दूरस्थितानां घटादीनाञ्च ग्रहणं परिमाणभेदेन । दृश्यते च तत्रैव स्थितानां पुत्तिकादीनामुपनेत्रोपकृतेन चक्षुषां ग्रहणम् । एवं सूर्यमण्डलग्रहकाले मध्येमार्गं स्थितानामल्पपरिमाणानामपि ग्रहाणामुपनेत्रविशेषोपकृतेन यन्त्रविशेषोपकृतेन वा चक्षुषां ग्रहणं भवत्येव ।

इदं त्ववधेयम्—रात्रौ गव्यूत्यादिव्यवहितानामपि प्रदीपप्रकाशानां सुदूरस्थितानामपि च नक्षत्रादीनां चक्षुषा ग्रहणं भवति, मध्येमार्गं स्थितानां तु तत्तत्पदार्थानां तमसावृतानां ग्रहणं न भवति । तेन ज्ञायते नयनरश्मीनामालोकानुग्रहतदभावावेव तत्तत्पदार्थानां तत्र ग्रहणाग्रहणहेतू इति ।

एवं चेदमायातम्—येषामप्राप्यकारि चक्षुस्तेषामालोकेन विषय एव प्रायेणानुगृह्यते । प्राप्यकारित्वे तु चक्षुषस्तुल्यजातीयेन आलोकतेजसा नयनरश्मीनामनुग्रहः क्रियते । आलोकस्य विषयानुग्राहकत्वे तु न कस्यापि विप्रतिपत्तिरिति ।।८०।।

साम्प्रतमभिव्यञ्जकध्वनिविषये दर्शनभेदानाख्यातुकाम आह—**स्फोटरूपाविभागेनेति ।**

अयमर्थः—जवाकुसुमलौहित्याविभागेन स्फटिकादीनामिव स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते कैश्चित् ।

अन्यैस्तु ध्वनिश्चक्षुरादिवदसंवेद्योऽगृह्यमाणस्वरूप एव स्वविषयस्य शब्दस्य ग्रहे निमित्तमिष्यते ।

अन्यैस्तु स्फोटेन सहोपलभ्यमानोऽपि ध्वनिरुपलम्भभेदात् स्वतन्त्रः प्रकल्पितः, न तु स्फोटरूपाविभागेनोपलभ्ययानत्वात् स्फोटपरतन्त्रः । अत एव भग्नदन्ताद्युच्चारणे स्फोटानुपलम्भेऽपि ध्वन्युपलम्भः । महति जनसमवाये च स्फोटरूपानवधारणे दूराद् ध्वनेरुपलम्भ इति ।

अयं भावः—सन्त्यभिव्यञ्जकध्वनिविषये शब्दाभिव्यक्तिवादिनामपरे त्रयो दर्शनभेदाः । तद्यथा—जपाकुसुमलौहित्याद्युपरक्त इव स्फटिकादिः शब्देन संसृष्टो ध्वनिस्तद्रूपोपरक्तोऽविभक्त उपलभ्यत इत्येके । ध्वनिर्नियमेन स्फोटादविभक्त एव गृह्यत इति तेषामाशयः ।

केषाञ्चित् तु मतं यथा चक्षुरादीन्द्रियाणि तद्गुणाश्च रूपादयोऽसंवेद्यस्वरूपा एव विषयोपलब्धिहेतवः, तथाऽयं ध्वनिरगृह्यमाणरूपः शब्दग्रहे निमित्तं भवतीति ।

अत्र दृष्टान्तोपपत्तिस्तु येषामाहङ्कारिकाणीन्द्रियाणि न तन्मते, किन्तु भौतिकानीति मते ।

भौतिकत्वेऽप्यस्ति मतद्वयम्—अपञ्चीकृतभूतकार्याणीत्येकम्, पञ्चीकृतभूतकार्याणीत्यपरम् । तथा चैतन्मते सर्वेषामिन्द्रियाणां पाञ्चभौतिकत्वे समानेऽपि तत्तदिन्द्रियाणां तत्तद्भूतभूयस्त्वेन तदाश्रिता रूपादयः समानजातीयरूपादिग्रहणे हेतव इति ।

**यथाऽनुवाकः श्लोको वा सोढत्वमुपगच्छति ।**
**आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते ।।८२।।**

---

अन्ये त्वाहुः—दृष्टा केवलस्य ध्वनेः स्फोटरूपानवधारणे दूरादुपलब्धिः । शब्दोपलब्धिकल्प एवासावित्यपरे । तद्यथा—मरुष्वपचितपरिमाणानां द्रव्याणां परिमाणोपचयग्रहणं दृष्टम्, चन्द्रादीनां च परिमाणापचयग्रहणम्, वृक्षाग्ररूपग्रहणं च । शकलकोटरादीनां सामान्यविशेषाणां च धवखदिरादीनामप्रतिपत्तिः ।।८१।।

वर्णपदवाक्यविषयाः प्रयत्नविशेषसाध्या ध्वनयो वर्णपदवाक्याख्यान् स्फोटान् पुनः पुनराविर्भावयन्तो बुद्धिष्वध्यारोपयन्ति । क्रमेण तु वर्णतुरीयग्रहणे सति समुदाया-

---

तदुक्तम्—'भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवीगन्धवत्त्वज्ञाने हेतुः' इति । तत्र यथा घ्राणेन्द्रियस्य पृथिवीभूयिष्ठत्वाद् गन्धवत्त्वाच्च तत्समवेतो गन्धस्तत्समवायिकारणामिन्द्रियमनुगृह्णन् गन्धोपलब्धेर्निमित्तम्, न चेन्द्रियसमवेतो गन्धः संवेद्यते, तथा ध्वनिरन्येनोपायेनासंवेदित एव स्फोटोपलब्धेर्निमित्तं भवतीति । अगृह्यमाण एव ध्वनिरभिव्यञ्जक इति तदाशयः ।

अन्ये त्वाहुः—दृष्टा महाजनसमवाये दूरात् स्फोटरूपानवधारणेऽपि ध्वनेरुपलब्धिः । तथा च शब्दोपलम्भसहभावी ध्वन्युपलम्भः शब्दोपलम्भसदृश एव, न त्वेक एव ध्वनिशब्दयोरुपलम्भ इति प्रतीयते । तथा चैतन्मते ध्वनिः स्वोपलम्भे स्वतन्त्रः, न तु स्फोटपरतन्त्रस्तदुपलम्भपरतन्त्रो वा । तद्यथा मरुष्वपचितपरिमाणानां द्रव्याणां परिमाणोपचयग्रहणं दृष्टम् । निदाघे मध्यन्दिने प्रचण्डमार्तण्डमण्डले तपति भास्वरमरीचिचयसम्पर्केण मरुषु स्वल्पमपि द्रव्यं पर्वतपरिमाणं दृश्यते । किञ्च, ज्योतिषशास्त्रे पुराणादिषु च महापरिमाणाश्चन्द्रमण्डलादयः श्रूयन्ते, अपचितपरिमाणाश्च दृश्यन्ते । किञ्च चन्द्रमण्डले वृक्षपर्वतादीनामाभासरूपाणि च गृह्यन्ते, वृक्षत्वसमानाधिकरणाश्च खण्डत्वकोटरादिमत्त्वादयो धर्मा वृक्षत्वसामान्यस्य विशेषाश्च धवत्वखदिरत्वादयो धर्मा न प्रतीयन्ते । तदेवं यथा ईरणत्वदूरत्वादिदोषवद् देशविशेषसम्बन्धादाकारान्तरेण व्यवस्थितानामाकारान्तरेण ग्रहणम्, तथा स्फोटो विभक्तेन रूपेण स्थितः सहोपलम्भनियमरूपदोषवशाद् ध्वन्याभासरूपवत्तया परिच्छिद्यत इति ।।८१।।

ननु ध्वनेः शब्दाभिव्यञ्जकत्वं न सम्भवति । तथा हि— यद्येको ध्वनिस्तदभिव्यक्तिसमर्थस्तदा द्वितीयादिध्वन्युच्चारणानर्थक्यम् । अथान्त्यः, पूर्वेषामसामर्थ्यम्; अविशेषात् सर्वेषां व्यञ्जकत्वे शब्दोपलब्ध्यावृत्तिप्रसङ्गः । न चैवमस्त्यनुभवः, समुदायस्य व्यञ्जकत्वे क्रमेणोच्चारितानां क्षणप्रध्वंसिनां ध्वनीनां समुदायाभाव इति कथमभिव्यक्तिरित्याशङ्क्याह—**यथानुवाकः श्लोको वेति ।**

अयमर्थः—यथाऽनुवाकः श्लोको वा पूर्वपूर्वस्यामेकैकस्यामावृत्तौ समुपजातया बुद्ध्यांऽशविशेषतारतम्येन गृह्यमाणोऽपि न तास्वावृत्तिषु सर्वात्मना गृह्यते; किन्तु चरमया आवृत्त्या सोढत्वमुपगच्छति, अनुवाकस्य श्लोकस्य वा यत्सकलं स्वरूपं तद्विषया या एका स्मृतिबुद्धिस्तत्सहत्वं तादृशैकस्मृतिबुद्धिविषयत्वं प्राप्नोति, न तु स ग्रन्थः श्लोकरूपोऽनुवाकरूपो वा प्रत्यावृत्ति एकैकस्यामावृत्तौ सर्वात्मना निरूप्यते विभाव्यत इति ।

भावादविषयत्वमन्त्याया बुद्धेः प्राप्नोतीति संहितासूत्रभाष्यविवरणे बहुधा विचारितम्। कृत्स्नमपि शब्दरूपं प्रकाशीकृतं यावदस्वीकृताकारमनुपगृहीतविशेषं बुद्धावसन्निविष्टं तावदनुपलब्धेनैव तेन व्यवहारो न कश्चिदपि प्रकल्पते ।।८२।।

---

इयं च कारिका स्फोटस्य निरंशस्यापि ध्वन्याकारपरिग्रहेणांशकल्पनयांऽशतोऽभिव्यक्तौ दृष्टान्तभूता। वस्तुतस्तु निरंशत्वेन सकलस्यैव स्फोटस्य प्रत्येकध्वनिभिरभिव्यक्तिरित्यतोऽस्या उत्तरश्लोके तथेत्यध्याहृत्य तेन सम्बन्धोऽवसेय इति।

अयं भावः—वर्णपदवाक्यस्फोटाभिव्यक्तिहेतवस्तत्तदाभ्यन्तरप्रयत्नविशेषसाध्याः क्रमेणोपपन्ना वर्णपदवाक्यरूपा ध्वनयो वर्णपदवाक्याख्यान् स्फोटान् यथोत्पत्तिक्रमं पुनः पुनराविर्भावयन्तो वर्णपदवाक्यस्फोटान् तत्तत्स्फोटविषयासु चरमबुद्धिष्वध्यारोप्य तद्बुद्धिविषयतां नयन्ति। तस्मात् प्रत्येकं ध्वनीनां सकलस्फोटव्यञ्जकत्वम्, स्वधर्मोपरागेणांशकल्पनयांशतारतम्येन तत्तद्ध्वनि-जन्याभिव्यक्तिकाले उपलब्धिश्च। एवं क्रमेण चरमध्वनिजन्याभिव्यक्तिकाले तद्ध्वनिधर्मोपरक्तस्फोटे गृह्यमाण एव पूर्वपूर्वध्वनिधर्मोपरक्तस्फोटोपलब्धिजनितसंस्कारवशाद् ज्ञानलक्षणप्रत्यासत्तिन्यायेन सुरभि चन्दनखण्डमित्यादौ परोक्षापरोक्षवृत्तिद्वयस्वीकारेण वाऽभिव्यञ्जकयावद्ध्वनिधर्मोपरक्तस्य स्फोटस्य भानम्। यतः कृत्स्नमपि शब्दरूपं प्रत्येकं ध्वनिभिः प्रकाशीकृतं यावदस्वीकृतध्वनिधर्माकारमनुप-गृहीतध्वनिधर्मविशेषं तावद् बुद्धावसन्निविष्टं भवति, ध्वनिधर्मोपग्रहमन्तरेण तत्स्वरूपस्य केवलस्य श्रावणप्रत्यक्षायोग्यत्वात्, अनुपलब्धेन च तेन शब्दरूपेण कश्चिदपि व्यवहारो न प्रकल्पत इति स्थितम्।

वर्णरूपस्य स्फोटस्याभिव्यञ्जकध्वनिभिर्भागशोऽभिव्यक्तिः, अवयवेभ्य उत्पत्तिर्वेति पक्ष-योरन्यतरमाश्रित्य व्यञ्जकध्वनिक्रमेणोत्पादकावयवक्रमेण वा वर्णस्वरूपग्रहणे तु स्वीक्रियमाणे व्यञ्जकानां ध्वनीनामवयवानां वोत्पादकानां क्षणिकत्वेन समुदायाभावेन वर्णाभिव्यक्तेरुत्पत्तेर्वाऽसम्भवेन वर्णविषयायाश्चरमबुद्धेर्निर्विषयत्वप्रसङ्ग इति संहितासूत्रभाष्यविवरणे बहुधा विचारितम्।

तथा हि—वर्णानामुत्पत्तिपक्षे तावद् वर्णावयवाः परमाणुकल्पाः क्रमोत्पन्ना अतीन्द्रिया एवेत्यवयवसमुदायाग्रहणादवयवसमुदायाभावात् तदारब्धवर्णाभावे वर्णबुद्धेर्निर्विषयत्वं सुगममेव। यदि तु वर्णानां निरवयवत्वपक्षः स्वीक्रियते, तदा वर्णभागानामिन्द्रियगम्यत्वं न स्यात्। तथापि वर्णानां निरवयवत्वस्वीकारे तेषां क्रमेणोत्पादादनन्तरं विनष्टत्वाच्च प्रत्येकमुपलब्धानां समुदायभावेन स्मृतिरपि न स्यात्, सति प्रत्येकमनुभवे समुदायरूपतया स्मृतेरयोगात्। न चापि तेषां प्रत्येकमुपलब्धेः समुदायस्मृते-र्बीजस्य संस्कारस्याधाने शक्तिः, एकैकवर्णविषयाणामुपलब्धीनामभ्यासाभावेन समुदायस्मृत्यनुकूल-संस्काराधानेऽपाटवात्। अभ्यासेनाधिगतस्य हि स्मृतिर्दृष्टा। यत्र तु क्वचित् सकृद् दृष्टस्यापि स्मृतिर्दृश्यते, तत्रापि न सकृद् दर्शनम्; किन्तु तत्रापेक्षाबुद्ध्या तदैव दर्शनाभ्यास इति। यदि तु निरवयवा वर्णा ध्वनिभिरभिव्यज्यन्त इति पक्षः; तदाप्यभिव्यञ्जकेन व्यङ्ग्यग्रहणाद् व्यञ्जकानां ध्वनीनां क्षणिकत्वेन अन्ते च तेषां समुदितानां व्यञ्जकानामभावात् कुतः सकलपदवाक्यरूपशब्दग्रहणम्। एवं भागवत्यपि स्फोटेऽभ्युपगम्यमाने भागशोऽभिव्यक्तौ क्षणिकत्वेन व्यञ्जकध्वनीनां समुदायानुपपत्त्या सकलशब्द-ग्रहणानुपपत्तिर्वाच्या।

**प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।**
**ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ।।८३।।**
**नादैराहितबीजायामन्त्येन ध्वनिना सह ।**
**आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ।।८४।।**

---

व्यक्तरूपग्रहणानुगुणा अनुपाख्येयाकारा बहव उपायभूताः प्रत्यया ध्वनिभिः प्रकाश्यमाने शब्दे समुत्पद्यमानाः शब्दस्वरूपावग्रहहेतवो भवन्ति ।।८३।।

तत्र त्वयमाकारपरिग्रहक्रमः—

नादैः शब्दात्मानमवद्योतयद्भिर्यथोत्तरोत्कर्षेणाधीयन्ते व्यक्तपरिच्छेदानुगुणसंस्कारभावनाबीजानि । ततश्चान्त्यो ध्वनिविशेषः परिच्छेदसंस्कारभावनाबीजवृत्तिलाभप्राप्तयोग्यतापरिपाकायां बुद्धावुपग्रहेण शब्दस्वरूपाकारं सन्निवेशयति ।।८४।।

---

अथापि स्वाभिव्यञ्जकध्वनिभिरभिव्यक्तः पूर्वपूर्वो वर्णोऽभिव्यक्ते उत्तरोत्तरस्मिन् वर्णे संस्कारमाधत्ते यावदन्त्यो वर्ण इत्येतादृशसंस्कारसहकृतस्वकारणजन्या चरमवर्णविषया बुद्धिः समस्तशब्दाकाराविर्भविष्यतीति मतम्; एतदपि नास्ति, यतोऽभिव्यक्तोऽभिव्यक्ते संस्कारमाधत्ते । यदा च स उत्तरोऽनभिव्यक्तः, तदा क्व संस्काराधानम् । यदा च स उत्तरोऽभिव्यज्यते, तदा पूर्वोऽनभिव्यक्त इति कः संस्कारमादध्यात् । अभिव्यक्ते हि संस्काराधानम्, नानभिव्यक्ते; नित्यत्वात्, सर्वैर्वर्णैः सर्ववर्णेषु संस्काराधानप्रसङ्गादिति । तस्मात् प्रत्येकं ध्वनयो वर्णपदवाक्यरूपान् स्फोटान् स्वधर्मोपरक्तान् उपलब्धितारतम्येन पुनराविर्भावयन्तः संस्कारजननक्रमेण चरमवर्णबुद्धिष्वध्यारोपयन्तीति मतमेव स्थितम् ।।८२।।

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—**प्रत्ययैरनुपाख्येयैरिति ।**

अयमर्थः—तथा प्रत्येकं ध्वनिभिः प्रकाशिते शब्दस्वरूपे विषये येऽन्तरालवर्तिनोऽनुपाख्येया इदं तदिति शब्दाभिलापायोग्या ग्रहणानुगुणाःपूर्वपूर्वध्वन्यभिव्यक्तशब्दस्वरूपोपलब्धिजनितसंस्कारसहकृतचरमध्वन्यभिव्यक्तशब्दस्वरूपविषयकं यदुपाख्येयं ग्रहणं तदनुगुणास्तदनुकूलाः प्रत्ययास्तादृशचरमध्वन्यभिव्यक्तस्य स्फोटस्य यद्ध्वन्याकारग्रहणं तदनुरूपास्तैः संस्कारद्वारोपकृतेन चरमध्वनिनाऽभिव्यक्ते शब्दे यः प्रत्ययस्तेन शब्दस्य स्वरूपमिदं तदिति स्फुटमवधार्यत इति ।

अयं भावः—चरमध्वन्यभिव्यक्तस्य शब्दस्वरूपस्य ध्वनिरूपपरिग्रहपूर्वकं यत् स्फुटं ग्रहणं तदनुगुणा इदं तदिति शब्दानुपाख्येयाकाराः पूर्वपूर्वध्वनिभिः शब्दे प्रकाश्यमाने समुत्पद्यमानाश्चरमस्य शब्दस्वरूपग्रहणस्य उपाख्येयस्य उपायभूतास्तत्तद्ध्वन्युपरक्तशब्दस्वरूपविषयकसंस्कारजननद्वारा शब्दस्वरूपावग्रहस्य स्फुटपरिच्छेदरूपस्य हेतवो भवन्तीति ।।८३।।

साम्प्रतं शब्दस्वरूपस्य ध्वन्याकारपरिग्रहक्रममाह—**नादैराहितबीजायामिति ।**

अयमर्थः—प्रत्येकं स्वधर्मोपरक्तं स्फोटमवद्योतयद्भिर्नादैर्ध्वनिभिराहितबीजायाम् अभिव्यक्तिद्वारा स्वधर्मोपरक्तस्फोटोपलब्धिजननेन आहितानि समुत्पाद्य स्थापितानि बीजानि तत्तद्ध्वनि-

**असतश्चान्तराले याञ्छब्दानस्तीति मन्यते ।**
**प्रतिपत्तुरशक्तिः सा ग्रहणोपाय एव सः ।।८५।।**

---

इह निर्भागेष्वपूर्वापरेष्वभेद्येषु वर्णपदवाक्येषु ध्वनिनाभिव्यज्यमानेषु वर्णे तावद्वर्णावयवग्रहणसरूपा भागाभिनिवेशिन्य इव बुद्धय उपजायन्ते पदे वर्णग्रहणसरूपाः, वाक्ये पदग्रहणसरूपाः । ताभिश्च बुद्धिभिरुपलब्धारो भागभूतानसतः शब्दानस्तित्वेनाभि-

---

धर्मोपरक्तस्फोटविषयिकाः संस्काररूपाः शक्तयो यस्यां तथाभूतायामावृत्तपरिपाकायाम् आवृत्तः संस्कारोत्पत्तिक्रमेण सञ्जातः परिपाको यस्यास्तथाभूतायाम्; अत्र परिपाको नाम चरमध्वनिकाले सकलस्य शब्दस्वरूपस्य जायमानस्फुटोपलब्धिरूपकार्योत्पादनं प्रत्युन्मुखत्वरूप उद्‌बोधाख्यो विशिष्ट आत्मलाभः । स तु यद्यपि बीजरूपाणां संस्काराणामेव वर्तते, तथापि संस्काराणां बुद्धौ सह सन्निधानाद् बुद्धेरुच्यते । यतश्चरमध्वनिकाले जायमानायां स्फोटस्य स्फुटोपलब्धौ प्रतिध्वनिविभागं स्फोटस्य विशेषप्रतिपत्तेः संस्काराणां तदानीमुद्‌बोधाख्यः कार्यानुकूलवृत्तिलाभ इत्यवगम्यते ।

एवमन्त्यध्वनिकाले संस्काराणामवस्थानावगमे च तेषां पूर्वकालसम्बन्धोऽप्यवभासते, किन्तु स परिपाको बीजानामेव यद्यपि, तथापि बीजानां बुद्धेरव्यतिरेकाद् बुद्धेरेव सम्बन्धित्वेनोपात्तः, न तु वस्तुगत्या बुद्धेः परिपाकः । एवमावृत्तपरिपाकायां बुद्धावन्त्येन ध्वनिना सह वर्तमानायां यावद-भिव्यञ्जकध्वनिसमूहालम्बनात्मिकायां शब्दोऽवधार्यते पूर्वपूर्वध्वनिकाले स्फुटमनवधारितोऽपीदं तदिति स्फुटं परिच्छिद्यत इति ।

अयं भावः—शब्दस्वरूपमवद्योतयद्भिर्ध्वनिभिश्चरमध्वनिकालेऽभिव्यक्तस्य सकलस्य शब्द-स्वरूपस्य यः स्फुटः परिच्छेदस्तदनुकूलाः संस्कारा आधीयन्ते । ते च संस्काराः पूर्वपूर्वापेक्षया यथोत्तरमुत्कर्षवन्तः, उत्तरोत्तरं स्फोटस्य प्रतिपत्तेः स्फुटत्वतारतम्यात् । ते च संस्काराः शक्तिपदेन भावनापदेन बीजपदेनापि चोच्यन्ते । तथा हि—शक्तयश्चेतः संस्कुर्वन्ति स्वसम्बन्धेन विलक्षणं जनयन्तीति संस्कारशब्देनोक्ताः । तासां चेतसस्तद्रूपभावनञ्च भावना । यतश्चेतस्तेनाकारेण भावयन्तीति । स्वोत्तर-जायमानविलक्षणस्फोटबुद्ध्युपादानत्वेन च बीजपदवाच्याः शक्तय एव । ततश्चान्त्यो ध्वनिविशेषः स्फोटस्य स्फुटपरिच्छेदहेतुभूतानां शक्तीनां संस्कारभावनाबीजपदव्यपदेश्यानां कार्योन्मुखत्वरूपेण वृत्तिलाभेन प्राप्ता या स्फोटपरिच्छेदानुकूला योग्यता, तद्रूपपरिपाकवत्यां बुद्धौ ध्वनिधर्मोपरक्तं शब्दरूपाकारं सन्निवेशयतीत्येष स्फोटे ध्वन्याकारपरिग्रहक्रम इति ।।८४।।

यदि ध्वनिभागाः प्रत्येकं कृत्स्नमेव शब्दमभिव्यञ्जयन्ति, तदा कथमन्तरालेऽसमस्तशब्दग्रहण-मित्याह—**असतश्चान्तराल** इति ।

अयमर्थः—अत्र चशब्दस्त्वर्थे । अन्तराले आद्यध्वनिचरमध्वन्योर्मध्ये; चरमध्वन्यभिव्यक्तस्य समस्तस्य शब्दस्य स्पष्टग्रहणात् पूर्वमिति यावत् । स्फोटस्य निर्भागत्वेन असतस्तु यान् असमस्तान् शब्दान् 'अस्ति अन्तरालेऽसमस्तः पूर्वपूर्वध्वन्यभिव्यक्तः स्फोटैकदेशः' इति मन्यते प्रतिपत्ता । सा

मन्यन्ते। सा खलु परप्रदर्शितविषयग्राहिणामशक्तिः प्रतिपत्तॄणाम्। तथाभूतोपायक्रमवर्णान्तरसाध्यमेव हि तेषां शब्ददर्शनम्। निष्क्रमं तु दाशतयमप्युपायान्तरेण प्रतिपद्यन्ते प्रतिपादयन्ति च ॥८५॥

---

प्रतिपत्तुरशक्तिस्तेभ्यो ध्वनिभ्योऽभिव्यक्तस्याक्रमस्य स्फोटस्य ध्वनिरूपोपरागं विनाऽवधारणेऽक्षमता। अक्षमत्वादेव चान्तरालेऽसमस्तशब्दग्रहणाभिमानः प्रतिपत्तॄणाम्।

ये तु कोशव्याकरणनिरुक्ताध्ययनजन्यशब्दव्युत्पत्तिसम्पन्ना व्युत्पन्नपदव्यपदेश्यास्ते तु तेभ्य एव ध्वनिभ्योऽक्रममेव समस्तं स्फोटस्वरूपमेकैकध्वन्यभिव्यक्तितारतम्येन स्फुटत्वतारतम्येन च प्रतिपद्यन्त इत्याह—**ग्रहणोपाय एव स इति।**

अयमर्थः—यः प्रतिपत्तॄणामव्युत्पन्नानामन्तरालेऽसमस्तशब्दग्रहणाभिमानः, स चरमध्वनिकाले यत् समस्तस्य शब्दस्वरूपस्य तेषां ग्रहणं तदुपाय एवेति।

अयं भावः—इह निरवयवेष्वत एवावयवपौर्वापर्यरूपक्रमशून्येष्वखण्डेषु वर्णपदवाक्येषु प्रत्येकं ध्वनिनाऽभिव्यज्यमानेषु वर्णे तावद् वर्णावयवग्रहणसरूपा भागाभिनिवेशिन्य इव बुद्धय उपजायन्ते। याभिः शास्त्रे व्यवहारः क्रियते। यथा 'मातृणाम्' इत्यादौ ऋवर्णावयवे रबुद्ध्या णत्वव्यवहारः। यथा वा "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ" इत्यत्रावयवकल्पनया एचः पूर्वार्धस्यादुत्तरस्येकारोकारौ अग्निभूता ३ इ, पटा ३ उ इति। पदे वर्णग्रहणसरूपा बुद्धयो याभिः "इको यणचि" ( पा० ६/१/७७ ) इत्यादिकः शास्त्रीयो व्यवहारः। वाक्ये पदग्रहणरूपाः, याभिः "तिङ्ङतिङः" इत्यादिकः शास्त्रीयो व्यवहारः।

अत एव ताभिर्बुद्धिभिरुपलब्धारोऽन्तरालेऽसतः शब्दान् निर्भागस्य शब्दस्य भागभूतान् अस्तित्वेनाभिमन्यन्ते।

सा खलु ध्वनिभिरभिव्यक्तमेव स्फोटं ध्वनिधर्मोपरक्तं ये ग्रहीतुं समर्था नान्येनोपायेन, तेषां प्रतिपत्तॄणामुपायान्तरेण शब्दग्रहणेऽशक्तिरेव। अशक्तिहेतुक एव निर्भागस्य शब्दस्य भागसत्त्वाभिमान इति यावत्।

अत एव तेषां प्रतिपत्तॄणां शब्दस्य दर्शनम्। क्रमेणोच्चारिता ये व्यञ्जका ध्वनयस्तैरभिव्यक्तस्य शब्दस्य कल्पिता ये भागाः स्वतन्त्रवर्णसदृशा वर्णान्तररूपास्तद्रूपोपायसाध्यमेव।

ये त्वभिव्यञ्जकानां ध्वनीनां क्रमेणोच्चारणं विनैव आर्षेण ज्ञानेन दाशतयध्वनिसमुदायाभिव्यक्तियोग्यमपि शब्दं प्रतिपद्यन्ते, प्रतिपादयन्ति चाराधिताः सन्तः स्वप्रपत्तार्षज्ञानवतः परान्, तेषां तु निष्क्रमं निर्भागमेव च शब्ददर्शनम्। तेषामनुभवादेव च व्यवस्थाप्यते। नास्ति शब्दे वस्तुभूतः क्रमो भागो वा, अभिव्यञ्जकध्वनीनां तु क्रमो भागो वाऽभिव्यङ्ग्ये शब्देऽक्रमेऽभागे चारोप्यत इति ॥८५॥

**भेदानुकारो ज्ञानस्य वाचश्चोपप्लवो ध्रुवः ।**
**क्रमोपसृष्टरूपा वाग् ज्ञानं ज्ञेयव्यपाश्रयम् ।।८६।।**

---

अभिन्नमपि ज्ञानमरूपं सर्वज्ञेयरूपोपग्राहित्वाद्भेदरूपतया प्रत्यवभासते—पञ्च वृक्षाः, विंशतिर्गाव इति । संहृतसर्वबीजश्चायमान्तरः शब्दात्मा व्यञ्जकध्वनिभेदक्रमानुकारेणाविर्भावकाले प्रत्यवभासते । तेन चान्यभेदरूपोपग्रहेणोपप्लुतं शब्दतत्त्वमेवेदं वाङ्मनसाख्यमविभागमन्यथा प्रतीयत इति । एवं ह्याह—

ज्ञेयेन न विना ज्ञानं व्यवहारेऽवतिष्ठते ।
नालब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते ।।८६।।

---

साम्प्रतं वस्तुतोऽक्रमस्याभिन्नस्य च शब्दस्य स्वाभिव्यञ्जकध्वनिधर्मक्रमोपग्रहेण भेदानुकारो ज्ञानस्याभिन्नस्य ज्ञेयभेदोपग्रहेण भेदानुकार इवोपसर्ग एव आरोपितः, न तु वस्तुभूत इति दृष्टान्तेन प्रतिपादयितुमाह—**भेदानुकारो ज्ञानस्येति ।**

अयमर्थः—ज्ञानस्याभिन्नस्य ज्ञेयसम्बन्धेन भेदानुकार इव वाचः शब्दस्याप्यभिन्नस्य स्वाभिव्यञ्जकध्वनिसम्बन्धेन भेदानुकारो ध्रुवो निश्चित उपसर्ग एव, न तु वस्तुभूतः । एवञ्च यथा ज्ञेयव्यपाश्रयमेव ज्ञेयाश्रितम्, ज्ञेयसम्बद्धमिति यावत्, ज्ञानं व्यवहारक्षमं न त्वभिन्नमरूपञ्च । एवं क्रमोपसृष्टरूपैव वाक् = शब्दः, व्यवहारक्षमा, न त्वक्रमाऽरूपा च परेत्यतः शास्त्रीयव्यवहारोपपत्तय एव तस्याः क्रमोपसृष्टरूपप्रदर्शनमिति । किञ्चार्थावबोधनरूपो व्यवहारोऽपि क्रमोपसृष्टरूपाया एव वाचो भवति, न त्वक्रमाया इति ।

अयं भावः—यथा वस्तुतोऽभिन्नं निराकारतयाऽरूपमपि च ज्ञानमवभासकतया सर्वरूपोपग्राहित्वाद् भिन्नरूपवत्तया प्रत्यवभासते; तद्यथा—पञ्च वृक्षाः, विंशतिर्गाव इति । अत्र हि वनमित्यभिन्नविषयोपग्राहिकाऽभिन्नैव बुद्धिः । पञ्च वृक्षा इत्यत्र तु भिन्नविषयोपग्रहेण बुद्धेर्भेद इव लक्ष्यते । एवं यूयमित्यभेदप्रत्ययः, विंशतिर्गाव इति भेदप्रत्ययः । अत्रापि विषयस्य भेदाभेदाभ्यामेव बुद्धेर्भेदाभेदौ । वस्तुतस्तु अभिन्नरूपैव बुद्धिः । एवं बाह्यस्य शब्दस्याभिव्यञ्जकध्वनिधर्मोपरक्तस्य भेदावभासेऽप्यान्तरो ज्ञानरूपः शब्दात्माऽनभिव्यक्तोऽक्रमः सर्वेषां भेदप्रत्ययबीजानां क्रमप्रत्ययबीजानाञ्च संस्काराणां स्वस्मिन्नुपसंहारात् संहृतसर्वबीजो योगजादृष्टविशेषसंस्कृतमनोवृत्तिविशेषरूपेणार्षज्ञानेनैव गोचरीकृतो मनस्तादात्म्यापन्नो मनोरूपतया स्थितः पुनराविर्भावकाले व्यञ्जकध्वनिभेदक्रमानुकारेण भिन्न इव क्रमवानिव च प्रत्यवभासते । तेन च व्यञ्जकध्वनिधर्मभेदरूपोपग्रहेणोपद्रुतं शब्दतत्त्वमेवेदमेकमविभागं वाङ्मनसाख्यं नामतो भिन्नमप्यर्थतोऽभिन्नं व्यञ्जकध्वनिधर्मोपग्रहेणाक्रममपि क्रमवदिवाभिन्नमपि भिन्नमिवान्यथाऽन्यथा प्रतीयत इति । एवं ह्याह कश्चित्—

ज्ञेयेन न विना ज्ञानं व्यवहारेऽवतिष्ठते ।
नालब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते ।।इति ।

यथा ज्ञेयोपरागमन्तरेण शुद्धेन ज्ञानेन न व्यवह्रियते, तथा ध्वनिभिरनभिव्यक्तयाऽलब्धक्रमया वाचा न कश्चिदर्थोऽभिधीयते; किन्तु ध्वनिधर्मक्रमोपरक्तेनैव शब्देनार्थाभिधानमित्यर्थः ।।८६।।

**यथाद्यसंख्याग्रहणमुपायः प्रतिपत्तये ।**
**संख्यान्तराणां भेदेऽपि तथा शब्दान्तरश्रुतिः ।।८७।।**

यथा शतसंख्यां सहस्रसंख्यां वा भेदिकामाश्रयस्य प्रतिपित्समानस्तदुपायभूतानेकत्वादीन् भिन्नकार्यान् शतादीनामवयवानिव प्रतिपद्यते, तथा देवदत्तादिशब्दान्तरश्रुतिपरिच्छेदोपाया वाक्यरूपप्रतिपत्तिरिति नान्तरीयकं तासामुपादानम् ॥८७॥

पूर्वम् 'प्रतिपत्तुरशक्तिः सा ग्रहणोपाय एव सः' इत्युक्तम्, वस्तुतोऽभागस्यापि वाक्यस्य भागरूपतया कल्पितानि पदानि तदवयवतया च वर्णाः कल्पितास्तेषां च ग्रहणं वाक्यस्वरूपप्रतिपत्तावुपाय इति तदाशयः ।

तत्रेयमाशङ्का—यत्रास्ति वस्तुभूतोऽवयवावयविभावस्तन्तुपटादीनां कपालघटादीनाञ्च तत्रास्ति गुणसाजात्यं धर्मसाजात्यं वा । इमे तु वाक्यस्य भागत्वेन कल्पिता वर्णाः पदानि च तथाभूतानि वाक्यादत्यन्तविलक्षणानीति तेभ्योऽत्यन्तविलक्षणेभ्यः कथमत्यन्तविलक्षणस्य वाक्यस्य प्रतिपत्तिः ? सदृशाद् गृह्यमाणात् सदृशस्य प्रतिपत्तिर्लोके दृष्टा युज्यते चेति, तामिमामाशङ्कामत्यन्तविलक्षणस्यापि प्रतिपत्त्युपायत्वं दृष्टान्तेन प्रदर्श्य निराकरोति—**यथाद्यसंख्याग्रहणमिति ।**

अयमर्थः—यथा आद्यानां पूर्वासां संख्यानां जिघृक्षितोत्तरशतादिसंख्यातोऽर्थान्तरभूतानां ग्रहणं भेदेऽपि = अत्यन्तवैलक्षण्येऽपि संख्यान्तराणामुत्तरासां शतादिसंख्यानां प्रतिपत्तये उपायस्तथा वाक्यभागत्वेन प्रकल्पितानां वर्णपदानां वाक्यतोऽत्यन्तमर्थान्तरभूतानां श्रुतिः श्रावणप्रत्यक्षं वाक्यस्य प्रतिपत्तये उपायः । तथा चात्यन्तविलक्षणस्यापि ग्रहणोपायत्वं लोकदृष्टान्तसिद्धत्वेनोपपद्यत एवेति प्रागुक्तशङ्काऽनवकाशेति ।

अयं भावः—अस्ति तावत् शतसहस्रादिसंख्यातोऽपोद्धृतानामेकत्वादिसंख्यानां शतसहस्रादिसंख्यातो भेदेन वैलक्षण्यम् । संख्या स्वाश्रयमाश्रयान्तरेभ्यो भिनत्ति—एको द्वाविति । स चैकत्वादि, येनैकत्वादिसंख्यानां शतसहस्रादिसंख्यातो भेदः, अभिधानभेदेन प्रत्ययभेदेन कार्यभेदेन च ।

अभिधानभेदः—एकमिति, शतमिति । एतदभिलप्य एव च प्रत्ययभेदः, कार्यभेदश्च स्वाश्रयस्याश्रयान्तरेभ्यो व्यावृत्तिरूपः ।

एवञ्च यथा स्वाश्रयस्य भेदिकां शतसंख्यां सहस्रसंख्यां वा प्रतिपित्समानः पुरुषस्तदुपायभूतान् भिन्नान्याश्रयान्तरावधिकस्वाश्रयव्यावृत्तिरूपाणि कार्याणि जनयत एकत्वादीन् शतादीनामवयवानिव प्रतिपद्यते ।

अयञ्च दृष्टान्तो वैशेषिकदर्शनसमाश्रयेण । ते ह्येकत्वादिपरार्द्धान्ताः संख्याः परस्परतो व्यावृत्तलक्षणा एकत्वविषयकापेक्षाबुद्धिजन्यां द्वित्वादिपरार्द्धपर्यन्तसंख्या इति च मन्यन्ते । येषां त्वेकत्वादीनां सङ्घात एव शतादिकम्, तेषां तु वनवृक्षवत् समुदायसमुदायिरूपाणामेकत्वादिशतादीनां न परस्परमत्यन्तवैलक्षण्यमिति । यथा 'देवदत्त गामभ्याज' इत्यन्ते वाक्ये वाक्याद् भिन्नलक्षणानि देवदत्तादिपदानि तद्घटकवर्णांश्च तादृशानि वाक्यग्रहणोपायभूतानीति ॥८७॥

**प्रत्येकं व्यञ्जका भिन्ना वर्णवाक्यपदेषु ये ।**
**तेषामत्यन्तभेदेऽपि सङ्कीर्णा इव शक्तयः ।।८८।।**

वर्णपदवाक्यविषया हि विशिष्टाः प्रयत्नास्तत्प्रेरिताश्च वायवः स्थानान्यभिघ्नन्ति स्थानाभिघातप्राप्तसंस्काराश्च ध्वनयो यद्यपि परव्यावृत्तस्वभावाः, तथापि गोगवयजात्युपव्यञ्जनवत्, भ्रमणरेचनादिकर्मसामान्यविशेषाश्रयवच्च तेषामुपव्यञ्जनानां

भवन्तु नाम ध्वनयः शब्दस्य प्रतिपत्तावुपायाः, ते त्वत्यन्तविलक्षणा आत्मरूपं शब्दे निवेश्य कथं तं गमयन्ति, न हि धूमोऽग्निं ज्ञापयन् तं धूमरूपतामापाद्य ज्ञापयति इत्याशङ्क्याह—प्रत्येकं व्यञ्जका इति ।

अयमर्थः—वर्णवाक्यपदेषु व्यञ्जनीयेषु सत्सु ये व्यञ्जका ध्वनयस्ते वर्णपदवाक्यरूपव्यङ्ग्यभेदेन प्रत्येकं भिन्ना एव । तथा हि—यो गकाररूपवर्णव्यञ्जको ध्वनिर्नासौ गौरिति पदव्यञ्जकः । यश्च गौरिति पदव्यञ्जको ध्वनिर्नासौ गौर्गच्छतीत्यादिवाक्यव्यञ्जक इति । एवं व्यङ्ग्यभेदाद् वर्णपदवाक्यव्यञ्जकध्वनीनां परस्परमत्यन्तभेदेऽपि श्रुतिसामान्यमूलकसादृश्यकल्पनयाऽभेदाध्यारोपात् शक्तयः सङ्कीर्णा इव । तथा हि अस्ति तावद् वर्णाद्यभिव्यञ्जकध्वनिशक्तीनां प्रत्येकं कार्यद्वयम्—वर्णाद्यभिव्यक्तिरूपमेकम्, पदव्यञ्जके ध्वनौ श्रुतिसामान्यमूलकसादृश्यकल्पनया वर्णव्यञ्जकध्वनेरभेदारोपः । एवं वाक्यव्यञ्जकध्वनौ पदव्यञ्जकध्वनेस्तथैवाभेदारोप इति ध्वनिशक्तीनां द्वितीयं कार्यम् । तत्र प्रथमं ध्वनीनां कार्यं विभक्तम्, द्वितीयं त्वविभक्तमित्यविभक्तकार्ययोगेण ध्वनिशक्तीनां सङ्कर इव लक्ष्यत इति ।

अयं भावः—अस्ति तावद् वर्णपदवाक्यव्यञ्जकध्वनीनां कार्यभेदेन कारणभेदेन च भेदः, तेन च तद्गतानां शक्तीनामपि भेदः । तत्र भिन्ना या वर्णाद्यभिव्यक्तयस्तद्रूपः कार्यभेदः । कारणभेदस्तु वर्णपदवाक्यव्यञ्जकध्वनिजनकानां प्रयत्नानां भेदात् तादृशप्रयत्नप्रेरितानां तत्तत्स्थानाभिघातकर्तॄणां वायूनाञ्च भेदात् । तथा हि—वर्णपदवाक्यविषया विलक्षणाः प्रयत्नास्तत्प्रेरिताश्च विलक्षणा वायवस्तत्तत्स्थानान्यभिघ्नन्ति । तत्तत्स्थानाभिधातात् प्राग् वाय्ववयवरूपेण स्थिता ध्वनयो वायूनां तत्तत्स्थानाभिघातेन संस्क्रियन्ते, कत्वखत्वादिरूपेण ग्रहणयोग्यतां नीयन्ते, आकरोद्गता इव मणयः शाणनिघर्षणेन । तदिदं वक्ष्यते—

> विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ।
> प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते ।। इति । (वा० प० १/११६ )

एवं तत्तत्स्थानाभिघातप्राप्तसंस्काराश्च ध्वनयो यद्यपि कारणभेदेन प्रागुक्तरीत्या कार्यभेदेन च परस्परव्यावृत्तस्वरूपास्तथापि गोगवयजात्योरुपव्यञ्जकावयवसंस्थानवद् भ्रमणरेचनादिक्रियानिष्ठभ्रमणत्वरेचनत्वादिरूपजातिविशेषाश्रयवच्च तेषां वर्णादिव्यञ्जकध्वनीनां दुर्ज्ञानः स्वरूपभेदः ।

तद्यथा—गोगवयगतजात्युपव्यञ्जकानां पिण्डावयवानां संस्थानस्य संयोगरूपस्य परस्परविलक्षणगोगवयपिण्डारम्भकस्यात्यन्तभेदे सत्यपि तस्य दुर्ज्ञानत्वाद् गोसदृशो गवय इति सादृश्यप्रत्ययो भवतीति प्रथमोदाहरणाभिप्रायः ।

**यथैव दर्शनैः पूर्वैर्दूरात् सन्तमसेऽपि वा।**
**अन्यथाकृत्य विषयमन्यथैवाध्यवस्यति ।।८९।।**

---

दुर्ज्ञानो भेदः । सामान्यमात्रया कयाचिदनुगतः प्रविभक्तकार्याणामपि शक्तीनामात्मा कुतश्चित् कार्यविशेषात् संस्कारेणैवावस्थितः, ततश्चायं निरवयवेषु वर्णेषु मात्राविभागाध्यवसायः, पदेषु च वर्णविभागाध्यवसायः, वाक्येषु च पदविभागाध्यवसाय इति ।।८८।।

यथा विषयेन्द्रियधर्म एवायं प्राकृतचक्षुषां दूरादाकृतिमात्रोपलब्धौ वृक्षादीन् हस्त्यादिवत् प्रतिपद्यन्ते । तद्देशावस्थिता एव प्रणिधानाभ्यासात् क्रमेण पुनर्यथावयवमुपलभन्ते । व्यक्तालोकाच्च देशात् सहसा मन्दसन्निविष्टप्रकाशाद् अपवरकादीन् प्रविश्य रज्ज्वादीन् सर्पादिवत् प्रतिपद्य तथैव प्रणिधानाभ्यासात् चक्षुषि प्रकृतिस्थे यथावदुपलभन्ते ।।८९।।

---

गोगवयपिण्डयोरनेकावयवत्वेन सम्भाव्येतापि तयोः सदृशावयवानुवृत्तिरित्यभिप्रायेण व्यञ्जकानामत्यन्तवैलक्षण्यं दर्शयितुं द्वितीयमुदाहरणम्—भ्रमणरेचनादिक्रियागतभ्रमणत्वरेचनत्वादिरूपजातिविशेषाश्रयवदिति । यथा भ्रमणरेचनक्रिययोर्भिन्नभिन्नजात्यन्वितयोरपि दुर्ज्ञानो भेदः, यतः क्रियात्वेन तयोः सादृश्यप्रत्यय इति । एवं दार्ष्टान्तिकेऽपि परस्परमत्यन्तविलक्षणानां व्यञ्जकानां ध्वनीनां दुर्ज्ञानः परस्परं भेद इति योजनीयम् ।

तथा हि—वर्णाद्यभिव्यक्तिरूपकार्यभेदाद् व्यञ्जकध्वनिशक्तीनां स्वरूपं प्रविभक्तमपि वर्णपदवाक्यव्यञ्जकध्वनीनां श्रुतिसामान्यमूलकसादृश्यकल्पनयाऽनुगतं वर्णपदव्यञ्जकध्वनीनां पदवाक्यव्यञ्जकध्वनीनाञ्च सादृश्यमूलकाभेदारोपरूपैककार्यजननेन सङ्करेणैवावस्थितम् ।

गौरित्येतत्पदाभिव्यञ्जके ध्वनौ श्रुतिसामान्यमूलकसादृश्यकल्पनया गकारस्फोटव्यञ्जकध्वनिरूपत्वमुत्प्रेक्ष्य तत्र गोपदस्फोटाभिव्यक्तावपि गकारं व्यज्यमानं पश्यन्ति । अतो गकरादिरूपवर्णविभागेन गोपदस्फोटमवस्यन्ति, तथा 'गामभ्याज' इति वाक्यव्यञ्जके ध्वनौ गोपदस्फोटव्यञ्जकध्वनिशक्तिमध्यारोप्य तत्र वाक्यावयवत्वेन पदबुद्धिरिति । अयमेव हि ध्वनिशक्तीनां सङ्करो यत्पदव्यञ्जकशक्तिं श्रुतिमूलकध्वनिसादृश्यकल्पनया वर्णव्यञ्जकामपि कल्पयन्ति । तथा वाक्यव्यञ्जिकामपि पदव्यञ्जिकाम् । तत्कल्पनावशाच्च वर्णव्यञ्जका एव संहताः पदव्यञ्जकाः, ते संहता वाक्यव्यञ्जका इति भ्राम्यन्ति लोकाः । तदेवं व्यञ्जकध्वनिशक्तीनां सङ्करादेव निरवयवेषु वर्णेष्ववयवविभागाध्यवसायः, पदेषु च वर्णविभागाध्यवसायः, वाक्येषु च पदविभागाध्यवसाय इति ।।८८।।

ननु ध्वनिधर्माः कत्वखत्वादयः क्रमश्च, एवञ्च तच्छून्यो वर्णरूपः, पदरूपः, वाक्यरूपो वा स्फोटः कथं तादृशध्वनिधर्मवत्तया प्रतीयते ? यत्तु—"यथाद्यसंख्याग्रहणमुपायः प्रतिपत्तये" ( वा० प० १/८७ ) इति निदर्शनमुक्तम्, तदपि नैतच्छङ्कासमाधानायालम् । तत्राद्यसंख्याधर्मवत्तया उत्तरसंख्यानाम-प्रतिपत्तेरित्याशङ्क्यात्यन्तप्रसिद्धं दृष्टान्तान्तरमाह—**यथैव दर्शनैः पूर्वैरिति ।**

अयमर्थः—यथैव = यद्यपि, दूरात् = समीप एव सन्तमसे गाढान्धकारेऽपि वा विषयं वृक्षादिकं रज्ज्वादिकं वाऽन्यथाकृत्य अन्यथा परिच्छिद्य दूराकृतिमात्रोपलब्धौ वृक्षादिकं हस्त्यादिवत् प्रतिपद्य समीप

**व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ।**
**भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्तते ।।९०।।**
**यथानुपूर्वीनियमो विकारे क्षीरबीजयोः ।**
**तथैव प्रतिपत्तॄणां नियतो बुद्धिषु क्रमः ।।९१।।**

---

वाक्ये हि निर्भागे तदभिव्यक्तिविषयैः प्रयत्नविशेषैः समुत्थाप्यमाना ध्वनयः सत्यपि भेदे सामान्यशक्तिसमन्वयाद् वर्णपदप्रत्यवभासभागावग्रहरूपां बुद्धिं प्रवर्तयन्ति ।।९०।।

यथा क्षीरमुत्पत्तिपक्षेऽभिव्यक्तिपक्षे वा सर्पिरादिविकारप्रयुक्तं नियतरूपैर्मण्डकादिभिरवस्थाविशेषैर्विशिष्टसंविज्ञानपदनिबन्धनैरसंविज्ञानपदैश्च युज्यमानं यथायथं

---

एव गाढान्धकारे रज्ज्वादिकं सर्पादिवत् प्रतिपद्य तद्देशावस्थित एव लोकः प्रणिधानाभ्यासाच्चक्षुषि प्रकृतिस्थे सति क्रमेण यथावयवं वृक्षादिकं रज्ज्वादिकञ्च यथावदुपलभत इति । अत्र प्रणिधानं नाम यत्नात् तत्रैवेन्द्रियोपसंहारस्तस्याभ्यासः पौनःपुन्यमिति ।

अयं भावः—येषां प्रकृतिविकारभूतं चक्षुः, न तु दिव्यम्, तेषां दूराद् आकृतिसामान्योपलब्धौ ते प्राग् वृक्षादीन् हस्त्यादिवत् प्रतिपद्यन्ते । तेषामयं विषयेन्द्रियस्वभाव एव । अनन्तरञ्च तद्देशावस्थिता एव ते प्रणिधानाभ्यासात् क्रमेण पुनर्यथाऽवयवं वृक्षादीन् उपलभन्ते ।

किञ्च, प्रस्फुटप्रकाशात् प्रदेशात् सहसा मन्दसन्निविष्टप्रकाशानपवरकादीन् प्रविश्य प्राग् रज्ज्वादीन् सर्पादिवत् प्रतिपद्य चक्षुषि प्रणिधानाभ्यासात् प्रकृतिस्थे सति रज्ज्वादीन् यथावयवं यथावच्चोपलभन्त इति ।।८९।।

वस्तुस्वरूपस्य यथावद् ग्रहणात् प्राग् अन्यथाग्रहणरूपं दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—**व्यज्यमाने तथा वाक्य इति ।**

अयमर्थः—यथा दूरात् सन्तमसेऽपि वाऽन्यथाकृत्य विषयमन्यथैवाध्यवस्यति, तथा वाक्याभिव्यक्तिहेतुभिर्विशिष्टप्रयत्नजनितैर्ध्वनिभिर्वाक्ये व्यज्यमाने तदभिव्यक्तेः प्राग् व्यञ्जकध्वनिसादृश्याद् वर्णपदरूपाणां निर्भागस्यापि वाक्यस्य भागत्वेन कल्पितानामवग्रहरूपा बुद्धिः प्रवर्तत इति ।

अयं भावः—यद्यपि परमार्थतो वाक्यमेव वाचकं निर्भागञ्च, तथापि तदभिव्यक्तये, तद्विवक्षातः समुत्पद्यमानैः प्रयत्नविशेषैः समुत्पादिता ध्वनयो वर्णपदव्यञ्जकध्वनिभ्यो भिन्ना अपि वर्णपदव्यञ्जकध्वनिनिष्ठशक्तिसदृशशक्तिमत्त्वाद् वर्णपदप्रत्यवभासात्मिकां भागावग्रहरूपां बुद्धिं जनयन्तीति ।।९०।।

ननु यदि वाक्यस्यासत्या एव वर्णपदरूपा भागाः कल्प्यन्ते, तर्हि कल्पनाया अनियतत्वाद् वाक्ये वर्णरूपं कत्वखत्वादिकं पदरूपञ्च गोपदत्वादिकं क्रमश्च वर्णानुपूर्वीरूपो यद् भासते, तौ रूपक्रमौ वाक्ये भासमानौ किंकृतौ ? तथा हि—दूराद् वृक्षं कश्चिद् हस्तीति, अपरो वल्मीक इति कल्पयतीत्यनियत एव कल्पनाक्रम इत्याशङ्क्याह—**यथानुपूर्वीनियम इति ।**

प्रकृतिधर्मप्रत्यासत्तिमनुवर्तमानमन्यतमानुपूर्वीनियमानतिक्रमेण प्रयोजिकां विकारशक्तिं प्रदर्शयति । शाल्यादिबीजं च तण्डुलादिप्रधानविकारप्रयुक्तं नान्तरीयकैर्नालाङ्कुरादिभिरवस्था-विशेषैर्युज्यमानं प्रयोजकेन प्रधानविकारधर्मेण प्रत्यवभासते । तथैषामर्वाग्दर्शनानां प्रतिपत्तॄणां वाक्यस्वरूपग्रहणपूर्वकेण वाक्यार्थग्रहणेन प्रधानेन प्रयुक्तानां नियतोपाये साध्ये तस्मिन्नर्थे नियतक्रमपरिणामभागाकारप्रत्यवभासमात्रायुक्ता बुद्धयः प्रवर्तन्ते स्फोटेषु ।।९१।।

---

अयमर्थः—यथा क्षीरस्य विकारे दध्यादिरूपे सर्पिरादिरूपे वा जायमानेऽभिव्यज्यमाने वा आनुपूर्वीनियमः क्रमनियमोऽस्ति, न हि क्षीरमान्तरालिकीर्मण्डकाद्यवस्था अप्राप्यैवाव्यवधानेन दध्यात्मना सर्पिरात्मना वा उत्पद्यतेऽभिव्यज्यते वा । शाल्यादिबीजस्य वा तण्डुलादिरूपे विकारे जायमानेऽभिव्यज्य-माने वा आनुपूर्वीनियमोऽस्ति । न हि शाल्यादिबीजं नालाङ्कुरादीन् अवस्थाविशेषानप्राप्यैव तण्डुलाद्यात्मना उत्पद्यतेऽभिव्यज्यते वा, तथैव वाक्ये वाक्यार्थे च प्रतिपत्तव्ये प्रतिपत्तॄणां बुद्धिषु क्रमो नियतः। तथा च वर्णपदप्रतिपत्तिपूर्विकैव प्रतिपत्तॄणां वाक्यस्वरूपप्रतिपत्तिः, पदार्थप्रतिपत्तिपूर्विकैव च तेषां वाक्यार्थप्रति-पत्तिरिति क्रमो नियत इति फलितम् ।

अयं भावः—उत्पत्तेः प्राग् असदेव कार्यं कारणव्यापारैरुत्पद्यत इत्यस्ति काणादानामसत्कार्यवादः । उत्पत्तेः प्राग् उपादानकारणे सदेव कार्यं सूक्ष्मतया निलीनं कारणव्यापारैरभिव्यज्यते स्थौल्या-पादनपुरस्सरमित्यस्ति च सांख्यानां सत्कार्यवादः । तत्रोत्पत्तिपक्षेऽभिव्यक्तिपक्षे वा यथा क्षीरं प्रधानेन स्वविकारेण सर्पीरूपेण स्वोत्पत्तये स्वाभिव्यक्तये वा पुरुषे स्वविषयकबुद्धिचिकीर्षाकृतिजननपरम्परया प्रयुक्तं सत् नियतरूपैर्मण्डकादिभिरवस्थाविशेषैर्युज्यमानमेव भूत्वा स्वप्रयोजकं सूक्ष्मतया शक्तिरूपेणावस्थितं सर्पिरादिरूपं विकारं दर्शयति । तस्य च क्षीरस्य स्वप्रधानविकारीभूतसर्पिष उत्पत्त्यभिव्यक्त्योरन्तराले काश्चिदवस्था मण्डकनिलीनकोत्तरकादिरूपाः स्वविषयकविशिष्टसंविज्ञानजनकमण्डकनिलीनकोत्तर-कादिपदव्यपदेश्याः । तत्र क्षीरस्य दध्यातञ्चनेन मण्डभावावस्था मण्डकावस्था, ततः परं निलीनकावस्था, यत्र क्षीरस्येषद्दधिभावापत्तावपि सर्पिस्तत्र निलीनं तिष्ठति, ततः परमुत्तरकावस्था, यस्यां सर्पिर्दध्न ऊर्ध्वं तरतीति । एतेषामेव च मण्डकाद्यवस्थाविशेषाणां येऽन्तरालभवाः सूक्ष्मा अवस्थाविशेषास्तेषां वाचकः शब्दो नास्तीति न संविज्ञानस्य विषयास्ते इत्यसंविज्ञानपदाः ।

एतैर्द्विविधैरप्यवस्थाविशेषैर्युज्यमानं क्षीरं स्वस्माद् विलक्षणायां मण्डकाद्यवस्थायामपि स्वजात्यनतिक्रमाद् यथासम्भवं शुक्लत्वद्रवत्वादिरूपप्रकृतिधर्मसम्बन्धमनुवर्तमानं प्रागुपवर्णितानां विशिष्टसंविज्ञानपदनिबन्धनानामसंविज्ञानपदानां चावस्थाविशेषाणां या आनुपूर्व्यः, तासामन्यतमाया अपि आनुपूर्व्या व्यवस्थाऽनतिक्रमेणैव स्वविकारशक्तिं सर्पिरादिरूपां स्वप्रयोजिकां प्रदर्शयति, नान्त-रालिकावस्थानुपूर्वीनियमातिक्रमेण । शाल्यादिबीजं चापि तण्डुलादिरूपस्वप्रधानविकारप्रयुक्तं सद् नान्तरीयकैर्नालाङ्कुरादिभिरवस्थाविशेषैर्युज्यमानमेव स्वप्रयोजकेन स्वप्रधानविकारतण्डुलादिरूप-स्वधर्मरूपेणाविर्भूय प्रत्यवभासते । तथैवैषामर्वाग्दर्शनानां प्रतिपत्तॄणां वाक्यस्वरूपग्रहणपूर्वकेण वाक्यार्थग्रहणेन वाक्यस्वरूपग्रहणस्य प्रधानकार्येण प्रयुक्तानां वर्णपदानुपूर्वीग्रहणरूपनियतोपायसाध्ये

**भागवत्स्वपि तेष्वेव रूपभेदो ध्वनेः क्रमात् ।**
**निर्भागेष्वभ्युपायो वा भागभेदप्रकल्पनम् ।।९२।।**

येऽपि भेदवादिनो गौरिति गकारौकारविसर्जनीयमात्रमेव प्रतिपन्नाः, नान्यस्तद्व्यतिरिक्तो वर्णरूपग्रहणोपायग्राह्यो निर्भागः शब्दात्मा विद्यत इति मन्यन्ते, नित्यत्वं च शब्दानामभ्युपगच्छन्ति, तेषां क्रमेणाव्यपदेश्यवर्णतुरीयांशाभिव्यक्तौ स्वरूपानवधारणमविषयत्वं चान्त्यस्य व्यक्तरूपोपग्राहिणः परिच्छेदस्य प्रसज्यते । यौगपद्येन तु सर्वावयवाभिव्यक्तौ श्रुत्यविशेषप्रसङ्गो गवे इति च, वेग इति च, तेन इति च, न ते इति च ।

तत्र शब्दान्तरेऽर्थान्तरसम्बन्धिनि नैवायं दोषः । तस्मिन्नपि तु शब्देऽभिव्यञ्जकध्वनिक्रमकृता भेदेन प्रतिपत्तिः । दृष्टो हि मण्डूकादिवसासम्बद्धप्रदीपाभिव्यक्तेषु रज्ज्वादिषु सर्पादिप्रतिपत्तिभेदः ।

---

वाक्यस्वरूपग्रहणरूपे कार्ये जननीये नियतो यो वर्णानुपूर्वीरूपः पदानुपूर्वीरूपो वा क्रमः, यच्च नियतं वर्णानां पदानां च द्वित्वत्रित्वादिसंख्यारूपं परिमाणम्, तद्वन्तो ये वाक्यस्फोटस्य प्रत्यवभासमाना भागाकारा वर्णकल्पाः पदकल्पाश्च, त एव वाक्यस्फोटस्य कल्पिता अवयवाख्या मात्राः, तद्विषयिण्यो वाक्यस्फोटबुद्धयः प्रवर्तन्त इति ॥९१॥

तदेवं "भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्तते" ( वा० प० १/९० ) इति वाक्यार्थं व्यवस्थाप्य वाक्यस्फोटस्य वर्णरूपा पदरूपाश्च भागाः कल्पिता अकल्पिता वेति पक्षद्वयेऽपि चरमपक्षे वाक्यस्य तदवयवानाञ्च नित्यत्वेनाक्रमस्य वाक्यस्फोटस्य स्वाभिव्यञ्जकध्वनिक्रमेणैव क्रमवत्त्वेन स्वरूपभेदः । आद्यपक्षे तु ध्वनिक्रमेणैव वाक्यस्फोटेऽभागे वर्णपदरूपभागभेदप्रकल्पनं तदभिव्यक्त्युपायभूतमिति रीत्या पक्षद्वयेऽपि ध्वनिक्रमेणैव क्रमवान् पदस्फोटो वाक्यस्फोटो वा, न तु तत्रावभासमानोऽपि क्रमो वस्तुभूत इत्याह—**भागवत्स्वपि तेष्वेवेति ।**

अयमर्थः—भागवत्स्वपि तेषु पदस्फोटेषु वाक्यस्फोटेषु वाऽभ्युपगम्यमानेषु, अभिव्यञ्जकस्य ध्वनेः क्रमादेव तेषां पदवाक्यस्फोटानां रूपभेदः, ध्वनेः क्रमेणैव क्रमवत्त्वेन भागाख्यः स्वभावभेदः, न; स्वतो नित्यत्वात्; क्रमस्य च तत्तत्क्षणसम्बन्धरूपस्य जायमानधर्मत्वात् । अभिव्यञ्जका हि ध्वनय; क्रमवत्कारणजा इति स्फोटभागानां वर्णरूपाणां पदरूपाणां वा स्वक्रमानुरूपामेवाभिव्यक्तिं जनयन्तीति । वा = अथवा निर्भागेषु तेषु स्फोटेष्वभ्युपगम्यमानेषु ध्वनेः क्रमादेव वर्णपदरूपभागभेदप्रकल्पनं पदवाक्यस्फोटाभिव्यक्तावभ्युपायभूतमिति ।

अयं भावः—अस्ति स्फोटविषये मतत्रयम् । तथा हि—केचिद् गौरित्यत्र नित्या गकारौकारविसर्गा एव पदम्, नास्ति तदतिरिक्तं पदमित्येकम् । अस्ति गौरित्येकं पदं नित्यम्, गकारौकारविसर्गास्तु तदवयवा नित्या इत्यपरम् । अस्ति गौरित्येकं पदम्, न सन्ति च गकारौकारविसर्गास्तदवयवाः, स्फोटव्यञ्जकध्वनिक्रमकल्पितास्तु स्फोटस्य भागत्वेन प्रत्यवभासन्त इति तृतीयम् ।

तत्र येऽपि वर्णभेदवादिनः प्रथमे गकारौकारविसर्गमात्रमेव पदं प्रतिपन्ना नान्यस्तेभ्यो

**अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।**
**कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ।।९३।।**

---

निर्भागेषु वा भागभेदप्रकल्पनाकृतशक्तिविशेषपरिग्रहा बुद्धयो यथोपायत्वं प्रतिपद्यन्ते, तदनन्तरश्लोकेषु वर्णितम् ।।९२।।

आकृतिनित्यत्वाच्छब्दनित्यत्वं केचिद् आचक्षाणाः 'उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवति' इत्येवमादिषु स्फोटशब्दवाच्यां शब्दत्वादन्यां क्रमजन्मभिरयुगपत्कालैराश्रयैः क्रमेण प्रकल्पितोपलब्धिनिमित्तसंस्कारां शब्दाकृतिमाचक्षते । उत्पत्तिमत्यस्तु

---

वर्णेभ्यो व्यतिरिक्तस्तैरेव वर्णरूपैर्ग्रहणोपायैर्ग्राह्यो वस्तुतो गकारादिरूपवर्णभागरहितः शब्दात्मा विद्यत इति मन्यन्ते, नित्यत्वञ्च वर्णानामभ्युपगच्छन्ति; तेषां मते कल्पितस्य गकारादिवर्णसमुदायरूपस्य पदस्य ये स्वरूपतोऽव्यपदेश्या वर्णरूपास्तुरीयांशपदाभिलप्याः सूक्ष्मा अंशास्तेषां क्रमेण ध्वनिभिरभिव्यक्तावभ्युपगम्यमानायामभिव्यक्तेः क्षणिकत्वाद् वर्णसमुदायरूपस्य पदस्य स्वरूपानवधारणम् । किञ्चान्त्येन ध्वनिना जनितस्य व्यक्तशब्दरूपोपग्राहिणोऽन्त्यस्य शब्दपरिच्छेदस्याविषयत्वं च पूर्ववर्णानां प्रसज्यते, तदभिव्यक्तीनां क्षणिकत्वेनाविद्यमानत्वात् । यदि तु वर्णानां नित्यत्वेन यौगपद्येनैव सर्वावयवाभिव्यक्तिः स्वीक्रियते, तदा 'गवे' इति, 'वेग' इति, 'तेन' इति, 'न ते' इति द्वयोर्द्वयोः श्रुत्यविशेषप्रसङ्गः ।

तत्र यद्यर्थान्तरसम्बन्धिशब्दान्तरं सभागं स्वीक्रियते—गवे इति, वेग इति च; तदास्मिन् द्वितीयस्मिन् मते नायं श्रुत्यविशेषप्रसङ्गरूपो दोषः, किन्तु तस्मिन्नप्यक्रमे गवेवेगादिशब्देऽभिव्यञ्जकध्वनिक्रमकृता क्रमभेदवती प्रतिपत्तिः । दृष्टो हि मण्डूकादिवसास्नेहवत्प्रदीपाभिव्यक्तेषु रज्ज्वादिषु सर्पादिप्रतिपत्तिभेदः । तथा हि—अलक्तकाज्यातिच्छत्रतैलमण्डूकवसापूर्वगर्भावरकद्रव्यालक्तकवर्त्तिप्रज्वलितप्रदीपाभिव्यक्तानि दीर्घसन्निवेशद्रव्याण्यपवरकादिषु सर्पवद् दृश्यन्त इति । तथा च यद्यस्मिन् द्वितीयकल्पेऽपि ध्वनिधर्म एव क्रमः स्फोटे आरोप्यते, तदा व्यर्थाऽवयवकल्पना । किञ्च, नित्यः स्फोटः सावयवश्चेत्येषा कल्पना लोकेऽदृष्टचरी, सावयवस्यानित्यत्वनियमदर्शनादिति ।

यदि तु गौरिति गकारादिरूपभागरहितमेकं नित्यञ्च पदमिति तृतीयं मतम्, तदा व्यञ्जकध्वनिभेदकृतभागभेदप्रकल्पनाकृतशक्तिविशेषपरिग्रहवत्यो वर्णपदबुद्धयो यथा पदवाक्यस्फोटग्रहणोपायत्वं प्रतिपद्यन्ते, तथा वर्णितं प्राग् यथाद्यसंख्याग्रहणमित्यारभ्य यथानुपूर्वीनियम इत्यन्तेषु समनन्तरश्लोकेष्विति ।।९२।।

पूर्वम् ''संज्ञिनीं व्यक्तिमिच्छन्ति सूत्रे ग्राह्यामथापरे । जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते ।।'' ( वा० प० १/६९ ) इति कारिकया अग्निशब्दे या जातिः, सा संज्ञा, व्यक्तिस्तु संज्ञिनीति जातिव्यक्त्योः संज्ञासंज्ञिभाव उक्तः, न तु शब्दगताया जातेः स्फोटरूपत्वमुक्तम् । किञ्च, महता प्रघट्टकेन प्रयत्नेन च वर्णपदवाक्यरूपतया भिन्नः सभागोऽभागो वा स्फोट एको नित्यश्च विशिष्टप्रयत्नैः स्थानकरणाभिघातेन जायमानैर्ध्वनिभिरभिव्यज्यत इत्युपवर्णितम् । अथेदानीं वर्णपदवाक्यगता जातय एव स्फोट इति दर्शनमाह—**अनेकव्यक्त्यभिव्यङ्ग्येति ।**

**अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः ।**
**उपलब्धौ निमित्तत्वमुपयाति प्रकाशवत् ।।९४।।**

---

शब्दव्यक्तयः सत्यव्यपदेश्यरूपत्वे स्फोटं व्यपदेश्यरूपमवद्योतयन्त्यो ध्वनिव्यपदेशं लभन्ते ।।९३।।

अन्ये त्वाकृतिव्यक्तिव्यवहारप्रक्रियावैधर्म्यादिकमेव शब्दतत्त्वं नित्यमलब्धपरिणामं स्वनिमित्तेभ्यः प्राप्तविकारैर्ध्वनिभिरनाश्रितं ध्वनिषु प्रदीपादिप्रकाशन्यायेनासति वस्तुसम्प्रमोहे प्राप्तव्यञ्जकध्वनिविक्रियानुरागमुपलब्धरूपमिवाभिव्यज्यत इत्याहुः ।।९४।।

---

अयमर्थः—वर्णपदवाक्यरूपा व्यक्तय एव ध्वनयो विशिष्टप्रयत्नस्थानकरणाभिघातजाताः, वर्णपदवाक्यगता जातयस्तु वर्णादिषु प्रत्येकमेकाः स्फोटरूपाः स्वाश्रयैर्व्यक्तिभिरभिव्यज्यन्त इति । कैश्चिदित्यस्य स्मृताः प्रकल्पिता इत्युभाभ्यां तन्त्रेण सम्बन्धः ।

अयं भावः—वर्णपदवाक्यगतां तत्तज्जातिमेव केचित् स्फोट इति वदन्ति । "सिद्धे शब्दार्थसम्बन्धे" ( म० भा० पस्पशा० ) इति वार्तिकोक्तं शब्दनित्यत्वञ्च शब्दगतजातेर्नित्यत्वान्न स्वरूपनित्यत्वादित्याचक्षते । वर्णत्वादिव्याप्यजातिषु स्फोटपदप्रयोगस्तु व्यक्त्यभिव्यङ्ग्यत्वात् । व्यञ्जकत्वादेव च तस्या ध्वनयो व्यक्तय इत्युच्यन्ते । किञ्च महाभाष्ये 'उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवति' इति ।

अस्यार्थः—"कृपो रो लः" ( पा० ८/२/१८ ) इत्यत्रोभयत्र स्थानिन्यादेशे च रत्वलत्वजातिरूपौ स्फोटावेव निर्दिश्येते, व्यक्त्युपादानं तु नान्तरीयकमिति ।

एवमन्यत्रापि—"स्फोटः शब्दो ध्वनिस्तस्य व्यायाम उपजायते" इति । अत्र तस्य व्यायामः स्फोटस्य व्यञ्जको व्यापारो ध्वनिः स्थानकरणाभिघातैरुपजायते, न तु स्फोट इत्यर्थः ।

एवमादिष्वभियुक्तवाक्येषु शब्दत्वादन्यां वर्णत्वादिव्याप्यां वर्णादिगतां जातिमेव स्फोटशब्दवाच्यामाचक्षते । शब्दत्वं तु सर्वशब्दसाधारणमिति तस्य वाचकत्वे सर्वेषां शब्दानां सर्वार्थवाचकत्वप्रसङ्गरूपः सङ्करः प्रसज्येत । सा च स्फोटरूपा जातिः क्रमजन्मभिरत एवायुगपत्कालैर्व्यक्तिरूपैः स्वाश्रयैर्व्यञ्जकैः स्वगतक्रमाध्यारोपणेन संस्क्रियते । स एव संस्कारो जातिरूपस्य स्फोटस्याक्रमस्य क्रमवत्तयोपलब्धौ निमित्तम् । शब्दव्यक्तयस्तूत्पत्तिमत्यः स्वत इतरव्यावृत्ततयाऽव्यपदेश्या अपि स्वतो व्यपदेश्यस्वभावां स्फोटरूपां जातिमवद्योतयन्त्यः, तेन व्यावृत्तरूपा ध्वनिव्यपदेशं लभन्ते ।

अयं भावः—यथा घटत्वादिजातयो घटादिभिः स्वाश्रयैरभिव्यक्ता एव स्वाश्रयस्य घटादेरितरव्यावृत्ततया व्यपदेशहेतवः, स्वतस्तु घटादयो न व्यपदेश्याः, घटत्वादिनैव तेषां व्यपदेशदर्शनात्; तथा वर्णादिगताः स्फोटरूपा जातयोऽपि स्वाश्रयाभिव्यक्ता एव स्वाश्रयस्य स्वेन रूपेण व्यपदेशरूपमुपकारं कर्तुं प्रभवन्ति, नान्यैर्ध्वनिभिरभिव्यक्ताः, घटत्वादिजातिषु तथा दर्शनादिति ।।९३।।

अपरे तु—आकाशगत एक एव स्फोटाख्यो वर्णो विभुर्नित्यश्च, स चाभिव्यञ्जकध्वनिभिर्नानाविधैर्बहुधा भिद्यमानो नानावर्णपदवाक्यरूपतां धत्त इत्याहुः, तन्मतमालम्ब्याह—**अविकारस्येति** ।

**न चानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता ।**
**आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते ।।९५।।**

---

इह केचिदभिव्यक्तिमेवानित्यत्वसमधिगमहेतुत्वेनोपदिशन्ति । अनित्यः शब्दोऽभिव्यङ्ग्यत्वाद् घटवत् । इहानित्यानां घटादीनां प्रदीपादिभिरभिव्यक्तिर्दृष्टा, शब्दश्चायं ध्वनिभिरभिव्यज्यत इत्युपगम्यते, तस्मादनित्यः । अथ नाभिव्यज्यते प्राप्तमिदमुत्पद्यत इति, अतोऽप्यनित्य एव । तत्र येषां जातयः सन्ति, नित्याश्च, तान् प्रत्युच्यते—उभयथा दृष्टत्वादनपदेश इति ।

---

अयमर्थः—निमित्तैः स्वकारणैः स्थानकरणाभिघातरूपैर्विकृतः समुत्पादितो ध्वनिरविकारस्य स्थानकरणाभिघातप्रयुक्तोत्पत्त्यादिविक्रियारहितस्य ध्वनिकृतविक्रियारहितस्य च शब्दस्य स्फोटाख्यस्योपलब्धौ प्रकाशवत् प्रदीपादिप्रकाशवद् निमित्तत्वमुपयाति, यथा प्रदीपप्रकाशः स्वकृतविक्रियारहितस्य घटादेरुपलब्धौ निमित्तत्वमुपयाति, तद्वदिति ।

अयं भावः—केचिदाहुः "आकाशगता नित्या एका च शब्दव्यक्तिः" इति । यदुक्तम्—"तस्मिन्नित्यां शब्दव्यक्तिं प्रतिजानते" इति ।

अस्यार्थः—तस्मिन् आकाशे, नित्यां शब्दव्यक्तिमेकवचनोपादानादेकां प्रतिजानत इति । ते हि वदन्ति—करणाभिघातो वक्त्रान्तर्जायमानस्य ध्वनेरेव भेदे निमित्तम्, न तु वक्त्राद् बाह्यस्य स्फोटस्य भेद इति । तथा च यथा घटादिष्ववयविष्वाकृतिव्यक्तिव्यवहारप्रक्रिया, तथा एकस्मिन् नित्ये च शब्दे नास्ति, किन्तु तद्वैधर्म्यमस्ति ।

तथा हि—यथा अवयविनो ज्ञप्तौ, उत्पत्तौ, स्थितौ चावयवाः कारणतामुपगच्छन्तोऽवयविन आधारः, न तथा जातीनामुत्पादकत्वेन व्यक्तय आधारः , नित्यत्वाज्जातीनाम् । नापि जातीनां स्थितिहेतुतया व्यक्तय आधारः, महाप्रलये घटत्वादिजातीनां व्यक्तिभिर्विनाऽप्यवस्थानात् । तस्माद् घटादिष्ववयवद्वयमवयविन आधारः, अवयविरूपा व्यक्तिस्तु घटत्वादिजातीनां स्वानुरूपप्रत्ययेऽभिधाने च हेतुः, न त्वाधारः, प्रागुक्तरीत्या तासामुत्पत्तिस्थितिज्ञप्तिहेतुत्वाभावात् । तेन घट इति विशेषणतया जातिप्रत्ययो घट इत्यभिधानञ्च भवति । शब्दे तु सा प्रक्रिया नास्ति, शब्दभागानां क्षणिकत्वेन यौगपद्याभावादवयविन आधारत्वासम्भवात् ।

एवञ्चैकमेव शब्दतत्त्वं नित्यं स्वनिमित्तेभ्यस्तत्तत्स्थानकरणाभिघातेभ्यः प्राप्तविकारैर्ध्वनिभिरलब्धपरिणामं नित्यत्वेऽपि प्रधानवदविकृतं ध्वनिष्वनाश्रितं स्वव्यञ्जकध्वनिविक्रियाणामाध्यासिकसम्बन्धबलादपूर्वोपजातरूपं सभागमिव ध्वनिभिरभिव्यज्यते । यथाऽसति घटादिवस्तुसम्प्रमोहे प्रदीपप्रकाशेन स्वकृतविक्रियारहितमेव घटादिवस्त्वभिव्यज्यते, यत्र तु घटादिवस्तुनि सम्प्रमोहस्तत्र त्वपूर्वमेव प्रातिभासिकं किमपि पटादिकं वस्तु समुत्पन्नं प्रदीपप्रकाशेनाभिव्यज्यत इति ।।९४।।

"न चानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता" इत्यारभ्य "तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु"

येषां तु नैव किञ्चिन्नित्यमस्ति तेष्वसिद्धत्वेन प्रत्यवतिष्ठमानेष्वनैकान्तिकत्वस्य नित्यशब्दवादिनः प्रथमतरमसिद्धत्वेनैव प्रत्यवतिष्ठन्ते । कथम् ? परं हि प्रत्यभिव्यङ्ग्यत्वादित्यनपदेशः, सन्दिग्धत्वाद् विकल्पप्रसङ्गो वानुषङ्गिणामित्यनवस्था स्यात् तर्कस्य ॥९५॥

---

इत्येतदन्तं यावदुत्तरपक्षश्लोकाः । अत्र पूर्वपक्षा अपि वर्णत उपात्ताः । अत्र नित्यस्य शब्दस्य ध्वनिभिरभिव्यक्तिर्न सम्भवति, अनित्यानामेव घटपटादीनां प्रदीपप्रकाशेनाभिव्यक्तिदर्शनादित्याशङ्क्याह—**न चानित्येष्वभिव्यक्तिरिति ।**

अयमर्थः—अभिव्यक्तिरनित्येष्वेव नियमेन न च व्यवस्थिता, यतो ये खलु तार्किका अनुगतप्रत्ययाभिधानगम्या घटत्वादिजातीर्नित्या मन्वते, तन्मते जातेराश्रयभूतैर्घटादिभिर्द्रव्यैर्नित्यानामपि घटत्वादिजातीनामभिव्यक्तिरिष्यते । अत एव व्यज्यते जातिर्ययेति व्युत्पत्त्या आश्रयस्य व्यक्तिरिति संज्ञेति । नन्वेवं व्यक्तिप्रत्ययः पूर्वं जातिप्रत्ययस्तु पश्चादित्यायाति । न चैतद् युज्यते, घट इति प्रत्यये हि घटत्वरूपा जातिर्विशेषणतया प्रतीयते, विशिष्टबुद्धौ च विशेषणज्ञानं करणं भवतीति रीत्या जातिप्रत्ययस्य प्राग्भावित्वावश्यम्भावादिति चेत्, न, अनुगतसंस्थानरूपाकृतिविशिष्टा व्यक्तिः प्राक् प्रतीयते, ततो जातेरभिव्यक्तौ तद्विविष्टा व्यक्तिः पश्चात् प्रतीयत इति क्रमाभ्युपगमादिति ।

अयं भावः—शब्दानित्यत्ववादिनस्तार्किका अभिव्यक्तिमेव शब्देऽनित्यत्वरूपसाध्यसाधनत्वेन व्यपदिशन्ति । अयं च तेषां प्रयोगः—शब्दोऽनित्यः, अभिव्यङ्ग्यत्वात्, घटवत् । इहानित्यानां घटादीनां प्रदीपादिभिरभिव्यक्तिर्दृष्टा, शब्दश्चायं ध्वनिभिरभिव्यज्यत इत्युपगम्यते, तस्मादनित्य इति । यदि तु शब्दो नाभिव्यज्यत इति स्वीकृत्य हेतोः स्वरूपासिद्धत्वमुच्यते, तदा शब्द उत्पद्यत इति प्राप्तं भवति । अतोऽप्यनित्य एव शब्द इति । एवमेतदनुमानेन शब्दानित्यत्वे प्राप्ते इदं समाधीयते–येषां मते जातयः सन्ति, नित्याश्च ताः, तन्मतेऽनित्यानां घटादीनां, नित्यानाञ्च जातीनामभिव्यङ्ग्यत्वदर्शनादनैकान्तिकोऽयं हेतुरिति न व्यपदेश्यः ।

येषां तु बौद्धानुगामिनां मते नैव किञ्चिन्नित्यमस्ति, तेषु प्रकृतहेतावनैकान्तिकत्वस्यासिद्धत्वेन प्रत्यवतिष्ठमानेषु नित्यशब्दवादिनः प्रकृतसाधनप्रयोगकाल एव नित्यानां जात्यादीनामङ्गीकरणेनानैकान्तिकत्वमुद्भाव्य व्यतिरेकव्याप्त्यसिद्ध्या प्रत्यवतिष्ठन्ते । यथा च प्रकृते उभयवादिसिद्धाया व्यतिरेकव्याप्तेरभावात् सन्देहः । तथा च नायं शब्दाभिव्यक्तिवादिनं प्रति प्रयोगः सम्भवति । यदि तु व्यतिरेकव्याप्तिमनपेक्ष्य प्रदीपाभिव्यङ्ग्यघटादिसाम्यात् शब्दस्यानित्यत्वं भवता प्रसाध्यते, तदा नित्यजातिसाधर्म्यान्नित्यत्वमपि प्राप्नोतीति शब्दे नित्यत्वानित्यत्वयोर्विकल्पः प्रसज्यते ।

किञ्च, घटाद्यनित्यपदार्थसाधर्म्येण शब्देऽनित्यत्वसाधने यावन्तो धर्मा घटे जातौ च, ते सर्वेऽपि रूपादयश्चक्षुषत्वादयश्च शब्दे प्रसज्यन्त इत्येवमस्य तर्कस्यानवस्था वेदितव्येति । अत एव च साधर्म्यसमा असदुत्तरत्वरूपजातित्वमुद्घोष्य दोषपक्षे निक्षिप्ता नैयायिकैः ॥९५॥

**देशादिभिश्च सम्बन्धो दृष्टः कायवतामपि ।**
**देशभेदविकल्पेऽपि न भेदो ध्वनिशब्दयोः ।।९६।।**

---

अथापरः पूर्वपक्ष इहोपादीयते—देशभेदान्नाभिव्यज्यते शब्दः । समानदेशस्था हि घटादयः प्रदीपादिभिर्व्यज्यन्ते । करणसंयोगविभागाभ्यां तु व्यञ्जकाभ्यामन्यत्र शब्दोपलब्धिरिति । स चायं ध्वनिषु व्यञ्जकेष्वप्रसङ्गः । तत्रापि ब्रुवते—कथमेकदेशस्थः शब्दो नानादेशैरतिविप्रकृष्टैर्ध्वनिभिर्व्यज्यत इति ।

तत्रेदं प्रतिविधीयते—देशैकत्वं देशनानात्वमिति कायवतामेष धर्मः । कायवन्तोऽपि तावदादित्यादयः परिच्छिन्नदेशा नानाधिकरणस्था इहोपलभ्यन्ते । अमूर्तयोस्तु ध्वनिशब्दयोर्देशदेशिव्यवहारातिक्रमात् सत्यपि देशभेदविकल्पाभिमाने नैवासौ तयोर्भेदो विद्यत इति ।।९६।।

---

नन्वभिव्यङ्ग्याभिव्यञ्जकयोर्ध्वनिशब्दयोर्देशभेदान्नाभिव्यज्यते शब्द इत्याशङ्क्य देशभेदविकल्पेऽपि वस्तुतो देशभेदाभावादभिव्यक्तिर्युक्तेत्याह—**देशादिभिश्च सम्बन्ध इति ।**

अयमर्थः—इह जगति, कायवताम् = मूर्तिमतामेव, चशब्दस्त्वर्थे । मूर्तिमतामेव तु गोघटादीनां देशादिभिः सह सम्बन्धो दृष्टः, नामूर्तानाम् । यस्तु गृहाङ्गणे शब्दः, रथ्यायां शब्द इत्यादिव्यवहारे देशभेदोऽनुभूयते, स तु कल्पित एव, न वस्तुभूतः, अमूर्तत्वेन देशसम्बन्धासम्भवादित्याह—**देशभेदविकल्पेऽपि न भेदो ध्वनिशब्दयोरिति** । ध्वनिशब्दयोर्देशभेदकल्पनायामपि वस्तुतो न देशभेदः, अमूर्तत्वादित्यर्थः ।

अयं भावः—इह केचित् शब्दस्य ध्वनिकृताभिव्यक्तौ प्रत्यवतिष्ठन्ते, अभिव्यङ्ग्याभिव्यञ्जकयोर्ध्वनिशब्दयोर्देशभेदान्नाभिव्यज्यते शब्द इति । समानदेशस्था हि घटादयः प्रदीपादिभिर्व्यज्यन्ते । प्रकृते तु करणसंयोगविभागाभ्यां करणाश्रिताभ्यां व्यञ्जकाभ्यां तज्जन्यध्वनिभ्यो वा करणदेशाश्रितेभ्यो व्यञ्जकेभ्योऽन्यत्राकाशे शब्दोपलब्धिरिति स्वीक्रियते । तथा चाकाशरूपैकदेशस्थः शब्दः करणसंयोगविभागजन्यैर्नानादेशैरतिविप्रकृष्टैर्ध्वनिभिः कथं व्यज्यते ? अस्य च पूर्वपक्षस्य साधकोऽयं प्रयोगः—शब्दो नाभिव्यज्यते, व्यञ्जकदेशभिन्नदेशस्थत्वात्, व्यतिरेके व्यञ्जकप्रदीपसमानदेशस्थघटादिवदिति ।

तत्रेदं प्रतिविधीयते—व्यञ्जकेषु ध्वनिषु नायं दोषप्रसङ्गः सम्भवति, यतो देशैकत्वं देशनानात्वमिति मूर्तिमतामेष धर्मः । न च ध्वनिशब्दौ मूर्तिमन्तौ । तथा च व्यञ्जकदेशभिन्नदेशस्थितत्वादिति स्वरूपासिद्धो हेतुः ।

किञ्च, ये खलु मूर्तिमत्त्वाद् देशभेदार्हास्तेऽप्येकदेशस्थाः सन्तो नानादेशस्था इवोपलभ्यन्ते । तद्यथा—मूर्तिमन्तोऽप्यादित्यग्रहनक्षत्रादयः परिच्छिन्नदेशा एकस्मिन् काले एकदेशस्था अपि दिग्भ्रमवतां नानादिग्देशस्था इवोपलभ्यन्ते । सोऽयमेकदेशस्थानामपि आदित्यादीनां देशभेदविकल्पः, न तु वस्तुभूतो देशभेदः, तथा आकाशरूपैकदेशस्थयोरपि ध्वनिशब्दयोर्देशभेदविकल्पः ।

**ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।**
**व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः ।।९७।।**

---

अथापरः पूर्वपक्षः—अभिव्यञ्जकनियमान्नाभिव्यज्यते शब्दः । इहाभिव्यङ्क्तव्यं नाभिव्यञ्जकं नियतमपेक्षते । घटादीनां हि मणिप्रदीपौषधिग्रहनक्षत्रैः सर्वैः सर्वेषामभिव्यक्तिः क्रियते । नियतनादाभिव्यञ्जकाश्चाभ्युपगम्यन्ते शब्दाः, वर्णान्तराभिव्यक्तिहेतुभिर्नादैर्वर्णान्तराणामनभिव्यक्तेः, तस्मान्नाभिव्यज्यन्त इति । तत्र प्रतिविधीयते—ग्रहणग्राह्ययोरिति ।

तद्यथा चक्षुःसमवेतं रूपमेव बाह्यरूपस्याभिव्यक्तौ निमित्तम्, न गुणान्तराणि, नापीतराणीन्द्रियाणि, नेन्द्रियान्तरगुणाः, तथा बाह्यार्थाभिव्यक्तिहेतवो भवन्ति ।।९७।।

---

वस्तुतस्त्वमूर्तयोर्ध्वनिशब्दयोर्देशदेशिव्यवहारातिक्रमाद् देशभेदविकल्परूपेऽभिमाने = भ्रान्तिरूपे मिथ्याप्रत्यये सत्यपि नैव वस्तुगत्या तयोर्देशभेदो विद्यत इति । एवञ्च सति देशे तस्य भेदाभेदौ वक्तव्यौ, अदेशयोस्तु ध्वनिशब्दयोरेतन्नास्तीति फलितमिति ।।९६।।

ननु यदभिव्यङ्ग्यं भवति, न तन्नियतमभिव्यञ्जकमपेक्षते । यथा घटादयो मणिप्रदीपौषधिग्रहनक्षत्रैः सर्वैरेवाभिव्यज्यन्ते । शब्दास्तु नैवम्, ते हि नियतान् नादान् स्वाभिव्यञ्जकत्वे नापेक्षन्त इति नाभिव्यङ्ग्याः, किन्तु तत्तत्करणजन्या एवेत्याशङ्क्याह—**ग्रहणग्राह्ययोः सिद्धेति ।**

अयमर्थः—यथा ग्रहणग्राह्ययोः, गृह्यते येन तद्ग्रहणम्, बाह्यरूपादिग्राहकं चक्षुरादीन्द्रियगतं रूपादिकम्, ग्राह्यं च बाह्यं रूपादिकम्, तयोर्व्यङ्ग्यव्यञ्जकभावेन नियता योग्यता सिद्धा । तद्यथा—चक्षुःसमवेतं रूपमेव भास्वरत्वात् स्वसमानजातीयस्य बाह्यरूपस्य ग्राहकम्, न चक्षुःसमवेतानि गुणान्तराणि, नापीतराणीन्द्रियाणि, नेन्द्रियान्तरस्य गुणाः, तथा स्फोटनादयोरपि नियताभिव्यङ्ग्याभिव्यञ्जकभावप्रयोजिका योग्यता सिद्धा भवतीति । तथा च शब्दो नाभिव्यज्यते, नियताभिव्यञ्जकापेक्षत्वाद् व्यतिरेके घटादिवद् इत्यत्र प्रयोगे चक्षुरादिरूपग्राह्येषु बाह्यरूपादिष्वनैकान्तिको हेतुरिति ।

अयं भावः—लोके यदभिव्यङ्ग्यं भवति, न तन्नियतं व्यञ्जकमपेक्षते । घटादीनां हि सर्वेषामभिव्यङ्ग्यानां मणिप्रदीपौषधिग्रहनक्षत्रैः सर्वैरभिव्यक्तिः क्रियते । शब्दानां त्वभिव्यक्तिर्नियतैर्नादैरभिव्यञ्जकैरभ्युपगम्यते, वर्णान्तराभिव्यक्तिहेतुभिर्नादैर्वर्णान्तराणामनभिव्यक्तेः । तस्मान्नियताभिव्यञ्जकापेक्षणान्नाभिव्यज्यन्ते शब्दा इति पूर्वपक्षः ।

तत्र समाधीयते—**ग्रहणग्राह्ययोरिति** । तद्यथा चक्षुःसमवेतं रूपमेव बाह्यरूपस्य तदाश्रयस्य च बाह्यार्थस्याभिव्यक्तौ निमित्तम्, न चक्षुःसमवेतानि गुणान्तराणि, नापीतराणीन्द्रियाणि, नेन्द्रियान्तरगुणा इत्यस्ति बाह्यरूपतदाश्रयाभिव्यक्तौ नियतव्यञ्जकापेक्षा, तथा स्फोटस्याप्यभिव्यक्तौ नियतनादरूपव्यञ्जकापेक्षा न दोषायेति ।।९७।।

**सदृशग्रहणानां च गन्धादीनां प्रकाशकम् ।**
**निमित्तं नियतं लोके प्रतिद्रव्यमवस्थितम् ।।९८।।**
**प्रकाशकानां भेदाँश्च प्रकाश्योऽर्थोऽनुवर्तते ।**
**तैलोदकादिभेदे तत् प्रत्यक्षं प्रतिबिम्बके ।।९९।।**

---

तुल्येन्द्रियग्राह्येष्वयं नियमो न विद्यत इति पर्यनुयोगे प्रतिविधीयते—

तुल्येन्द्रियग्राह्येष्वप्येष धर्मो दृश्यते । तद्यथा नदीशैलेयादीनां द्रव्याणां किञ्चिदेव संयोगिद्रव्यान्तरं कस्यचिदेव द्रव्यस्य गन्धविशेषाभिव्यक्तौ समर्थं भवति ॥९८॥

अथापरः पूर्वपक्षः—नाभिव्यज्यते शब्दः, वृद्धिह्राससंख्याभेदेष्वभिव्यञ्जकानामभिव्यङ्ग्यस्य तद्धर्मसमन्वयात् । न ह्यभिव्यञ्जकानां वृद्धिह्रासयोरभिव्यङ्ग्यानामर्थानां वृद्धिह्रासावुपलभ्येते । तद्यथा—प्रदीपस्य वृद्धिह्रासौ न घटादीनाम् । न खल्वपि प्रदीपस्य संख्याभेदे संख्यान्तरयुक्तानां घटादीनां प्रदीपसंख्याभेदनिमित्तः संख्यान्तरयोगो दृश्यते । शब्दस्य त्वभिघातभेदे दृश्यते संख्यापरिमाणभेदः । तस्मान्नाभिव्यज्यत इति । तत्र प्रतिविधीयते—

---

यो हि पूर्वपक्षिणा घटादीनामभिव्यङ्ग्यानां नियताभिव्यञ्जकानपेक्षानियम उपदर्शितः, सोऽभिव्यङ्ग्यानां बाह्यविषयाणामभिव्यञ्जकानां चेन्द्रियगतगुणानां वैजात्य एव । यथा घटादीनामभिव्यङ्ग्यानां चक्षुःसमवेतस्य रूपस्य चाभिव्यञ्जकस्य द्रव्यत्वगुणत्वादिभिर्वैजात्यम् । यत्र त्वभिव्यङ्ग्याभिव्यञ्जकयोः साजात्यम्, यथाभिव्यङ्ग्यस्य बाह्यस्य रूपस्य गन्धस्य रसादेर्वा गुणस्याभिव्यञ्जकस्य चेन्द्रियगतस्य रूपादेः साजात्यम्, तत्र नियताभिव्यञ्जकापेक्षानियम एवेति लोकप्रसिद्धदृष्टान्तेन द्रढयति—**सदृशग्रहणानां चेति** ।

अयमर्थः—लोके सदृशग्रहणानां स्वाश्रयसंयोगिद्रव्यान्तरगतस्वसदृशगन्धादिगुणग्राह्याणां गन्धादीनां प्रकाशकमभिव्यञ्जकं प्रतिद्रव्यं प्रत्येकं संयोगिद्रव्येऽवस्थितं निमित्तं नियतं दृष्टमिति ।

अयं भावः—न केवलं श्रवणग्राह्ये नादाभिव्यङ्ग्ये शब्द एव नियताभिव्यञ्जकापेक्षानियम उपलभ्यते, किन्तु घ्राणादिग्राह्येषु गन्धादिष्वप्यभिव्यङ्ग्येषु । तद्यथा—नखस्य गन्धो नखम्पचाया यवागूवा नखसंयोगिन्या गन्धेनैव तप्तयवागूकृतनखपाकद्वाराऽभिव्यज्यते, यथा वा शैलेयस्य गन्धः कुङ्कुमगन्धो वा स्वाश्रयसंयोगिगोघृतगन्धेनैवाभिव्यज्यते, यथा वा जलस्य मधुरो रसो हरीतक्या रसेन मधुरेणैवानुद्भूतेनाभिव्यज्यत इति ॥९८॥

ननु तथापि शब्दो नाभिव्यज्यते, तत्राभिव्यञ्जकनादधर्मसमन्वयदर्शनात् । तथा हि नादस्य वृद्ध्या शब्दे वृद्धिरुपलभ्यते, महान् शब्द इति । नादाल्पत्वे तु अल्पः शब्द इति । नादस्य करणाभिघातस्य वा संख्याभेदे तु दृश्यते शब्दे संख्याभेदः—एकस्मिन्नभिघात एकः शब्दः, द्वयोरभिघातयोर्द्वौ शब्दाविति । एवं व्यञ्जकाभिघातभेदे परिमाणभेदोऽपि शब्दे दृश्यते— अल्पो महानिति । अभिव्यङ्ग्यास्तु घटादयो नाभिव्यञ्जकस्य प्रदीपस्य वृद्धिह्रासावनुसरन्ति, नापि प्रदीपस्य संख्या-

**विरुद्धपरिमाणेषु वज्रादर्शतलादिषु ।**
**पर्वतादिसरूपाणां भावानां नास्ति सम्भवः ।।१००।।**

---

दृष्टमभिव्यङ्ग्यानामभिव्यञ्जकभेदानुविधानम् । तद्यथा—निम्नेष्वादर्शतलादिषु मुखप्रतिबिम्बमुन्नतं दृश्यते, उन्नतेषु निम्नम्, खड्गे दीर्घम्, प्रियङ्गुतैले श्यामम्, चीनशस्त्र-यवनकाचादिष्वादर्शप्रमाणभेदानुपातीत्यपरिमाणो भेदविकल्पः । संख्याभेदोऽप्यादर्शभेदे जलतरङ्गभेदे च दृश्यते सूर्य्यादिप्रतिबिम्बनाम् ।।९९।।

तत्रैतत् स्यात्—प्रतिबिम्बमादर्शादिषु चन्द्रादिभ्यो भावान्तरमेव सन्निविष्टमुपलभ्यत इति । तत्र प्रतिविधीयते—

न हि वज्रादिष्वाधारेषु विरुद्धपरिमाणानामन्तःसन्निवेशिनां पर्वतादिसरूपाणां भावानामुत्पत्तिः सम्भवतीति ।।१००।।

---

भेदे संख्यान्तरपरिमाणान्तरयुक्तानां घटादीनां संख्यापरिमाणभेदोऽनुभूयते लोके, तस्मादभिव्यञ्जकनादधर्म-समन्वयदर्शनान्नाभिव्यज्यते शब्द इत्याशङ्क्याह—**प्रकाशकानां भेदाँश्चेति ।**

अयमर्थः— प्रकाश्योऽभिव्यङ्ग्योऽर्थः, प्रकाशकानामभिव्यञ्जकानां भेदान् धर्मभेदान्, अनुवर्तते अनुसरति, च अपि । तत्प्रकाश्यार्थस्य प्रकाशकधर्मानुवर्तित्वम्, तैलोदकादिभेदे अभिव्यञ्जकानां तैलोदकादीनां भेदे सति तदभिव्यङ्ग्ये मुखादिप्रतिबिम्बके प्रत्यक्षं दृष्टमिति ।

अयं भावः—शब्दो नाभिव्यज्यते, व्यञ्जकधर्मानुविधायित्वात्, व्यतिरेके घटादिवदिति प्रयोगे व्यञ्जकधर्मानुविधायित्वं हेतुरनैकान्तिकः, यतो दृष्टमभिव्यङ्ग्यानामभिव्यञ्जकधर्मभेदानुविधान-मभिव्यञ्जकधर्मानुविधानमपि । तद्यथा—निम्नेषु आदर्शतलादिषु मुखप्रतिबिम्बमुन्नतं दृश्यते, उन्नतेषु निम्नमिति स्थानभेदानुविधानम् । खड्गे दीर्घम्, प्रियङ्गुतैले श्याममित्यभिव्यञ्जकधर्मानुविधानम् । चीनशस्त्रयवनाकाचादिष्वभिव्यक्तस्य प्रतिबिम्बस्यादर्शप्रमाणानुविधानं न, किन्तु आदर्शप्रमाणभेदानु-विधानम् । दृश्यते हि यवनकाचनाम्नि अणुमहद्वीक्षणकाचे स्वल्पपरिमाणापि पिपीलिका गजप्रमाणेत्येव-मस्त्यभिव्यङ्ग्यानामभिव्यञ्जकधर्मग्रहणे तद्भिन्नधर्मग्रहणे परिमाणभेदग्रहणे चानन्तो विकल्पः ।

किञ्च सूर्यादिप्रतिबिम्बानामभिव्यङ्ग्यानामादर्शभेदे जलतरङ्गभेदे च संख्याभेदानुविधानमपि दृश्यते । यतोऽभिव्यङ्ग्यस्य सूर्यबिम्बस्यैकत्वेऽपि बहूनि प्रतिबिम्बान्युपाधिभेदेन प्रतीयन्त इति । तथा च प्रतिबिम्बस्य बिम्बानतिरिक्तत्वादेकमपि प्रतिबिम्बं यथोपाधिभेदेन बहुधा प्रतीयते, तथा एकोऽपि स्फोटात्मा शब्दो व्यञ्जकनादभेदानुविधानेन बहुधाऽनुभूयत इति स्फोटस्याभिव्यङ्ग्यत्वं प्रतिबिम्ब-न्यायेनैवेति । तथा च सूर्यादिप्रतिबिम्बे व्यतिरेकव्यभिचारान्न तद्धर्मानुविधायित्वं हेतुः शब्देऽभि-व्यङ्ग्यत्वसाधक इति ।।९९।।

ननु न प्रतिबिम्बस्य बिम्बानतिरिक्तत्वम्, किन्तु वज्रादर्शादिष्वपूर्वमेव प्रतिबिम्बमुत्पद्यते प्रातिभासिकं व्यावहारिकं वेति तत्र भासमानाः सर्वेऽपि संख्यापरिमाणभेदादयो धर्माः स्वीया एव, न तु व्यञ्जकधर्मानुविधानं तत्रेत्याशङ्क्याह—**निरुद्धपरिमाणेष्विति ।**

**तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ।**
**वृत्तिकालः स्वकालश्च नादभेदाद् विभज्यते ।।१०१।।**

---

नित्यानां हि स्थितौ सहकारिण्याः कालशक्तेर्व्यापारो न विद्यते । लोके व्यवहारेण तु बुद्ध्या पूर्वान्तापरान्तयोरनुगम्यमानात्मतत्त्वाः स्थितिं प्रति न भिद्यन्ते सर्व एव प्रचिताप्रचितरूपा वर्णपदवाक्याख्याः स्फोटाः । उपलब्धिविषयतापत्तौ तु तेषामभिन्नकालानामुपलब्धिस्थित्यभिमानः । वृत्तिकालः स्वकालश्चेति ।

नादो हि प्राकृतः शब्दात्मनि प्रत्यस्यमानस्थितिरूपो भेदस्याग्रहणार्थं ह्रस्वदीर्घप्लुतकालभेदव्यवहारव्यवस्थाहेतुः । वैकृतस्तु नादो बाह्यद्रुतादिवृत्तिकालव्यवस्थां प्रकल्पयति ।।१०१।।

---

अयमर्थः—बिम्बपरिमाणविरुद्धपरिमाणेषु वज्रादर्शतलादिषु बिम्बपर्वतादिसरूपाणामपूर्वाणां भावानां वज्राद्यन्तःसन्निवेशिनां प्रतिबिम्बरूपाणां सम्भवो मितिर्नास्ति, वज्रादीनां विरुद्धपरिमाणत्वेन निबिडावयवत्वेन च तत्र प्रतिबिम्बस्य सन्निवेशासम्भवादिति ।

वस्तुतस्तु बिम्बोपादानकं बिम्बासमसत्ताकं तत्तदुपाधिनिमित्तकं तत्तदुपाधिपरिमाणानुरूपपरिमाणं बिम्बोपाध्योः सम्बद्धं प्रतिबिम्बनामकं किमपि वस्तु समुत्पद्यते । अत एव प्रतिबिम्बग्रहणेन बिम्बमपि गृहीतं भवति । यथा हनूमान् स्वच्छायाग्रहणेन निगृहीतोऽभूत् । अत एव प्रतिबिम्बे स्पर्शगुणोऽस्तीत्युक्तं धर्मशास्त्रेषु—"चाण्डालपतितां छायां स्पृष्ट्वा स्नानं समाचरेत्" इति । अत एवेदानीं कैमरायन्त्रेण प्रतिबिम्बं गृह्यते । टेलीविजनयन्त्रसाहाय्येन च प्रतिबिम्बमन्यत्र गच्छतीत्यादिकमूह्यमिति दिक् ।।१००।।

एवं व्यञ्जकध्वनिकृतं व्यङ्ग्ये स्फोटे कालभेदमुपपाद्योपसंहरति—**तस्मादभिन्नकालेष्विति** ।

अयमर्थः—यतोऽभिव्यञ्जकधर्माननुवर्ततेऽभिव्यङ्ग्यः, तस्माद् वस्तुतोऽभिन्नकालेषु वर्णवाक्यपदादिषु स्फोटेषु द्रुतादिरूपो वृत्तिकालः स्वकालः स्वस्मिन्नध्यारोपितो नादधर्मो ह्रस्वत्वादिर्नादभेदात् स्वाभिव्यञ्जकध्वनिभेदाद् विभज्यते, इतरस्फोटाद् विभागेन भेदेन प्रतीयत इति ।

अयं भावः—ये खल्वनित्या भावास्तेऽनुकूलकालशक्त्याऽनुगृहीताश्चिरकालमवतिष्ठन्ते, प्रतिकूलकालशक्त्याऽनुगृहीता आश्वेव तिरोधीयन्ते । शब्दास्तु नित्याः, अतो नित्यानां शब्दानां स्थितावुपादानकारणशक्तिसहकारिण्याः कालशक्तेर्व्यापारो न विद्यते । यद्यपि शब्दोऽभिव्यक्तिकाले प्रत्यक्षेणोपलभ्यते, अभिव्यक्तेः प्राक् पश्चाच्च नोपलभ्यत इति पूर्वान्तपरान्तयोरनुपलभ्यमानत्वादनित्यत्वं शब्दस्य स्थितौ कालशक्तेर्व्यापारः सम्भाव्यते, तथापि पूर्वान्तापरान्तयोः शब्दस्यानभिव्यक्तावपि तत्राप्यनुगम्यमानस्वतत्त्वाः शब्दा नित्या इत्यभिव्यक्तिकालमात्र एव शब्दोपलब्धिरूपबुद्धिप्रयुक्तेन लोके स्वानित्यत्वव्यवहारेण स्थितिं प्रति चिराचिरभेदेन न खिद्यन्ते सर्व एव व्यञ्जकध्वनिप्रयुक्तप्रचितापचितरूपा ह्रस्वदीर्घादयस्तद्घटिताश्च वर्णपदवाक्याख्याः स्फोटाः । केवलं तु तेषां स्फोटानां वस्तुतोऽभिन्नकालानामप्युपलब्धिविषयतापत्तिदशायामुपलब्धेरनित्यायाः स्थितिप्रयुक्तो नित्यानामपि स्फोटानामनित्योपलब्धिविषयाणां स्थित्यभिमानः, येनाभिन्नकालेष्वपि

**यः संयोगविभागाभ्यां करणैरुपजन्यते ।**
**स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः ।।१०२।।**

अनित्यपक्षे स्थानकरणप्राप्तिविभागहेतुकः प्रथमाभिनिर्वृत्तो यः शब्दः, स स्फोट इत्युच्यते । तज्जातस्तु सर्वदिक्कालस्तद्रूपप्रतिबिम्बोपग्राहिणः सर्वद्रव्याणां स्वेनात्मना निरवयवत्वाद् आकाशस्यापि मुख्यसमवायिदेशवत् संयोगिद्रव्यान्तरदेशप्रविभागोपचारे सति, देशनैरन्तर्यप्रत्यासत्त्या कार्यकारणसन्तानाविच्छेदेन यथोत्तरमपचीयमानपूर्वप्रतिबिम्बोपग्रहशक्तयो मन्दप्रदीपप्रकाशितरूपकल्पाः क्रमेण प्रध्वंसमाना ये वर्णश्रुतिं विभजन्ति, ते ध्वनय इत्युच्यन्ते ।

नित्यपक्षे तु संयोगजविभागजध्वनिव्यङ्ग्यः स्फोटः । एकेषां संयोगविभागजध्वनिसम्भूतनादाभिव्यङ्ग्यः । स्फोटरूपानुग्राहिणस्तु यथोत्तरमपचीयमानाभिव्यक्तिसामर्थ्या द्रुतादिवृत्तिभेदव्यवस्था हेतवोऽपचयात्मका ध्वनयः ॥१०२॥

स्फोटेषु द्रुतादिवृत्तिरूपो ह्रस्वत्वदीर्घत्वादिरूपश्च स्वगतः कालभेदः प्रतीयत इत्यभिप्रेत्य स्फोटेषु वृत्तिकालः स्वकालश्च नादभेदादेवेत्युक्तम् ।

तस्यायं भावः—शब्दस्य ग्रहणे हेतुर्यः प्राकृतो नादः, तस्यानित्यत्वेनाग्राहिकया कालशक्त्या सम्पादितं स्थितिरूपं व्यङ्ग्यव्यञ्जकयोर्ध्वनिस्फोटयोर्भेदस्याग्रहणार्थं शब्दस्वरूपेऽध्यस्यमानं ह्रस्वदीर्घप्लुतरूपकालभेदव्यवस्थाहेतुः ।

वस्तुतस्तु शब्दे स्फोटात्मनि प्रचयापचयरूपं ह्रस्वत्वदीर्घत्वादिकं नास्ति, नित्यत्वेनाभिन्नकालत्वात् । एवं शब्दोपलब्धेरनित्यायाश्चिराचिरस्थितिप्रयुक्तो नित्येऽपि शब्दे तद्विषयो द्रुतादिवृत्तिभेद इति । एवञ्च शब्दस्य चिराचिरकालोपलब्धिरूपद्रुतादिवृत्तिभेदप्रयोजको वैकृतो नादः स्वोपलब्धिमनित्यां द्वारीकृत्य शब्दस्वरूपाद् बाह्यस्य द्रुतादिवृत्तिरूपकालस्य शब्दे व्यवस्थां प्रकल्पयतीति ।

अत्रेदमवधेयम्—प्राकृतो नादः शब्दोपलब्धेः प्राग् जायत इति तस्य शब्दे तादात्म्याध्यासात् तद्धर्मा ह्रस्वत्वादयः शब्दधर्मत्वेन प्रतीयन्त इति स्वकाल इत्युक्तम् । वैकृतस्तु नादः स्वोत्पत्तेः प्रागवधारिते शब्दस्वरूपे पश्चाद् भवन् तादात्म्याध्यासाभावेऽपि स्वगतस्य द्रुतादिवृत्तिकालभेदस्य शब्दे भानप्रयोजकः । तथा च धर्म्यध्यासाभावेऽप्यत्र धर्माध्यासः, जपाकुसुमसन्निहिते स्फटिके जपाकुसुमलौहित्याध्यास इवेति ॥१०१॥

कार्यः शब्द इति पक्षे ध्वनिस्फोटयोर्भेदं प्रदर्शयन्नाह—**यः संयोगविभागाभ्यामिति ।**

अयमर्थः—यः स्थानकरणानां संयोगविभागाभ्यां प्रथममुपजायते, स शब्दः स्फोट इत्युच्यते । अत्र करणैरिति स्थानस्याप्युपलक्षणम् । तस्मात् शब्दाज्जातास्तु शब्दा द्रुतादिवृत्तिभेदहेतवो वैकृता ध्वनयः शब्दाभिव्यक्तिवादिभ्योऽन्यैर्वादिभिरुदाहृता उक्ता इति ।

अयं भावः—कार्यः शब्द इति पक्षे स्थानानां कण्ठताल्वादीनां करणानाञ्च जिह्वाग्रोपाग्रमध्यमूलादीनां संयोगविभागहेतुकः प्रथमं सञ्जातो यः शब्दः, स स्फोट इत्युच्यते । तस्मात् तु स्थान-

**अल्पे महति वा शब्दे स्फोटकालो न भिद्यते ।**
**परस्तु शब्दसन्तानः प्रचयापचयात्मकः ।।१०३।।**

देशव्याप्तिसामान्यादल्पमहत्त्वे शब्दस्योपचर्येते । प्रसिद्धेर्वा । सर्वत्र हि प्रसिद्धिरेवार्थव्यवस्थाकारणम् ।

अनवस्थितैव हि तर्कागमाभ्यां भिन्नेषु प्रवादेषु वस्तुगता व्यवस्था । तत्राविशेषेण कार्यशब्दानां कारणशब्दानां चोत्पन्नापवर्गित्वान्नास्ति महतोऽल्पस्य वा शब्दस्य सूक्ष्मोऽपि कश्चित् कालभेदः, हस्तिमशकज्ञानवत् ।

करणसंयोगविभागजाताच्छब्दात् तद्रूपप्रतिबिम्बोपग्राहिणो दशदिग्व्यापिनः कदम्बकोरकवद् वीचिसन्तानवच्च जायमानाः शब्दा दशदिगवस्थितानां श्रोतॄणां श्रोत्रदेशमुपगच्छन्ति । तत्रैकत्वादाकाशस्य वर्णानां देशनैरन्तर्यासम्भवेऽप्याकाशस्य ये संयोगिनो घटादयः परिच्छिन्नदेशास्ते तस्य देशभेदमुपपादयिष्यन्तीत्येवमाकाशस्य देशप्रविभागोपचारः, न तु परमार्थ आकाशस्य देशभेदः ।

वस्तुतस्तु सर्वेषामेव द्रव्याणामौपचारिक एव देशभेदः । तथा हि न क्वचिदपि घटादौ मुख्यो देशः, घटाद्यारम्भकाणामवयवानां कपालादीनामेव घटादिदेशत्वेन व्यवहारात् । ते चावयवा घटादिभ्योऽर्थान्तरमेवेत्युपचरितमेव तेषु घटादिदेशत्वम् । मुख्यं तु सर्वजन्यवस्तुसमवायित्वं कालदिशोरेव । अतः कालस्य ये क्षणादयो देशाः, दिशो वा ये पूर्वादयो देशाः, ते जन्ये भावे घटादावारोप्यन्ते । एवमेकस्मिन्नप्याकाशे स्वसंयोगिद्रव्यान्तरसम्बन्धप्रयुक्तदेशप्रविभागोपचारे सति वर्णानामप्याकाशवर्तिनां देशनैरन्तर्यप्रत्यासत्तेरुपपत्त्या कार्याणां ध्वनीनां करणसंयोगानाञ्च तत्कारणानां सन्तानस्याविच्छेदमूलिकया तादृशप्रत्यासत्त्योपलक्षिता यथोत्तरमपचीयमानपूर्वप्रतिबिम्बोपग्रहशक्तयो मन्दप्रदीपकल्पाः क्रमेण प्रध्वंसमाना ये ध्वनयो वैकृता वर्णश्रुतिं विभजन्ति, ते ध्वनय इत्युच्यन्ते ।

येषां तु मते नित्यः स्फोटः, तन्मते स्थानकरणसंयोगजविभागजध्वनिव्यङ्ग्यः स्फोटः, न तु कार्यः । केषाञ्चित् तु नित्या शब्दव्यक्तिरेव स्फोट इति वादिनां मते नित्य एव शब्द इति संयोगविभागजनितैकैकध्वनिसम्भूतेन महानादेन प्राकृतेन यदभिव्यङ्ग्यं स्फोटरूपं तदुपग्राहिणस्तु तस्योत्तरे ध्वनिजा महाध्वनयोऽपचीयमानाभिव्यक्तिशक्तयो द्रुतादिवृत्तिव्यवस्थाहेतवः । येषां ध्वनीनामन्तेऽनुरणनमात्रं भवति, न तु तदा स्फोटरूपं प्रतीयत इति ॥१०२॥

संयोगजो ध्वनिः स्फोटः, तज्जास्तु ध्वनयस्तत्प्रतिबिम्बोपग्राहिणस्तस्य द्रुतादिवृत्तिव्यवस्थाहेतव इत्यनित्यशब्दवादिमते प्रक्रियावर्णनायाह—**अल्पे महति वेति।**

अयमर्थः—अल्पे ह्रस्वे, महति दीर्घे, प्लुते वा शब्दे स्फोटकालो न भिद्यते । तेषां हि स्थानकरणसंयोगविभागजनितानां प्राथमिकानां शब्दानां स्फोटपदार्थानां ह्रस्वदीर्घप्लुतवर्णघटितानां सर्वेषामभिन्नः कालः, एकक्षणावस्थानात् ।

कथं तर्हि मात्रादिकालभेदावगतिरित्याशङ्क्याह—**परस्तु शब्दसन्तान इति** । यस्तु परः

निमित्तभेदात्तु कार्यारम्भे शब्दस्य सामर्थ्यं भिद्यते । कस्यचिद्धि भेरीदण्डाभिघातजस्येव कार्यपरम्परा दूरमनुपतति । कश्चित् तु लोहकंसाभिघात इव प्रत्यासन्नदेशग्राह्यं दीर्घकालं सन्तानमविच्छेदेनारभते ॥१०३॥

स्फोटादन्यः शब्दसन्तानः, स प्रचयापचयात्मकः । एतस्य हि स्वकार्यभूतस्य प्रचयापचयात्मकस्य शब्दसन्तानस्य वशेन स्फोटशब्दाः स्वस्मिन्नसन्तमपि कालभेदमादर्शयन्तीति ।

अयं भावः—यद्यप्यल्पत्वमहत्त्वे परिमाणरूपे, परिमाणस्य च गुणत्वाद् द्रव्ये समवायः, न तु गुणात्मके शब्दे इति वैशेषिकाणामाक्षेपः । अथवाऽल्पो महानिति प्रत्ययगम्ये अल्पत्वमहत्त्वे मूर्तीनां धर्मौ, शब्दास्त्वमूर्ता इति कथं तत्र ते उच्येते इति शब्दद्रव्यत्ववादिनामाक्षेपः, तथापि मुख्याल्पत्वमहत्त्वानां सूचीपर्वतादीनां यो धर्मस्तादृशदेशव्याप्तिस्तद्रूपात् सामान्याच्छब्देऽपि अमूर्तेऽगुणेऽल्पत्वमहत्त्वे उपचर्येते इति समाधेयम् ।

तथा हि—यथा अल्पा सूच्यल्पदेशं व्याप्नोति, महान् पर्वतो महान्तं देशम्, तथा शब्दोऽपि चाल्पमहान्तौ देशौ व्याप्नुवन्नल्पो महानिति व्यपदिश्यते । सा चेयं देशव्याप्तिः शब्दस्याल्पत्वमहत्त्व-प्रतीतिरूपकार्यानुमेया । अथवा लोकप्रसिद्धेरेव पदार्थस्वभावव्यवस्थापकत्वाल्लोके च शब्दस्याबाधिताल्पत्वमहत्त्वप्रत्ययाद् गुणेऽमूर्ते वा शब्देऽल्पत्वमहत्त्वे स्वाभाविके एव, न त्वौपचारिके ।

न हि लोकप्रसिद्धिं विहायान्यथा पदार्थस्वभावव्यवस्थापना युक्ता, पुरुषप्रतिभाभेदात्, तर्कस्यानवस्थानात्, सिद्धान्तभेदादागमस्याप्यनवस्थानादिति न तर्कागमाभ्यां वस्तुस्वभावव्यवस्था, किन्तु लोकप्रसिद्ध्यैवेति । एवं भवतां नाम शब्देऽल्पत्वमहत्त्वे औपचारिके स्वाभाविके वा, किन्तु कार्यशब्दानां स्थानकरणसंयोगविभागजानां स्फोटजानां ध्वनीनां कारणशब्दानां संयोगविभागजानां स्फोटानां चोत्पन्नप्रध्वंसित्वाविशेषेण नास्ति महतोऽल्पस्य वा शब्दस्य ध्वनिरूपस्य स्फोटरूपस्य वा सूक्ष्मोऽपि कश्चित् कालभेदः । यथा हस्तिमशकयोः परिमाणभेदेऽपि तयोर्ज्ञाने नास्ति कश्चित् कालभेदः । तथा चैवं ध्वनिस्फोटयोः कालभेदाभावेऽपि स्फोटस्य कार्यभूतायां ध्वनिपरम्परायामल्पत्वमहत्त्वहेतुः कालभेदः कश्चिदस्ति, यतोऽल्पत्वमहत्त्वे शब्देऽविद्यमाने अपि प्रतीयेते । इयमेव ध्वनिपरम्परा कारिकायां शब्दसन्तानपदेनोक्ता ।

नन्वभिन्नकालस्यैकस्य शब्दस्य कथं कालभेदभिन्नध्वनिपरम्पराजनकत्वमिति चेत्, न, प्रयत्नसंयोगविभागादिरूपसहकारिनिमित्तभेदादेकस्यापि शब्दस्य कालभेदभिन्नध्वनिपरम्परारूपकार्यारम्भे सामर्थ्यं भिद्यत इति स्वीकारात् । तथा हि—कस्यचित् स्फोटस्य भेरीदण्डाभिघातकृतस्य ध्वनेरिव कार्या ध्वनिपरम्परा दूरमनुपततीति दीर्घकाला । कश्चित् तु स्फोटो लोहाभिघातवत् कंसाभिघातवच्च प्रत्यासन्नदेशग्राह्यमदीर्घकालं ध्वनिसन्तानमविच्छेदेनारभत इत्येवं ध्वनिरूपशब्दसन्तान एव काल-भेदप्रयुक्ते अल्पत्वमहत्त्वे न शब्दे, नापि तज्जाते ध्वनौ, तयोस्तु देशव्याप्तिसामान्यप्रयुक्ते स्वाभाविके वा ते इति ॥१०३॥

**दूरात् प्रभेव दीपस्य ध्वनिमात्रं तु लक्ष्यते ।**
**घण्टादीनां च शब्देषु व्यक्तो भेदः स दृश्यते ।।१०४।।**

---

इह केचिदाचार्या व्यक्तं स्फोटं सहजेन ध्वनिना सर्वतो दूरव्यापिना प्रकाशस्थानीयेन गन्धेन युक्तं द्रव्यविशेषमिवाविर्भावकाल एव सम्बद्धं मन्यन्ते ध्वनिना । यथैव प्रदीपे घनसन्निविष्टावयवं प्रत्युपादानं तेजोद्रव्यं तदाश्रितश्च तद्विक्रियानुपरवर्ती प्रकाशः, तथा घण्टायाश्चाभिघातेन व्यक्ततरौ स्फोटनादौ सर्वेषां वर्णानामभिनिष्पत्तौ धर्म इति ।

स चायं श्लोकद्वयेनानन्तरेण प्राकृतवैकृतयोर्नादयोर्विशेष आख्यातः ।।१०४।।

---

ननु नास्ति स्फोटादतिरिक्तः कश्चिद् ध्वनिर्नाम तद्व्यञ्जकः, स्फोटात् पृथगनुपलभ्यमानत्वादित्याशङ्क्य सहजातत्वेन सन्निधौ पृथगनुपलभ्यमानत्वेऽपि महाजनसमवाये दूरतः स्फोटात् पृथगुपलब्धिरस्त्येव तस्येति समाधातुमाह—**दूरात् प्रभेव दीपस्येति ।**

अत्र दूरादित्यस्य ध्वनिमात्रं तु लक्ष्यत इत्यनेन व्यवहितेन सम्बन्धः, योग्यताबलात् तात्पर्यबलाच्च ।

अयमर्थः— यथा प्रदीपः प्रभया सहैवोत्पद्यते, दूराच्च प्रदीपस्यापरिच्छेदेऽपि प्रदीपप्रभा परिच्छिद्यते, तथा स्फोटोऽपि स्थानकरणसंयोगविभागाभ्यां ध्वनिभिः सहैव जायते, किन्तु महाजनसमवाये दूरात् स्फोटो न लक्ष्यते, न प्रतीयते, ध्वनिमात्रं तु लक्ष्यते । घण्टादीनां चाभिघातेन जायमानेषु शब्देषु स भेदः, स्फोटनादयोर्भेदो व्यक्तो दृश्यते ।

तथा हि—प्रथमोऽभिघातजस्तारतरः शब्दः, तदन्यस्तु तज्जन्यो नाद इति स्पष्ट एव भेद इति ।

अयं भावः— इह केचिदाचार्याः स्फोटेन सहैव जातेन सर्वतो दूरव्यापिना प्रदीपप्रभास्थानीयेन ध्वनिना स्फोटरूपप्रतिबिम्बोपग्रहाद् व्यक्तं स्फोटमाविर्भावकाल एव ध्वनिना सम्बद्धं मन्यन्ते द्रव्यविशेषमिवाविर्भावकाल एव गन्धविशेषेण युक्तामिति । अनित्यः शब्द इति वादिनामिदं दर्शनम् ।

अत्र यद्यपि पूर्वकारिकायाम्—"यः संयोगविभागाभ्याम्" (१०२) इत्यत्रान्यथोक्तम् । संयोगविभागाभ्यां स्फोटो जायते प्राक् तदुत्तरं तु तज्जन्या ध्वनयस्तत्प्रतिबिम्बोपग्राहिणस्तद्व्यञ्जका इति ।

साम्प्रतं त्वन्यथोच्यते—सहजेन ध्वनिनाविर्भावकाल एव सम्बद्धः स्फोटस्तेन तत्प्रतिबिम्बोपग्राहिणा व्यज्यत इति, तथाप्यनित्यशब्दवादिनामेवेदं दर्शनान्तरमिति समाधेयम् ।

किञ्च, मतद्वयेऽपि ध्वनयो दूरदेशं व्याप्य समुत्पद्यन्ते, प्रदीपजतत्प्रभावत्, स्फोटस्तु स्थानकरणसंयोगविभागजन्यः प्रदीपवदल्पदेशं व्याप्य समुत्पद्यते । अत एव महाजनसमवाये ध्वनिर्दूरादुपलभ्यते, स्फोटस्तु नोपलभ्यत इत्यवधेयम् । प्रभेव दीपस्येति दृष्टान्ताशयस्तु प्रदीपस्य प्रत्युपादानं घनतरसन्निविष्टावयवं तेजोद्रव्यं प्रदीप इति । अत एव प्रदीपः स्वल्पदेशं व्याप्नोति, प्रकाशस्तु प्रभावन्त एव तेजोऽवयवाः समन्ततः प्रशिथिलसन्धय इति । अत एव प्रकाशो दूरदेशं व्याप्नोति ।

स चायं प्रकाशः प्रदीपाश्रितस्तद्विक्रियानुपरिवर्त्ती चेति । अत्र घण्टादिशब्ददृष्टान्तः स्फोटनादयोः स्फुटतरः पृथक् सत्त्वमात्रे । प्रदीपप्रभादृष्टान्तस्तु नादस्य प्रदीपप्रभावद् दूरदेशव्याप्तिमत्त्व इति दृष्टान्तद्वयस्य सार्थक्यम् । घण्टानादे तु न दूरदेशव्याप्तिः, स्फोटापेक्षयाऽनुरणने

**द्रव्याभिघातात् प्रचितौ भिन्नौ दीर्घप्लुतावपि ।**
**कम्पे तूपरते जाता नादा वृत्तेर्विशेषकाः ।।१०५।।**

---

नित्यपक्षेऽपि नैव शब्दानां प्रचये दीर्घप्लुतौ प्रचीयेते। किं तर्हि द्रव्याभिघातप्रचयादेव। स्वरूपमेव हि तयोस्तावद्भिरभिघातैर्निष्पादयितुं शक्यते। तस्मादास्वरूपलाभात् तयोः करणानामभिघातविशेषादितरेतरावयवसंस्पर्शौ व्यक्तवायुप्रस्पन्दनानुगतः कम्पोऽनुवर्तते। कम्पे तूपरते ये नादजा नादास्ते द्रुतादिवृत्तिभेदव्यवस्थाहेतवो भवन्ति ॥१०५॥

---

क्रमेणापचयानुभवेन तस्याल्पदेशत्वादिति सर्वेषां नादानामभिनिष्पत्तौ प्रदीपप्रभादृष्टान्तसिद्ध एव दूरदेशव्याप्तिमत्त्वरूपो धर्म इति ॥१०४॥

स चायं प्राकृतवैकृतनादयोर्विशेषः। प्राकृतो नादः स्फोटनस्य ह्रस्वत्वादिधर्मभेदप्रयोजकः, वैकृतस्तु तस्य द्रुतादिवृत्तिभेदव्यवस्थाहेतुरित्येवंरूपः समनन्तरातीतेन श्लोकद्वयेनाख्यातः। तमेव श्लोकद्वयोपात्तं प्राकृतवैकृतध्वनिकृतं विशेषं स्पष्टयन्नाह—**द्रव्याभिघातात् प्रचिताविति ।**

अयमर्थः—द्रव्यं स्थानकरणानि, अभिघातस्ताल्वादिस्थानस्य करणेन जिह्वाग्रादिना प्रहारः, वेगवतो द्रव्यस्य हि द्रव्यान्तरे चलेऽचले वा शब्दहेतुः संयोगोऽभिघात उच्यते। तथा च द्रव्याभिघाताद् द्रव्याभिघातजनितात् कम्पात् प्रचितौ दीर्घप्लुतावपि भिन्नौ।

अयमभिसन्धिः—विवक्षासमुद्भूतविशिष्टैकप्रयत्नजनितेन वायुना हृदयकण्ठदेशप्राप्तिक्रमेण वक्त्रान्तर्देशं प्राप्तवता विशिष्टशक्तिकोऽभिघातो निष्पाद्यते, येन कम्पोऽनुवर्तते। अनुवर्तमानात् कम्पाच्चाभिघातस्य सान्तत्याविच्छेदलक्षणः प्रबन्धः। तथा च यद्यपि स्फोटस्यानित्यस्य शब्दनित्यत्वपक्षे तदभिव्यञ्जकध्वनेर्वा स्थितिकालो दीर्घत्वे वा तुल्यः, तथाप्यभिघातप्रचयात् तद्धेतुककम्पप्रचयाद् वा स्फोटे ध्वनौ वा समारोपितात् स्फोटो ध्वनिर्वा प्रचितो दीर्घत्वेन प्लुतत्वेन भिन्नतया व्यवह्रियते। कालभेदेन प्रयत्नवायुकरणाभिघातनिवृत्तिक्रमेणोपरते निवृत्ते तु कम्पे जाता वैकृता नादाः स्फोटाख्यस्य शब्दस्य द्रुतादिवृत्तेर्विशेषका विशिष्य व्यवस्थाहेतव इति न द्रुतादिवृत्तिहेतुकः कश्चिद् विशेषो दीर्घप्लुतयोः, स्फोटात् प्रागजातत्वादिति।

अयं भावः—स्फोटाख्यः शब्दो नित्योऽनित्यो वा भवतु, पक्षद्वयेऽपि न तत्र दीर्घादिभेदः स्वाभाविको नादप्रचयहेतुको वा, किं तर्हि द्रव्याभिघातप्रचयात् तज्जनितकम्पप्रचयाद् वा। यतः स्वरूपमेव दीर्घप्लुतयोस्तावद्भिरभिघातैर्निष्पादयितुं शक्यत इति नास्ति शब्दस्वरूपे ध्वनौ वा प्रचयः। तस्माद् दीर्घप्लुतयोरास्वरूपलाभाद् = अपरिपूर्णस्य शब्दस्यापरिपूरणाद् आ विशिष्टस्वरूपनिष्पत्तेर्वा प्रचयविशेषतोऽभिघातविशेषात् स्थानकरणानां येऽवयवास्तेषां परस्परेण यः संस्पर्शस्तद्वान् कम्पः, कम्पस्य तादृशसंस्पर्शकारणत्वात्। प्रयत्नप्रेरितव्यक्तवायुप्रस्पन्दनजन्याभिघातजन्यत्वात् तादृशवायुप्रस्पन्दनानुविधायी अनुवर्तत इति प्रचिततादृशाभिघातकृतः प्रचितादृशकम्पकृतो वा स्फोटस्वरूपे वा आरोपितः प्रचय इति तत्कृतस्तत्र दीर्घप्लुतादिभेदः। पूर्वोक्ते कम्पे हेत्वभावादुपरते ते ये शब्दानित्यत्वपक्षे स्फोटात्मकाद्यनादजा नादाः शब्दनित्यत्वपक्षे च प्राकृतनादजा नादास्ते द्रुतादिवृत्तिभेदव्यवस्थाहेतवो भवन्ति। तथा चाद्यस्य ध्वनेः स्फोटाख्यस्य स्थितिकालस्तुल्यः। परः

**अनवस्थितकम्पेऽपि करणे ध्वनयोऽपरे ।**
**स्फोटादेवोपजायन्ते ज्वाला ज्वालान्तरादिव ।।१०६।।**

कम्पेष्वप्यविच्छेदनानुवर्तमानेषु यावानभिघातजः शब्दो नासौ कदाचिदप्यनारब्धकार्यो निवर्तते। तत्र ते कम्पजाः शब्दाः समानकाला ध्वनयः स्फोटात्मानमभिसंस्कुर्वन्ति, ताँश्चाभिमर्शिनोऽनुप्रकाशान् नादान्तरालाननुषङ्गानित्याचक्षते। तेषामपि च प्रत्यनुषङ्गं कार्यपरम्परा यावत्कम्पो न विच्छिद्यते, तावत् स्फोटानुग्रहमात्रयानुवर्तत इत्याहुः।

सा चेयमुत्पत्तिरिन्धनज्वालाप्रवृत्तिप्रबन्धधर्मेणाख्यायते। तद्यथेन्धनाश्रिताभिर्ज्वालाभिर्ज्वालाकार्यसन्तानसमुद्भवा ज्वालाः सम्प्रवर्तन्ते। तत्प्रकाशनेन चार्थानामुपकुर्वन्ति, तथेयमपि नादप्रवृत्तिरिति ।।१०६।।

---

शब्दसन्तानो वैकृताख्यः प्रचयापचयात्मको द्रुतादिवृत्तिभेदहेतुरिति द्रुतादिभ्यो न कश्चिद् विशेषो दीर्घप्लुतौ प्रतीत्ययमाक्षेपो दीर्घप्लुतयोर्विशेषस्य कम्पद्रव्याभिघातान्यतरप्रचयारोपहेतुकत्वेन परिहृत इति। अत्र "कम्पे तूपरते जाता नादा वृत्तेर्विशेषकाः" इत्युत्तरार्द्धे "अतो न कम्पजशब्दगतयोः कम्पजध्वन्यभिव्यङ्ग्यशब्दगतयोर्वा दीर्घप्लुतयोर्विशेषकाः" इति वाक्याध्याहारेण योजनीयम्। यद्वा "असति बाधके सर्वं वाक्यं सावधारणं भवति" इति न्यायेन 'वृत्तेरेव विशेषकाः' इत्यर्थलाभेनास्य वाक्यार्थस्य लाभ इत्यवधेयमिति ।।१०५।।

"कम्पे तूपरते जाता नादा वृत्तेर्विशेषकाः" (१०५) इत्युक्तम्। कम्पोपरतौ वैकृतानां नादानां जन्म स्फोटजन्यत्वेन सदृष्टान्तं प्रसाधयितुमाह—**अनवस्थितकम्पेऽपीति ।**

अयमर्थः—यद्यप्यवस्थिते कम्पे कम्पादेव ध्वनयः प्राकृताः समुत्पद्यन्ते स्फोटानुग्राहकाः, कम्पद्वयान्तराले तु ध्वनिजा ध्वनयः, तथाप्यनवस्थितकम्पेऽपि करणे करणानां जिह्वाग्रोपाग्रादीनां कम्पोपरतावप्यपरे प्राकृतनादाद् भिन्ना ध्वनयो वैकृताः स्फोटादेवोपजायन्ते।

इदञ्च शब्दानित्यत्वदर्शनमाश्रित्य। शब्दनित्यत्वदर्शने तु प्राकृतनादादित्यवधेयम्। यथा ज्वालान्तरात् पूर्वस्मादुत्तरा ज्वाला समुत्पद्यते सदृशी। अत्र स्फोटनादयोः कार्यकारणयोः सादृश्यं शब्दत्वेनेति।

अयं भावः—शब्दानित्यत्वदर्शने स्थानकरणाभिघातात् स्फोटः समुत्पद्यते, अभिघातहेतुभूतात् करणकम्पात् तु प्राकृता नादाः स्फोटानुग्राहकाः, कम्पद्वयान्तराले तु नादादेव नादा इति स्थिते यावता कालेन करणकम्पजन्याभिघातजः शब्दः स्फोटाख्यः समुत्पद्यते, तावत्कालं स्फोटानुग्राहकप्राकृतनादजनकानां कम्पानामवृत्तिरित्येवं कम्पेष्वविच्छेदेनानुवर्तमानेष्वपि यावानभिघातजः शब्दः स्फोटाख्यः समुत्पद्यते, स सर्वोऽपि करणकम्पोपरतावभिघाताभावे निवर्तमानो नानारब्धकार्यो निवर्तते, किन्तु वैकृतनादान् समुत्पाद्यैव निवर्तते। तथा च निवर्तमानस्फोटजः प्रथमो वैकृतो नादो वैकृतनादजाश्चान्ये वैकृतनादाः। तत्र ये कम्पजा ध्वनयः स्फोटसमानकालस्थितयः प्राकृतास्ते स्फोटात्मानमभिसंस्कुर्वन्ति, स्वरूपरूषितं कृत्वाऽभिव्यञ्जयन्ति, इत्ययमेव ध्वनिभिः संस्कारः स्फोटस्य।

**वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।**
**कैश्चिद् दर्शनभेदो हि प्रवादेष्वनवस्थितः ।।१०७।।**
**लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।**
**स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ।।१०८।।**

---

तत्र वायोस्तावच्छब्दभावापत्तिमाचक्षते—

---

ये तु पूर्वोत्तरकम्पजध्वन्योरन्तराले पूर्वकम्पजध्वनिजा ध्वनयस्तज्जन्याश्चान्ये ध्वनयो जनकध्वनि-सादृश्यात् तैः सममेकत्वेनाभिमृश्यमाना ध्वनिरूपप्रकाशमनुजाता अनुप्रकाशास्तान् नादान्तरालान् अनुषङ्गान् इत्याचक्षते । तेषामपि चानुषङ्गध्वनीनां प्राकृतानां प्रत्यनुषङ्गं कार्यध्वनिपरम्परा यावत्करण-कम्पपरम्परा न विच्छिद्यते, तावत्कालमविच्छिद्यमाना स्फोटानुग्रहवत्या मात्रयाऽनुवर्तत इत्याहुः ।

सा चेयमाद्यकम्पजनादमारभ्य चरमवैकृतनादपर्यन्ता शब्दपरम्परोत्पत्तिरिन्धनजन्यज्वालापरम्परा-प्रवृत्तिरिव नैरन्तर्यरूपप्रबन्धरूपधर्मेणोपवर्ण्यते शब्दतत्त्वज्ञैः ।

तद्यथेन्धनाश्रिताभिर्ज्वालाभिः क्रमेण ज्वालाकार्यज्वालासन्तानसमुद्भवा ज्वालाः सम्प्रवर्तन्ते, सातत्येन प्रवर्तमानाश्च स्वप्रकाशेनार्थान् घटादीनभिव्यञ्जयन्त्योऽर्थानामुपकुर्वन्ति, तथेयमपि नादपरम्पराप्रवृत्तिः स्वज्ञानेन स्वस्मिन् प्रतिबिम्बरूपेणावस्थितानर्थान् सङ्केतज्ञानसहकारेण ज्ञापयन्ती अर्थानामुपकरोतीति ।।१०६।।

शब्दकार्यत्ववादे शब्दस्योपादानकारणानि दर्शनभेदेनाह—**वायोरणूनामिति ।**

कैश्चिदित्यस्य वायोरणूनां ज्ञानस्येत्येतेषु प्रत्येकमभिसम्बन्धः ।

अयमर्थः—कैश्चिद् वायोः कैश्चिदणूनाम्, कैश्चिद् ज्ञानस्य शब्दत्वापत्तिः शब्दाकारः परिणाम इष्यते । हि यतः प्रवादेषु सिद्धान्तेषु दर्शनभेदो दृष्टिभेदो द्रष्टृपुरुषभेदादनवस्थितोऽव्यवस्थितोऽनियत इति शब्दोपादानकारणमिदमेवेति निर्धारयितुं न शक्यत इति ।

अत्र ज्ञानस्य शब्दत्वापत्तिरिष्यत इति मतं भाष्यकारस्येति "आख्यातोपयोगे" ( पा० १/४/२९ ) इति सूत्रे भाष्यकैयटयोः स्पष्टम् ।

तथा हि—तत्रभगवान् भाष्यकार इदं सूत्रं नारब्धव्यमिति प्रतिपादयिष्यन्नाह—अयमपि योगः शक्योऽवक्तुम् । कथमुपाध्यायादधीत इति । अपक्रामति तस्मात् तदध्ययनम् । यद्यपक्रामति, किं नात्यन्तायापक्रामति; सन्ततत्वात् । अथवा ज्योतिर्वज्ज्ञानानि भवन्ति ।

अत्र कैयटः—अथवेति । यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात् तत्त्वेनाध्य-वसीयमानं सततम्, तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि सन्ततान्युच्यन्ते, ज्ञानस्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकारस्येति ।।१०७।।

तत्र वायोस्तावच्छब्दभावापत्तिप्रक्रियामाचक्षते—**लब्धक्रियः प्रयत्नेनेति ।**

अयमर्थः—वक्तुरिच्छानुवर्त्तिना विवक्षाजन्येन प्रयत्नेन लब्धक्रियः प्रेरितो वायुरेकघन ऊर्ध्वमा-क्रामन् स्थानेषु उरःकण्ठताल्वादिष्वभिहतोऽभिघाताख्यसंयोगस्वभावात् शब्दत्वं प्रतिपद्यते,

**तस्य कारणसामर्थ्याद् वेगप्रचयधर्मणः ।**
**सन्निपाताद् विभज्यन्ते सारवत्योऽपि मूर्तयः ।।१०९।।**
**अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।**
**छायातपतमःशब्दभावेन परिणामिनः ।।११०।।**

---

इत्येवमादि सर्वमनुगन्तव्यम् ॥१०९॥
अणूनां शब्दत्वापत्तिमपरे प्रतिपन्नास्त एवमाहुः ।

---

शब्दाकारतया परिणमति, यथा मेघस्थमुदकं प्रतिकूलवातसहकृतेन तादृशेनोदकान्तरेणाभिहतं विद्युद्रूपतया परिणमति ।

अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमस्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ इति ।

तत्रापि शब्दाकारः परिणामस्तु वज्रनिर्घोषाख्यो वायोरेव, न जलस्य । तदुक्तमग्निपुराणे—
यदाऽन्तरिक्षे बलवान् मारुतो मरुता हतः ।
जायते तत्र निर्घोषो बलवान् वायुसम्भवः ॥ इति ॥१०८॥

ननु कथमेकस्य घनस्य च वायोर्नानारूपशब्दाकारेण परिणाम इत्याशङ्क्याह—**तस्य कारणसामर्थ्यादिति ।**

अयमर्थः—कारणसामर्थ्यात् = स्वक्रियाकारणस्य प्रयत्नविशेषस्य सामर्थ्यात्, वेगप्रचयघर्षणः = वेगरूपधर्मवतः प्रचयो घनीभावस्तद्धर्मवतश्च तस्य वायोः स्थानेषु ताल्वादिषु सन्निपातात् सम्यङ्निपातेनाभिघाताख्यसंयोगात् सारवत्यो घनीभावेन कठिना अपि मूर्त्तयो विभज्यन्ते भिद्यन्ते, पाषाणसन्निपातेन लोष्टवद् विशीर्यन्त इत्येवं वायोरेकस्य घनस्य च नानाशब्दाकारेण परिणतिरुपपद्यत इति ।

एतेन यदुक्तं वृषभदेवेन—"सारवतां पर्वतादीनामपि वायुना विभागः क्रियते, किमङ्ग पुनस्ताल्वादीनम्" इति । तत् प्रत्युक्तम्, वैपरीत्यात् । न ह्यत्र वायुना ताल्वादीनां विभागोऽभिप्रेतः; किन्तु ताल्वादिसन्निपातेन वायोरिति ॥१०९॥

अणूनां शब्दत्वापत्तिमपरे प्रतिपन्नाः, त एवमाहुः—**अणवः सर्वशक्तित्वादिति ।**

अयं भावः—यथा वैशेषिकाणां मते चतुर्विधाः परमाणवः— पार्थिवः, आप्यः, तैजसः, वायवीयश्च; तथाऽत्र न, किन्तु सांख्यशास्त्रे ये तन्मात्रपदेनोच्यन्ते, तेऽत्र पञ्च परमाणुपदेनाभिप्रेताः । रूपतन्मात्रम्, रसतन्मात्रम्, गन्धतन्मात्रम्, स्पर्शतन्मात्रम्, शब्दतन्मात्रमिति । एते चात्र दर्शने रूपपरमाणवः, रसपरमाणवः, गन्धपरमाणवः, स्पर्शपरमाणवः, शब्दपरमाणव इत्याख्यायन्ते । एते च परस्परं व्यावृत्तस्वभावाः प्रत्येकमनन्ताश्च ।

किञ्चैते यथाऽदृष्टं यथासम्भवं यथाकार्यञ्च समुदेत्यकारिणः, असमुदेत्यकारिणश्च । तत्र समुदेत्यकार्यकरत्ववादः पञ्चीकरणप्रक्रियामनुपतति श्रौतीम् । तत्र पञ्चविधानामपि परमाणूनां

**स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।**
**अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ।।१११।।**

इत्यादि सर्वमनुगन्तव्यम् ।।११०-१११।।

समुदेत्यकार्यकरत्वम् पृथिवीरूपकार्योत्पत्तौ, यतस्तत्र सर्वगुणोपलब्धिः । अन्येषु तु त्रिष्वदृष्टानुसारेण यथासम्भवं समुदेत्यकार्यकरत्वमिति कतिपयगुणोपलब्धिः । आकाशे तु शब्दपरमाणूनामेवासमुदेत्यकार्यकरत्वं यद्याकाशमस्ति अन्यथा तु शब्दपरमाणूनामसमुदेत्य स्थूलशब्दाकारेण परिणामित्वमेवोदाहर्तव्यम्, शब्दस्यापि द्रव्यत्वात् । रूपपरमाणवश्चासमुदेत्य छायातपतमोरूपतया परिणामिनः ।

इदं च सर्वं 'छायातपतमःशब्दभावेन परिणामिन;' इति, 'शब्दाख्याः परमाणवः' इति वाक्यांशद्वयचिन्तामूलकम् ।

वाक्यार्थस्तु—अणवः = आप्यादिभेदेन पञ्चविधाः परमाणवः, सर्वशक्तित्वात् = नानाजातीयस्वस्वकार्यानुकूलसर्वशक्तिकत्वात् ।

यत्त्वत्र वृषभदेवेन—एकजातीया एव सर्वे परमाणवः सर्वशक्तिमन्त इत्यभिप्रेत्य 'कथमेकैकरूपाणामनेकच्छायादिरूपापत्तिरित्याह—सर्वशक्तित्वादिति' इत्युक्तम्, तन्न; शब्दाख्याः परमाणव इत्यनेन पञ्चविधानामेव परमाणूनां सूचनादिति ।

यद्वा, एकजातीयानामेव रूपपरमाणूनां कथं छायातपमिथोविरुद्धकार्यजनकत्वमित्यभिप्रायेण तेन तदुक्तम् । अत एव शङ्कायाम् 'एकैकरूपाणाम्' इत्युक्तमित्यवधेयम् । 'छायातपतमःशब्दभावेन परिणामिनः' । तत्र नीलरूपपरमाणवः छायातमोरूपतया परिणमन्ति, शुक्लरूपपरमाणवश्चातपरूपतया, शब्दपरमाणवस्तु स्थूलशब्दरूपतयेति विवेकः ।

अत्र परिणामिनः सन्निवेशविशेषग्राहिण इति व्याख्येयम् ।

ननु परमाणूनां छायादिभावोपगमसामर्थ्येन नित्ययुक्तत्वाद् नित्यत्वाच्च कस्मान्न सदा छायादयः समुत्पद्यन्त इत्याशङ्क्याह—**भेदसंसर्गवृत्तय इति ।**

भेदो विभागः, संसर्गः संयोगः, तौ वृत्तिरेषां परमाणूनामिति । यदाऽदृष्टविशेषान्निमित्तात् संयुज्यन्ते, तदा परिणमन्ते, यद्वा तु विभज्यन्ते तदा परमाणुरूपतयाऽवतिष्ठन्त इति ।। ११० ।।

तेषां शब्दपरमाणूनां शब्दत्वापत्तौ विधिमाह—**स्वशक्तौ व्यज्यमानायामिति ।**

अयमर्थः—शब्दाख्याः परमाणवः स्वशक्तावदृष्टसहकृतेन प्रयत्नेन व्यज्यमानायां कार्योन्मुखत्वमापाद्यमानायां प्रयत्नप्रेरितप्राणवायुना समीरिताः संहन्यमाना वायुप्रेरितान्यभ्राणीव प्रचीयन्ते स्थूलशब्दरूपतया संहन्यन्त इति ।

अयं भावः—यद्यपि शब्दपरमाणवः शब्दत्वापत्तिशक्तियुक्ताः, तथाप्यदृष्टसहकृतप्रयत्नप्रेरितवायुना समीर्य संह्रियमाणा एव शब्दरूपतां प्रतिपद्यन्ते, नान्यथेति ।। १११ ।।

**अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः ।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ।।११२।।**
**स मनोभावमापद्य तेजसा पाकमागतः ।**
**वायुमाविशति प्राणमथासौ समुदीर्यते ।।११३।।**
**अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।**
**तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ।।११४।।**

---

ज्ञानस्य खल्वपि शब्दत्वापत्तिमपरे वर्णयन्ति—

इत्येवमादि सर्वमनुगन्तव्यम् । निदर्शनमात्रं चेदम् । बहुधा शिक्षासूत्रकारभाष्यकारमतानि दृश्यन्ते । तद्यथा—"अन्तर्वर्तिना प्रयत्नेनोर्ध्वमुदीरितः प्राणो वायुस्तेजसानुगृहीतः शब्दवहाभ्यः शुषिभ्यः सूक्ष्मांशं धूमसन्तानवत् संहतिः ।

---

ज्ञानस्य खल्वपि शब्दत्वापत्तिमपरे वर्णयन्ति, तन्मतमनुसृत्याह—**अथायमान्तरो ज्ञातेति ।**

अयमर्थः—अस्ति पुरा शब्दतत्त्वमेवैकं पश्चाद् वाङ्मनसाख्यप्रविभागवत् । मनसस्तु वृत्त्याख्यः परिणामो ज्ञानम्, तदाश्रयत्वान्मनो ज्ञातृपदेनोच्यत इति सिद्धान्तः ।

एवं ज्ञातर्यपि वाग्रूपत्वानुषङ्गः । तथा च सूक्ष्मे ध्वनिकृतकत्वखत्वादिपदत्ववाक्यत्वादि-रूपभेदरूपोपसंग्रहाद् अतीन्द्रिये वागात्मनि स्थितोऽतीन्द्रियवाक्सारूप्यानुषक्ते ज्ञानस्वरूपे स्थितः, आन्तरः शरीरान्तर्वर्तिहार्दाकाशे भवः समुपलभ्यमानो ज्ञाता स्वस्य रूपस्य व्यक्तये तस्यामवस्थायां शब्दरूपस्य ज्ञानादविवेकेन ज्ञानात् पृथक् शब्दरूपतयाऽनवधारणेन शब्दरूपव्यक्त्यर्थं स्थूलेन्द्रियगम्येन रूपेण, अथ विवक्षाजनितप्रयत्नप्रेरितवायुव्यापारसमुपजाततत्तत्स्थानगतकरणाभिघातानन्तरं तेजसा शरीरान्तः स्थितेनोष्मणैव साधनेन विवर्तते, शब्दाकारेण परिणमतीति ॥ ११२ ॥

आन्तरस्य ज्ञातुः स्थूलशब्दभावापत्तौ क्रममाह—**स मनोभावमापद्येति ।**

अयमर्थः—स सूक्ष्मवागात्मना स्थित आन्तरो ज्ञाता तेजसा शरीरान्तःस्थितेनोष्मणा पाक-मागतः, अत्र पाको नाम मनोरूपतामापन्नस्य ज्ञातुर्विषयग्रहणसामर्थ्यख्यापकः कश्चनातिशयः, तं प्राप्तः, मनोभावमापद्य, मनो हि विषयपरिच्छेदयोग्येन स्थूलेन स्वरूपेण व्यवतिष्ठते, प्रकाशरूपत्वात् । स एष सूक्ष्मवागात्मना स्थितस्य आन्तरस्य ज्ञातुस्तेजसा पाकेन मनोभावः, तं मनोभावमागतः, विवक्षाजनितेन स्वनिष्ठप्रयत्नेन समीरितः, प्राणवायुमाविशति प्राणाख्ये वायौ स्वस्वरूपं निक्षिप्य प्राणं स्वस्वरूपतामापादयति । अथ मनोरूपताप्राप्त्यनन्तरमसौ प्राणाख्यो वायुः समुदीर्यते । विवक्षाजनितेन प्रयत्नेन स्वान्तःप्रविष्टमनोनिष्ठेन सम्यग् ऊर्ध्वं प्रेर्यत इति ॥ ११३ ॥

ततः किमित्यत आह—**अन्तःकरणतत्त्वस्येति ।**

अयमर्थः—प्रागुक्तरीत्या अन्तःकरणतत्त्वस्य मनसो विषयपरिच्छेदयोग्यस्याश्रयतां गतो वायुः, तद्धर्मेण तस्य शब्दात्मकस्य मनसो धर्मेण कत्वादिना तादात्म्याध्यासबलात् समाविष्टस्तेजसैव साधनेन विवर्तते, शब्दरूपतया परिणमति । यद्वा, अन्तःकरणतत्त्वस्य मनोरूपतां प्राप्तस्य ज्ञातुराश्र-

**विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ।**
**प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते ।। ११५ ।।**

---

स स्थानेषु शब्दघनः संहन्यमानः प्रकाशमात्रया कयाचिदन्तःसन्निवेशिनः शब्दस्याविभक्तं बिम्बमुपगृह्णाति'' इत्येवमादि सर्वमनुगन्तव्यम् ।

तद्यथा—''नाभिप्रदेशात् प्रयत्नप्रेरितो वायुरूर्ध्वमाक्रामन्नुरस्यादीनां स्थानानामन्यतमं स्थानमभिहन्ति, ततः शब्दनिष्पत्तिः'' इत्यादिशिक्षाकारमतभेदप्रबन्धोऽनुगन्तव्यः ।

आचार्यः खल्वप्याह—

आत्मा बुद्ध्या समर्थ्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।। इत्येवमादि ।

तथापरः पठति—''वायुः कोष्ठस्थानमनुप्रदानमापद्यते । स कण्ठगतः श्वासतां नादतां वा'' इत्यादि ।

---

यतां गतो वायुः, तद्धर्मेण तस्य मनसो धर्मेण समाविष्टो विशिष्टो विवर्तते तद्धर्मवानिव भवतीति सम्बन्धः । तेजसेवेति तत्र दृष्टान्तः ।

तथा हि—यथा तेज इन्धनमाश्रयतां प्राप्तं तत्समावेशाद् इन्धनरूपतां विहाय तेजोरूपं भवति, तथा वायुः स्वरूपहानेन मनोरूपतां प्रतिपद्यत इति ।। ११४ ।।

पूर्वोक्तरीत्या मनस्तादात्म्यमापन्नो वायुः प्राणाख्यः कथं वर्णरूपतां प्रतिपद्यत इत्याकाङ्क्षायामाह—**विभजन् स्वात्मनो ग्रन्थीनिति ।**

अयमर्थः—योऽयं प्रक्रान्तः प्राणो वायुः, स तत्तत्स्थानेषु करणानामात्मनश्चाभिघातेन पृथग्विधैः श्रुतिरूपैः शब्दानित्यत्वपक्षे वर्णरूपैः, तन्नित्यत्वपक्षे तु प्राकृतध्वनिरूपैः स्वात्मनो ग्रन्थीन् ग्रन्थिसदृशान् अवयवान् विभजन् तत्तद्वर्णविभागेनावस्थापयन् वर्णान् उक्तानि श्रुतिरूपाण्यभिव्यज्य शब्दानित्यत्वपक्षे उत्पत्त्या प्रकाश्य, नित्यत्वपक्षे तु समुत्पन्नप्राकृतनादद्वारा प्रकाश्य तेषु वर्णेष्वेवोपलीयते वर्णरूपतां प्रतिपद्य स्वरूपहानेन रूपान्तरमुपगृह्णातीत्यत्रार्थे वर्णेष्वेवोपलीयत इत्युक्तम् । तदेवमतीन्द्रियशब्दात्मकज्ञानपरिणामस्य स्थूलशब्दस्य शब्दनित्यत्ववादे ज्ञातविवर्तस्य वा तस्यार्थप्रकाशकत्वमुपपद्यत इत्येवमादीनि शिक्षासूत्रकाराणां मतानि द्रष्टव्यानि ।

इदञ्च प्रागुक्तं सर्वं निदर्शनमात्रम्, यतः शिक्षासूत्रकाराणां मतानि तद्भाष्यकारैर्बहुधा व्याख्यातानि दृश्यन्ते । तद्यथा—विवक्षासमुत्पन्नेनान्तर्वर्तिना प्रयत्नेनोर्ध्वमुदीरितः प्राणो वायुः शरीरान्तःस्थेनोष्मणाऽनुगृहीतः, यतस्तेजसा शारीरेण प्राणवायोः सारतेव क्रियते, अतस्तेनाननुगृहीतस्य बाह्यवायोः सत्यप्योष्ठादिस्थानसंयोगे न वर्णाभिव्यक्तिः । अत एव चान्तरस्य शब्दघनस्य प्रकाशस्वभावता । तदेवं तेजसाऽनुगृहीतः प्राणो वायुः, याः शरीरान्तःस्थिता नाड्यः सूक्ष्माः सूक्ष्मशब्दावयवपूर्णाश्च ताभ्यः सूक्ष्मान् शब्दावयवान् समुपादाय ताल्वादिष्वभिघातेन संहन्ति धूमसन्तानवत् ।

अथापर आह—''मनोऽभिहतः कायाग्निः प्राणमुदीरयति। स नाभेरुद्यन् मूर्धन्यभिहतोऽन्येन पुनरुद्यता मरुताभिहन्यमानो ध्वनिः सम्पद्यते, क इति वा ख इति वा'' इत्येवमादि प्रतिशाखं शिक्षासु भिन्नमागमदर्शनं दृश्यमानं सर्वं प्रपञ्चेन समर्थयितव्यम् ॥११२-११५॥

---

तद्यथा धूमावयवा वायुना प्रेर्य संहतिमुपनीयन्ते, यथा प्राणवातेन शब्दावयवा ध्वनिपरमाणवः सम्प्रेर्यमाणाः स्थानेष्वभिघातेन घनीक्रियन्त इति ।

स स्थानेषु संहन्यमानः शब्दघनो नादाख्यः कयाचित् स्वार्थप्रकाशनादन्यया प्रकाशमात्रया स्वनिष्ठयोपलक्षितोऽतीन्द्रियशब्दात्मकमनस्तादात्म्यापन्नवायोरन्तःसन्निवेशिनः शब्दस्य स्वात्मना सहाविभक्तं प्रतिबिम्बमुपगृह्णाति । अविभक्तत्वं चान्तर्बहिःस्थितशब्दयोरत्यन्तसारूप्येण भेदाग्रहात् ।

तथा हि—यादृशमन्तःशब्दस्वरूपं तादृगेव बहिरिति । तथाप्यन्तःस्थित एव शब्देऽर्थप्रकाशन-शक्तिरिति नादात्मके बहिःशब्दे तत्प्रतिबिम्बोपग्रहोऽर्थप्रकाशनार्थमावश्यक इति । एवमन्यदपि मतम्।

तथा आपिशलीयशिक्षादर्शनमप्यन्यत् । तथा हि—नाभिप्रदेशात् प्रयत्नप्रेरितो वायुरूर्ध्व-माक्रामन्नुरस्यादीनां स्थानानामन्यतमं स्थानं यथाक्रमं प्राप्तमभिहन्ति, ततोऽभिघातेन शब्दस्य स्फोट-रूपस्य ध्वनिरूपस्य वा निष्पत्तिरित्येवमादीनि शिक्षासूत्रकाराणां मतानि भाष्यकारैर्व्याख्यातानि ।

अस्माकमाचार्यः पाणिनिरपि शब्दनिष्पत्तिप्रकारमेवमाह—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ इति ।

अस्यार्थः—आत्मा बुद्ध्या समेत्यार्थान् गृहीत्वेति शेषः । तदर्थबोधकशब्दानां विवक्षया मनो युङ्क्ते, स्वस्मिन्नुत्पन्नेन यत्नेन प्रेरयति; तत्प्रेरितं मनः कायाग्निमाहन्ति, सोऽभिहतः कायाग्निर्मरुतं स्वसमीपे नाभौ स्थितं प्राणं प्रेरयति, स उदीर्णो वक्त्रमापद्य मूर्ध्न्यभिहतो मारुतो वर्णान् जनयतीति ।

तथाऽपरः पठति—मनोऽभिहतः कायाग्निनाऽभिहतः प्राणो वायुः कोष्ठस्थितस्तस्मिन्नेव स्थानेऽनुप्रदानाख्यध्वनिविशेषरूपतया परिणमते । अत्रानुप्रदानमिति ध्वनिजानां ध्वनीनां संज्ञा । यतः प्रदानपदेन ध्वनिरुच्यते, प्रदीयते समुत्पाद्य श्रोतृभ्यः श्रवणायेति प्रदानो ध्वनिः । तमनुजाता ध्वनयो ध्वनिजा अनुप्रदानाः । यथा वर्णोत्पत्त्यनन्तरं निवृत्ते प्राणाख्ये वायौ जाताः प्राकृतनादजा वैकृतनादा ओष्ठात् प्रभृति प्राक् काकलकाद् यदास्यं तद्बाह्यप्रयत्नसाध्यत्वाद् बाह्यध्वनयोऽनुप्रदानसंज्ञकाः । अयं च कोष्ठ्यवायुपरिणामभूतोऽपि ध्वनिरनुप्रदानः, कोष्ठ्यवह्निध्वनिमनुजातत्वात् । कोष्ठ्यवह्निध्वनि-रपि प्रदानः, पिहिते कर्णे तस्य श्रूयमाणत्वात् । सोऽनुप्रदानरूपेण परिणतो वायुः कण्ठगतो विवृते कण्ठे श्वासरूपतां संवृते कण्ठे नादतां च प्रतिपद्यते । यतः श्वासानुप्रदाननादानुप्रदानभेदेन द्विविधा वर्णाः । यथा बह्वृचप्रातिशाख्ये शौनकः— 'वायुः प्राणः कोष्ठ्यमनुप्रदानम्, कण्ठे विवृते संवृते चापद्यते श्वासतां नादताञ्च वक्त्रीहायामुभयं चान्तरे तदपि' इति ।

अत्र वायुः प्राणः कोष्ठ्यमनुप्रदानमिति मृद्घटयोरिव सामानाधिकरण्यव्यपदेशः । स च

**अजस्त्रवृत्तिर्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते ।**
**व्यञ्जनाद् वायुरिव स स्वनिमित्तात् प्रतीयते।।११६।।**

---

अथापर आगमोऽनुगम्यते— सूक्ष्मो वायुसन्निचय इवान्तर्बहिश्च सर्वमूर्त्तीनां ध्वनिरवस्थितः । स चैकेषामाकाश इति प्रतिपद्यते । स यथैव तु सर्वत्र परमाणुसम्भवे संहतत्वाद् व्यजनाभिघातेन वायुराश्रयस्थानात् प्रविभज्यमानः क्रियाभिराविश्यते, तथैव ध्वनिः स्वनिमित्तैरभिव्यक्तप्रचितविक्रियारूपः श्रोत्रप्रदेशं प्राप्त उपलभ्यते संस्करोति च ।।११६।।

---

कण्ठगतो विवृते कण्ठे श्वासतां संवृते कण्ठे नादतां च प्रतिपद्यत इति यथाक्रमं सम्बन्धः । उभयं च श्वासरूपता नादरूपता च, वक्त्रीहायां वक्तुः कण्ठविवारतत्संवारानुकूलचेष्टायां सत्यामेव, तदपि उभयमपि श्वासनादरूपत्वोभयमपि, अन्तरे कण्ठविवारतत्संवारयोरन्तरे वर्णव्यवधानेन समुत्पादे सत्येव, न त्वव्यवधानेन समुत्पादे, असम्भवात् । यतो विवारसंवारयोरन्तराले वर्णानामुत्पत्तिरित्येतत्प्रातिशाख्यवाक्यार्थः ।

अथापर आह—विवक्षाजन्यप्रयत्नप्रेरितमनोऽभिहतः कायाग्निः प्राणमुदीरयति, स नाभेरुद्यन् मूर्धन्यभिहतोऽन्येन पुनरुद्यता उत्पन्नेन करणकम्पजेन मरुताऽभिहन्यमानो ध्वनिः सम्पद्यते क इति वा ख इति वा, इत्येवमादि प्रतिशाखं शिक्षासु भिन्नमागमदर्शनं सर्वं प्रपञ्चेन समर्थयितव्यं भवति ।।११५।।

ननु यदि शब्दो नित्यत्वादजस्त्रवृत्तिः, तदा तस्य कथं कादाचित्क्यावुपलब्ध्यनुपलब्धी इत्याशङ्क्याह—**अजस्त्रवृत्तिर्यः शब्द इति** ।

अयमर्थः—यः शब्दोऽजस्त्रवृत्तिः = अजस्त्रं सदा वृत्तिः स्थितिरस्येत्यजस्त्रवृत्तिर्नित्यः, परमाणुरूप इत्यर्थः । सूक्ष्मत्वान्नोपलभ्यते श्रोत्रेण न गृह्यते । स स्वनिमित्ताद् व्यजनाभिघाताद् वायुरिव वायुपरमाणव इव, स्वनिमित्तात् करणाभिघातात्, प्रतीयते संहन्यमानः प्रचीयमानः श्रोत्रेण प्रतीयत इत्यर्थः ।

एतदुक्तं भवति—यथा वायुपरमाणवः सूक्ष्मा व्यजनाभिघातेन संहन्यन्ते, तथा शब्दपरमाणवः करणाभिघातात् संहन्यमानाः प्रचिता व्यक्ताश्च श्रोत्रेणोपलभ्यन्त इति ।

अयं भावः—अस्तीदं कस्यचित् शिक्षाकारस्य मतम् । तद्यथा सूक्ष्मो वायुसन्निचयः सर्वत्रैवाकाशे वर्तते, तथा सर्वमूर्तीनां प्राणिनामप्राणिनां च घटादीनां चराचराणामन्तर्बहिश्च ध्वनिर्वर्तते । स च वस्तुतः सर्वत्रावस्थितोऽपि केषाञ्चिन्मत आकाश एवेति प्रतिपद्यते । अयमेवास्य पक्षस्य विशेष आकाशमात्राश्रितशब्दपरमाणुपक्षात् । स तु वायुपरमाणुर्यथैव सर्वत्र वायुपरमाणुसम्भवेन यत्राश्रयस्थाने प्रथमं स्थितस्तस्मादाश्रयस्थानाद् व्यजनाभिघातात् प्रच्याव्यमानः संहतत्वात् क्रियाभिराविश्यते, येन स स्थूलवायुद्रव्यस्य त्वगिन्द्रियग्राह्यस्य कारणतां प्रतिपद्यते, तथैव ध्वनिः स्वनिमित्तैस्तत्तत्करणाभिघातैः संहन्यमानः सूक्ष्मावस्थात्यागेनाभिव्यक्तं प्रचितं विक्रियारूपं प्रतिपद्यमानः श्रोत्रप्रदेशं प्राप्त उपलभ्यते, स्वोपलब्धये श्रोत्रं संस्करोति चेति ।।११६।।

**तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।**
**विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते ।।११७।।**

पक्षभेदा एवैते । नायमनन्तरः प्रचयधर्मा ध्वनिरिह श्लोके निर्दिश्यते । शब्दस्तु पूर्वप्रकृतः प्रवादभेदैरन्वाख्यायते । शब्दः खलु प्राणाधिष्ठानो बुद्ध्यधिष्ठानश्च ।

स तु द्वाभ्यां प्राणबुद्धिमात्राशक्तिभ्यां प्रतिलब्धाभिव्यक्तिरर्थं प्रत्याययति ।

तत्र प्राणो बुद्धितत्त्वेनान्तराविष्टः । स चोर्ध्वमभिप्रवृत्तो ज्वालावद् वर्णस्थानेष्वाक्षेपकप्रयत्नानुविधायी प्रतिविघातविवर्तेन नित्यशब्दोपग्राहिणा विवर्तते ।

---

य एते शब्दनिष्पत्तिक्रमप्रतिपादनाय पूर्वं प्रक्रान्ताः पक्षभेदाः, ततोऽन्यमेव पक्षभेदं दर्शयितुमाह— **तस्य प्राणे च या शक्तिरिति ।**

अयमर्थः—तस्य वाचकस्य शब्दस्य या शक्तिर्बुद्धौ व्यवस्थिता, बुद्धावेव प्रथमं शब्दाकारस्योपारोहात् । शक्तिरिति शब्दस्य सूक्ष्मं रूपमुच्यते । या च शब्दस्य शक्तिर्बुद्ध्या प्रेर्यमाणे बुद्धितादात्म्यापन्ने प्राणे व्यवस्थिता, सैषोभयी अपि शक्तिस्तत्तत्स्थानेषु करणाभिघातेन तत्तद्वर्णरूपतया विवर्तमाना जायमाना भेदं वर्णभेदं प्रपद्यते प्राप्नोति ।

अयं भावः—शब्दविषयाः पक्षभेदा एवैते, योऽयमनेन पद्येनोच्यते ये च वक्ष्यमाणाः । अतो नेह श्लोके 'अजस्रवृत्तिर्यः शब्दः' इति समनन्तरपद्योक्तः प्रचयधर्मा ध्वनिर्निर्दिश्यते; किन्त्वन्य एवैष पक्षभेदः ।

तथा हि—यः खलु शब्दो वाचको ध्वनिभिरभिव्यक्तः श्रोत्रेण गृह्यमाणोऽर्थं प्रत्याययति, सोऽभिव्यक्तेः प्राक् सूक्ष्मरूपेण बुद्ध्याश्रितः प्राणाश्रितश्च । यतो वक्तुः प्रथमतो बुद्धावेव विशिष्टशब्दाकारारोहः, यतस्तदुच्चारणानुरूपः स्थानकरणाभिघातः । स बुद्धिस्थः सूक्ष्मः शब्दाकारः स्थूलशब्दस्योत्पत्तौ योग्य इति शक्तिपदेनोच्यते । सा च स्वान्तःस्थितसूक्ष्मशब्दानुविद्धा बुद्धिर्विवक्षाजनितप्रयत्नवती प्राणस्य प्रेरिकेति स्वमाकारं तत्र प्राणाख्ये वायौ निवेशयति । स चैवं बुद्धिसंसृष्टः प्राणः प्रतिबिम्बस्य यथोपाधावुपरागः तथा बुद्ध्युपरागप्राप्त्या बुद्ध्याकारतादात्म्यापन्नं स्वमाकारमुपगृह्णातीति प्राणेऽपि यः शब्दाकारः सूक्ष्मः स स्थूलशब्दव्यवहारे योग्यतावानिति रीत्या बुद्धौ प्राणे च समवस्थितः सूक्ष्मः शक्तिरित्युक्तः ।

स तु बुद्धौ प्राणे च समाश्रितः सूक्ष्मः शब्दो बुद्धिप्राणरूपमात्रापदोदिताधिकरणरूपविषयगतशक्तिभ्यां स्थूलशब्दाभिव्यक्तिजननयोग्यतारूपाभ्यां द्वाभ्यां संसृष्टाभ्यां परस्परप्राप्तानुग्रहाभ्यां प्राप्ताभिव्यक्तिरर्थं प्रत्याययति । तत्र बुद्धिशक्त्या प्राणशक्तेरनुग्रहो विशिष्टशब्दाकारार्पणरूपः, येन स प्राप्तो विशिष्टस्थानाभिघातद्वारा विशिष्टं शब्दं जनयति । अप्राप्तबुद्ध्यनुग्रहस्तु प्राणः केवलं बुद्धिशक्त्या प्रेरितोऽभिघातादव्यक्ताक्षरध्वनिमात्रं जनयति । प्राणशक्त्यापि बुद्धिशक्तेरनुग्रहः, यतो बुद्धिशक्तिः प्राणवृत्तिसम्बन्धं प्राप्य शब्दत्वेन विवर्तते । न हि बुद्धिः प्राणशक्तिमन्तरेण शक्नोति केवला शब्दत्वेन विवर्तितुमिति ।

तत्र प्राणो बुद्धितत्त्वेनान्तराविष्टः । स च प्राणो वायुर्विवक्षाजनितं नाभेरूर्ध्वं स्वसमुत्क्षेपकं

**शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी ।**
**यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते ।।११८।।**

---

स च संसृष्टप्राप्तशक्तिविवर्तः पृथिवीकललन्यग्रोधधानादिवद् भेदमुपगृह्णाति, भेदानुरागमात्रं च परस्मिन्नभेदे शब्दात्मनि सन्निवेशयति ॥ ११७ ॥

तत्र केषाञ्चिदाकृतयः सूक्ष्मशब्दाधिष्ठाननिबन्धनाः । ताः खल्वात्माभिव्यक्तिमधिष्ठानपरिणामेन प्रतिलभमाना वाच्यवाचकभावेन व्यवतिष्ठन्ते । यथापरेषामिन्द्रियेषु

---

प्रयत्नमनुपतन् ज्वालावद् नाभेरूर्ध्वमभिप्रवृत्तः, तद्यथा ज्वाला ऊर्ध्वसमुत्क्षेपकं वायुव्यापारमनुपतन्ती ऊर्ध्वमेवोद्गच्छति, नाधस्तथा । तदुक्तं कविभिः—"प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः" (माघ० १/२) इति । ताल्वादिषु वर्णस्थानेषु प्रतिघातेन विभक्तावयवस्य वायोर्यस्तत्तद्ध्वनिरूपः परिणामो नित्यस्य स्फोटाख्यस्य शब्दस्य व्यञ्जकस्तद्रूपतामापद्यते ।

तथा हि—स प्राणो यद्वर्णविषयेण विवक्षाजनितप्रयत्नेन ताल्वादिस्थानेषु वेगेन प्रेष्यते, तस्यैव वर्णस्य स्थानमभिहन्ति । तस्यामेव चाभिघातावस्थायां प्राणस्य तत्तद्ध्वनिरूपत्वापत्त्या तदभिव्यक्तशब्देन सह तादात्म्याध्यासेन नित्यशब्दरूपत्वापत्तिः ।

किञ्चैवं स प्राणस्तत्तद्वर्णस्थानेष्वभिघातेन स्वसंसृष्टयोर्बुद्धिशक्तिप्राणशक्त्योस्तत्तद्ध्वनिरूपं कार्यात्मकं परिणामं क्रमेण प्राप्तः पृथिवीकललन्यग्रोधधानादिवत् क्रमेणैव तत्तद्ध्वनिरूपभेदमुपगृह्णाति, न तु युगपत् ।

तथा हि—पृथिवी यथाक्रमेणैव घटादिकार्यरूपतां धत्ते, न तु युगपत् । शुक्रशोणितयोरवस्थाविशेषरूपं कललं यथा क्रमेणैव कायरूपतां बिभर्ति, न्यग्रोधधाना यथाऽङ्कुरादिक्रमेणैव न्यग्रोधतरुरूपतामासादयति । एवं प्रागुक्तरीत्या तत्तत्स्थानेष्वभिहतो वायुर्वर्णपदध्वनिक्रमेणैव वाक्यध्वनिरूपतामाप्नोति, न युगपत् । तस्मिंश्च ध्वन्यात्मके स्वपरिणामे या भेदानुरागमात्रा भेदसम्बन्धरूपा तां ध्वन्यभिव्यङ्ग्ये भेदरहिते परस्मिन् नित्ये शब्दात्मनि प्रतिभाख्ये स्फोटे व्यञ्जकत्वात् समावेशयति । इष्टं ह्यभिव्यङ्ग्ये प्रतिबिम्बे मुखादौ खड्गमुकुरादिरूपव्यञ्जकोपाधिधर्मानुविधानमिति ॥११७॥

एवं शब्दविषये शिक्षाकाराणां मतभेदमाख्याय तदुत्तरं शब्दस्य माहात्म्यं प्रदर्शयति तज्ज्ञापकशब्दशास्त्रारम्भसमर्थनाय—**शब्देष्वेवाश्रिता शक्तिरिति** ।

अयमर्थः—वाच्यवाचकरूपस्यास्य विश्वस्य निबन्धनी वाच्यवाचकभावनियामिका 'अयमेव शब्दोऽस्यैवार्थस्य वाचकः' इति नियमप्रयोजिका शक्तिः शब्देष्वेवाश्रिता । 'यन्नेत्रः' इत्यत्र नेत्रपदस्य परिच्छेदोपाये लक्षणा, प्रकाशसाधनत्वरूपनेत्रसाधर्म्यात् शब्दशक्तेः । या शब्दशक्तिर्नेत्रं परिच्छेदोपायो यस्य वाच्यस्य पदार्थजातस्य, सोऽयं यन्नेत्रः प्रयुक्तशब्दशक्तिप्रकाश्योऽयं वाच्यः पदार्थः प्रतिभात्मा, प्रतिभायां बुद्धौ आत्मा स्वरूपं यस्य गोचरतयेति विग्रहः, बुद्धिविषयः सन् इति यावत् । भेदरूपो गवादिरूपवाच्यभेदभिन्नः प्रतीयते । न हि तदर्थविषयकशक्तिविशिष्टेन शब्देन विना गवादिपदार्थविषया प्रतिभा उत्पद्यत इत्यवधेयम् ।

विषयमात्रशक्तय: प्रतिलयं गच्छन्ति, तथेन्द्रियमात्राशक्तयो बुद्धिषु, बुद्धिमात्राशक्तय: प्रतिसंहृतक्रमे वागात्मनि ।

सा चेयं स्वप्नप्रबोधप्रवृत्ति: प्रविभक्तपुरुषानुकारा महत्यपि वाक्तत्त्वे कारणे नित्यमवस्थिता । तथाऽपरेऽप्याहु:—

वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति ।
वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते ॥११८॥

---

यद्वा 'यन्नेत्र:' इत्यत्र नेत्रपदेन नयनसाधनं योगशक्त्या करणव्युत्पत्त्या आश्रय उच्यते । तथा च शब्देषु सूक्ष्मशब्देष्वेव बुद्धिस्थेष्वतीन्द्रियेषु आश्रिताऽस्य वाच्यवाचकभेदभिन्नस्य विश्वस्य निबन्धनी जनिका शक्ति: । यन्नेत्रो यं सूक्ष्मशब्दमुपादानतयाश्रितोऽयं प्रतिभात्मा बुद्धिविषय: प्रतिभासमानो भेदरूपो वाच्यवाचकभेदभिन्न: प्रतीयते । सूक्ष्मशब्दो वाक्तत्त्वं तदेवाधिष्ठानमाश्रयोऽखिलस्य वाच्यवाचकजातस्य, यतस्तदेव वाक्तत्त्वं सूक्ष्मं गवादिशब्दाकारेण गवादिपदार्थाकारेण च विवर्तत इत्यर्थ: ।

अयं भाव:—केषाञ्चिन्मते गवादिशब्दगता गोशब्दत्वादिरूपा जातयो वाचिका:, गवादिपदार्थगताश्च गोत्वादिजातयो वाच्या: । तदेतदुभयं स्वनिबन्धनत्वेन = स्वज्ञापकहेतुत्वेन सूक्ष्मं वाक्तत्त्वं बुद्धिस्थमेव वाच्यवाचकोभयजात्याश्रयाणां शब्दनित्यत्वानित्यत्वपक्षभेदेन विवर्तोपादानतया परिणाम्युपादानतया वाऽधिष्ठानभूतमाश्रयते । यतो वाच्या वाचिकाश्च गोत्वादयो गोशब्दत्वादयश्च जातय: स्वाश्रयाणामनुत्पत्तावनभिव्यक्ता:, न वाच्यत्वेन, न वा वाचकत्वेन व्यवहारगोचरा: । अत: स्वाभिव्यक्तये स्वाश्रयाणामुत्पत्तिमपेक्षमाणा: सूक्ष्मं वाक्तत्त्वं नित्यत्वपक्षे विवर्तोपादानतया, अनित्यत्वपक्षे च परिणाम्युपादानतयाऽपेक्षन्त इत्येवं सूक्ष्मेषु **''शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी''** इत्युक्तम् ।

कथमस्य वाच्यवाचकभेदभिन्नस्य विश्वस्य निबन्धनी = जनिका शक्ति: सूक्ष्मे वाक्तत्त्वे एवाश्रिता ? केन क्रमेण च सूक्ष्मस्य प्रतिसंहृतक्रमस्य वागात्मनो वाच्यवाचकोभयरूपेण विवर्त: परिणामो वेति जिज्ञासा चेच्छ्रूयताम् , शब्दसर्वस्वं श्रुत्वा चैवावधार्यताम् । इदं हि सर्वं वाच्यवाचकोभयात्मकं विषयजातं प्रविनश्यत् शक्तिरूपेण स्वस्वग्राहकेन्द्रियेषु प्रविलयं गच्छति, तादृशशक्तिमच्चेन्द्रियजातं प्रविनश्यच्छक्तिरूपेण बुद्धिषु वृत्तिभेदभिन्नासु लयं याति, तादृश्यो बुद्धयश्च प्रविनश्यन्त्य: शक्तिरूपेण प्रतिसंहृतक्रमे सूक्ष्मे वाक्तत्त्वे प्रविलयं गच्छन्तीत्येवमस्य विश्वस्य सूक्ष्मे वाक्तत्त्व एव प्रविलय: । एतद्वैपरीत्येन च सर्गकाले सूक्ष्माद् वाक्तत्त्वाद् बुद्धीनां वृत्तिभिन्नानामुद्भव:, बुद्धिभ्य इन्द्रियाणाम्, इन्द्रियेभ्यो विषयाणां वाच्यवाचकोभयात्मनामिति रीत्या विश्वस्य सर्गलयाधिष्ठानत्वादुपादानकारणं सूक्ष्मं प्रतिसंहृतक्रमं वाक्तत्त्वं परम् ।

सा चेयं शब्दब्रह्मण: सूक्ष्मस्य वाक्तत्त्वस्य दैनन्दिने स्वप्ने सर्वप्रलये वृत्ति:, प्रबोधे च प्रागुक्तक्रमेण सर्वसर्गे वृत्ति:, सम्प्रसादे = निद्रायाम् अविभागमुपागतानां पुरुषाणां प्रबोधे चैत्रमैत्रादि-

**षड्जादिभेदः शब्देन व्याख्यातो रूप्यते यतः ।**
**तस्मादर्थविधाः सर्वाः शब्दमात्रासु निश्रिताः ।। ११९ ।।**

संविज्ञानपदनिबन्धनो हि सर्वोऽर्थः स्मृतिनिरूपणयाऽभिजल्पनिरूपणयाकारनिरूपणया च निरूप्यमाणो व्यवहारमवतरति ।

पुरुषप्रविभागानुकारिणी यद्यपि महती मायारूपा, तथापि वाक्तत्त्व एव परब्रह्मस्वरूपे जगत्कारणे नित्यमवस्थिता । एतदेवापरेऽप्याहुः—

वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति ।
वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते ।। इति ।

अयमर्थः—सूक्ष्मं वाक्तत्त्वमेव ज्ञातृरूपेणावस्थितं सत् स्वपरिणामेन स्थूलशब्देन प्रकाशितं स्वपरिणामभूतमर्थं पश्यति जानाति । तदेव वाक्तत्त्वं विवक्षाप्रयुक्तप्रयत्नवद् वक्तृरूपेणावस्थितं सतं स्वपरिणामभूतं स्थूलशब्दं ब्रवीति, प्राणस्योर्ध्वं समीरणेन करणकम्पं कण्ठताल्वाद्यभिघातं चोत्पाद्य स्थूलं शब्दमुच्चारयति । तदेव वाक्तत्त्वं स्वस्मिन् निहितमविभागेन शक्तिरूपेणावस्थितमर्थं विषयजातं दैनन्दिने प्रलयेऽन्यस्मिन् वा बहुरूपं नानाजातीयं विश्वं निबद्धं शक्तिरूपेण स्थितम् , सर्गकालेऽपि प्रबोधे कार्यरूपेणाश्रितम् । तदेवमेतदेकमेव वाक्तत्त्वं भोक्तृलोकः स्वादृष्टद्वारा प्रविभज्य नानाभोग्यरूपतां स्वयमेवापाद्योपभुङ्क्ते । न हि तत्रोपभोगे ईश्वरस्य कर्मनिरपेक्षस्य हेतुत्वम् , वैषम्यनैर्घृण्यापातात् । कर्मसापेक्षस्य हेतुत्वे तु जीव एव स्वकर्मद्वारा प्रधानं कारणं भोग इत्यर्थः ।।११८।।

दुरधिगमानां भावानां भेदावबोधः शब्दशक्तिनिबन्धन एव, न तत्रान्यो मार्ग इति रीत्यापि शब्दस्य माहात्म्यं प्रकथयति—**षड्जादिभेदः शब्देनेति** ।

अयमर्थः—यतः षड्जादीनां स्वराणां परस्परं भेदः शब्देन व्याख्यातः, गायकेन प्रतिपादित एव रूप्यते परिच्छिद्यते नान्यथा, गान्धर्वशास्त्रानभिज्ञानां सत्यपि सङ्गीतश्रवणे तत्तत्स्वरानवबोधात् । तस्मात् षड्जादिस्वरभेदनिरूपणस्य शब्दशक्तिमात्रनिबन्धनत्वात् सर्वा अप्यर्थविधाः प्रसिद्धपदनिबन्धना अप्रसिद्धपदनिबन्धना वा शब्दमात्रासु शब्दशक्तिषु स्वप्रज्ञापिकासु स्वप्रज्ञप्तये निश्रिता नितरां श्रिताः सम्बद्धाः, सापेक्षा इति यावदिति ।

अयं भावः—सर्वो ह्यर्थः स्वविषयकसंविज्ञानजनकपदप्रतिपादित एव तत्तद्व्यवहारपथमवतरति नान्यथा, न हि शब्दाव्यपदेश्येन स्वरूपमात्रेण चक्षुरादिभिः परिच्छिन्नोऽर्थो व्यवहारविषयो दृष्टः । शब्देन तु तत्तद्धर्मविशेषवत्तया प्रतिपादितो व्यवहाराङ्गं भवति ।

तथा हि—पूर्वं चक्षुरादिभिरर्थस्य सम्प्रयोगे सम्मुग्धरूपा स्वरूपेणार्थाकारनिरूपणा भवति, तदुत्तरमेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति रीत्या तदर्थवाचकशब्दस्मृतौ बुद्ध्या शब्दार्थयोरभेददर्शनरूपा स्मृतिनिरूपणा भवति, तदुत्तरम् ''अयमर्थोऽस्यार्थस्य साधनम् , अयमर्थोऽस्यार्थस्य साध्यः'' इत्यादिरूपाऽभिजल्पनिरूपणा भवति, तदुत्तरं तत्तदर्थक्रियासु प्रवृत्तिरूपो व्यवहार इति ह्यर्थस्य व्यवहारावतारप्रक्रिया ।

षड्जऋषभगान्धारधैवतनिषादपञ्चममध्यमानां चानवस्थितप्रसिद्धसंविज्ञानपदानां विशेषोऽवधारणनिबन्धनपदप्रत्ययमन्तरेण नावधार्यते। गोपालाविपालादयो हि निबन्धनपदानि प्रकल्प्य गवादिषु विशेषविषयं व्यवहारमारभन्ते।

तस्मात् समाख्येयेष्वसमाख्येयेषु च सामान्यविशेषशब्देष्वध्यारूढो भेदवानर्थः शब्दशक्तिसंसृष्ट्या शब्दानुविद्धया शब्दात्मिकया बुद्ध्या प्रकाश्यत उपगृह्यते स्वीक्रियते॥ ११९॥

---

एवञ्च शब्देनाप्रतिपादितोऽर्थो न कथमपि व्यवहारपथमवतरतीति समाख्येयानां प्रसिद्धसंविज्ञानपदानामर्थानां स्थितिः।

ये त्वप्रसिद्धसंविज्ञानपदा असमाख्येया अर्थाः षड्जऋषभगान्धारधैवतनिषादपञ्चममध्यमास्तेषां विशेषः स्वावधारणनिबन्धनगान्धर्वशास्त्रप्रसिद्धपदप्रत्ययं तादृशपदप्रत्ययजनिततत्तत्स्वरविशेषप्रत्ययं च विना नावधारयितुं शक्यते। किं बहुना, गोपालाविपालादयोऽपि गवादिभिः पशुभिः सह व्यवहर्तुं व्यवहारनिबन्धनानि पदानि 'हे ह ह हा हो, कर छी' इत्यादीनि प्रकल्प्य गोमहिष्यादिरूपविशेषविषयं व्यवहारं गवां महिषीणां च प्रजननाद्यर्थं गवादिष्वारभन्ते। तद्यथा बलियामण्डले छाताग्रामादौ यो ममाभिजनस्तत्र गोपाला 'हे ह ह हा हो' इत्यनेन शब्देन प्रकल्पितेन आम्रेडितेन साण्डमेव वृषभमाह्वयन्ते, स एव चानेन शब्देनाहूत आयाति, न तु महिषः। 'कर छी' इति पदेन चाभ्यस्तेन महिषीणां प्रजननार्थं महिषमाह्वयन्ते, स एव चानेन शब्देनाहूत आयाति, न तु साण्डमहावर्करादिरिति।

तस्मात् समाख्येयेषु इन्द्रियग्राह्येषु परिच्छेदयोग्येष्वर्थेषु गवादिष्वसमाख्येयेषु विना शब्दं श्रवणेन्द्रियेण परिछेत्तुमशक्येषु षड्जादिष्वर्थेषु ये सामान्यशब्दा गवादयः षड्जादयश्च, ये च विशेषशब्दा धेन्वादयो वसन्तरागादयश्च, तेषु शब्देषु तेषामर्था बहुभेदभिन्ना अध्यारूढास्तेष्वर्थेषु ते शब्दा उत्कीर्णा इव = यथा शिलायां शालभञ्जिका उत्कीर्णाः; तथा च ते तेऽर्थाः सप्तदशाधिकशततमकारिकोक्तप्रकारेण शब्दशक्तिसंसृष्ट्या निरन्तरम् = अव्यवधानेन शब्दानुविद्धया, न तु सूच्या मण्यादिवद् व्यवधानेन शब्दानुविद्धया, अत एव शब्दात्मिकया = अनुपदोक्तरीत्या स्वस्मिन्नध्यारूढार्थाकारवत् शब्दात्मिकया बुद्ध्या प्राणभावापत्तिपुरस्सरं तत्तत्स्थानाभिघातोच्चारितेन तेन शब्देन द्वारीकृतेन प्रकाश्यते। यतो बुद्धिस्तत्तदर्थाकारवत् शब्दात्मिका, अतस्तया सोऽर्थः प्रकाश्यत इति स्थितिः।

किञ्च, यथा प्रदीपेन स्वस्मात् पृथग्भूतानां घटादीनां प्रकाशनम्, तथा न बुद्ध्या स्वस्वरूपात् पृथग्भूतानामर्थानां प्रकाशनम्, किन्तु बुद्ध्या प्रकाश्यमानस्तत्तदर्थो बुद्ध्या उपगृह्यते स्वतादात्म्यापादनरूपोपग्रहपुरस्सरं प्रकाश्यते। स च बुद्धेस्तत्तदर्थोपग्रहो न सन्दंशेन स्थाल्यादीनामिव, किन्तु बुद्ध्या तत्तदर्थः स्वीक्रियते, अर्थः स्वताद्रूप्योपगमेन एकतामुपनीयत इति। तदेवं सर्वा अप्यर्थविधा बुद्धितादात्म्यापन्नासु सूक्ष्मासु शब्दमात्रासु नितरां श्रिता इति सिद्धम्॥११९॥

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।**
**छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत ।। १२० ।।**

---

यथैवान्ये कार्यकारणभावमाचक्षाणाः कार्येषु कारणधर्मसमन्वयं दृष्ट्वा व्यावृत्तभेदं सूक्ष्ममसंवेद्यं सर्वविकारशक्त्यनुगतं प्रत्यस्तमितव्यक्तिरूपमणुग्रामं प्रधानशक्तिसमूहमविद्या-कारणं जन्मपरिणामासंसर्गं विवर्तं व्यवस्थापयन्ति, तथैवाम्नाये संहृतभोग्यभोक्तृशक्ते-र्वागात्मनो बहुधा कारणत्वमाम्नातम्—"स उ एवैष ऋङ्मयो यजुर्मयः साममयो वैराजः पुरुषः । पुरुषो वै लोकः । पुरुषो यज्ञः । तस्यैता लोकम्पृणास्तिस्र आहुतयस्ता एव त्र्यालिखिता वै त्रयो लोकाः" इति ।

---

न केवलमिन्द्रियाग्राह्यस्यार्थगतविशेषस्यावधारण एव शब्दः कारणम् , अपि त्वर्थोत्पत्ता-वपीत्याह—**शब्दस्य परिणामोऽयमिति ।**

अयं सर्वोऽपि वाच्यवाचकभेदभिन्नः संसारः शब्दस्य सूक्ष्मस्य वाक्तत्त्वस्य परिणाम इत्याम्नायविदो वेदविदो विदुर्विदन्ति, न तु वयं कल्पयामः । अतः प्रथमं सर्गादावेतद् विश्वं छन्दोभ्य एव, अत्र छन्दःपदेन सूक्ष्मं वाक्तत्त्वमुच्यते लक्षणया, नित्यत्वशब्दत्वरूपछन्दःसाधर्म्यात् , वेदस्या-नित्यत्वपक्षे तु छन्दसो वेदरूपस्य मन्त्ररूपस्य वा सूक्ष्मवाक्तत्त्वकार्यत्वेन कार्यकारणयोरभेदोपचाराद् वा । तच्च सूक्ष्मं वाक्तत्त्वं परमाणुरूपं नित्यमनेकञ्चेति मत्वा छन्दोभ्य इति बहुवचनम् । व्यवर्तत व्यजायत इत्यर्थः ।

अयं भावः—यथैवान्ये वैशेषिकादयः परमाणूनां चतुर्विधानां वायवीयतैजसाप्यपार्थिव-भेदभिन्नानां जगत्कारणत्वमाश्रित्यारम्भवादमाचक्षाणाः कार्येषु घटादिषु गन्धस्पर्शरूपादिकस्य कारणधर्मस्य समन्वयं दृष्ट्वा परस्परव्यावृत्तभेदं सजातीयं सूक्ष्ममतीन्द्रियत्वेनासंवेद्यं सर्वेषां स्वविकाराणामनुकूलाभिः शक्तिभिरनुगतं स्वस्मिन् स्वाभिव्यक्तिशक्तेः प्रत्यस्तमयेनाव्यक्तरूपं परमाणुसमूहं सर्वविकारोपादानं व्यवस्थापयन्ति ।

सांख्यास्तु विकारग्रामे सुखदुःखमोहसमन्वयं दृष्ट्वा तत्कारणं सुखदुःखमोहसमन्वितं प्रधानं संस्थापयन्ति ।

केचित् तु "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतिबलेनात्मनः शक्तिसमूहस्यैवाविद्यापद-व्यपदेश्यस्य त्रिगुणात्मकस्य त्रिगुणात्मकजगद्धारणत्वं वदन्ति ।

परे तु जगतो जन्मपरिणामाभ्यां वस्तुतोऽसंसृष्टमपि ब्रह्मैव मायया जगतो विवर्तोपादानरूपं कारणमिति मन्यन्ते । तथैवाम्नाये संहृतभोक्तृभोग्यभेदं तच्छक्तिरूपेणावस्थितं सूक्ष्मवागात्मक-मात्मतत्त्वमेव बहुधा भिन्नस्य विश्वस्य कारणत्वेनाम्नातम् ।

तथा च मन्त्रः—"स उ एवैष ऋङ्मयो यजुर्मयः साममयो वैराजः पुरुषः । पुरुषो वै लोकः । पुरुषो यज्ञः । तस्यैता लोकम्पृणास्तिस्र आहुतयस्ता एव त्र्यालिखिता वै त्रयो लोकाः" इति ।

अस्यार्थः—य एष वैराजः पुरुषो विराजः शरीरम् । अत्र पुरुषपदेन पुरुषाधिष्ठानत्वात् शरीरमुच्यते । यदेतद् विराट्पुरुषस्य विश्वात्मकं शरीरं दृश्यते, स उ एव, अत्रोकारः स्तोभ-

तथा—"एष वै छन्दस्यः साममयः प्रथमोऽक्षन् वैराजः पुरुषो योऽन्नमसृजत तस्मात् पशवोऽन्वजायन्त। पशुभ्यो वनस्पतयः, वनस्पतिभ्योऽग्निः। तस्मादाहुर्न दारुपात्रेण दुह्यादग्निर्वा एष दारुपात्रम्। तस्मान्न दारुपात्रेण दुह्यते" (इति)।

---

वदनर्थकः। स एव ऋङ्मयो यजुर्मयः साममयः। अत्र ऋग्यजुःसामपदैस्तदुपादानभूतं सूक्ष्मं वाक्तत्त्वमुच्यते, तस्यैव विश्वात्मकवैराजशरीरोपादानत्वसम्भवात्। अनेन भोक्ता उक्तः। पुरुषो वै लोकः। भूर्भुवःस्वरात्मको लोकः पुरुष एव भोग्यत्वादित्यर्थः, भोक्तृभोग्ययोरभेदोपचारात्। पुरुषो यज्ञः। यस्तु लोकसाधनं यज्ञः सोऽपि पुरुष एव, पुरुषसाध्यत्वात्, साध्यसाधनयोरभेदोपचारात्। तस्यैता लोकम्पृणास्तिस्र आहुतयस्ता एव त्र्यालिखिता वै त्रयो लोका इति। तस्य यज्ञस्य एतास्तिस्र आहुतयो या ऋग्यजुःसाममन्त्रैर्दीयन्ते। अत्र तिस्र इति त्रिविधा इत्यर्थः। ताश्चाहुतयस्तत्तल्लोकनिवासिलोकतर्पकत्वाद् लोकम्पृणाः। ता एव तिस्र इति आहुतय एव त्र्यालिखिताः, त्रिषु स्थानेषु आलिखिताः कल्पिताः, त्रयो लोका वै प्रसिद्धाः, वै इत्यव्ययस्य प्रसिद्धार्थकत्वात्। आहुतिफलरूपत्वाल्लोकानामाहुतिसाध्यत्वेनाहुतिरूपत्वम्।

तदेवं भोक्तृभोग्यभोगसाधनरूपस्य विश्वस्य वैराजपुरुषरूपत्वेन ऋग्यजुःसाममयत्वोक्त्या सूक्ष्मवाक्तत्त्वोपादानकत्वमनेन मन्त्रेणोक्तमिति।

तथाऽस्मिन्नर्थेऽन्योऽपि मन्त्रो भवति—"एष वै छन्दस्यः साममयः प्रथमोऽक्षन् वैराजः पुरुषो योऽन्नमसृजत। तस्मात् पशवोऽन्वजायन्त। पशुभ्यो वनस्पतयो वनस्पतिभ्योऽग्निः। तस्मादाहुर्न दारुपात्रेण दुह्यादग्निर्वा एष दारुपात्रम्। तस्मान्न दारुपात्रेण दुह्यते" इति।

अस्यार्थः—योऽन्नं पृथिवी व्रीहियवादिकं वा असृजत, एष एव छन्दस्यः छन्दोभ्यो नानाविधाभ्यो गीतिभ्यो हितः छन्दस्यः, साममयः सामस्वरूपः। अत्र सामपदेन सामोपादानभूतं सूक्ष्मं वाक्तत्त्वमुच्यते। प्रथमः सर्गादौ वर्तमानः, अक्षन् क्षतिरहितोऽविनाशी, यद्वा उक्षन् वृषभरूपः, "त्रिधा बद्धो वृषभो रोरवीति" इत्यादौ वाक्तत्त्वस्य वृषभत्वेन निरूपणात्। वैराजः पुरुषः, विश्वरूपतयोपवर्णितत्वात्। तस्माद् अन्नात् पशवो गवादयोऽनु पश्चाद् अजायन्त, पशुभ्यो मूत्रशकृदादिद्वारा वनस्पतयोऽन्वजायन्त। यद्वा पशुभ्य इति चतुर्थी, पश्वर्थं वनस्पतयोऽन्नादेवाजायन्तेत्यर्थः। वनस्पतिभ्यो वातेन प्रतिहन्यमानेभ्योऽग्निरजायतेत्यर्थः।

तस्मादाहुः—न दारुपात्रेण गोदोहनीकृतेन गां गुह्यात्, यतोऽग्निर्वा अग्निरेव, एष दारुपात्रमिति। अग्नौ दुग्धं दुग्धं दह्येतेति भावः। तस्मादद्यापि न दारुपात्रेण लोके दुह्यते गौरिति लोकप्रसिद्धिर्दर्शिता।

अत्र मन्त्रे वाक्तत्त्वस्य वैराजपुरुषरूपस्य अन्नपशुवनस्पतिस्रष्टृत्वमुक्तम्। इदञ्च सर्वसृष्ट्युपलक्षणं पूर्वमन्त्रसंवादादिति।

ऋग्वर्ण: खल्वपि—

इन्द्राच्छन्द: प्रथमं प्रास्यदन्नं तस्मादिमे नामरूपे विषूची ।
नाम प्राणाच्छन्दसो रूपमुत्पन्नमेकं छन्दो बहुधा चाकशीति ।।

तथा पुनराह—

वागेव विश्वा भुवनानि जज्ञे वाच इत्सर्वममृतं यच्च मर्त्यम् ।
अथेद्वाग् बुभुजे वागुवाच पुरुत्रा वाचो न पदं यच्च नाह ।।

---

ऋङ्मन्त्रवर्ण: खल्वपि अस्मिन्नर्थे भवति—

इन्द्राच्छन्द: प्रथमं प्रास्यदन्नं तस्मादिमे नामरूपे विषूची ।
नामप्राणाच्छन्दसो रूपमुत्पन्नमेकं छन्दो बहुधा चाकशीति ।। इति ।

अस्यार्थ:—इन्द्रात् परमैश्वर्यसम्पन्नाद् मायोपहितादात्मन: प्रथमं सर्गादावन्नं नामरूपात्मकं यत्स्थूलं भोग्यं तस्य यत्सूक्ष्मं स्वरूपं बुद्धौ इन्द्रियक्रमेण लयप्राप्त्याऽविभक्तम् , तदप्यन्नं तत्तादात्म्यापन्ना बुद्धिरत्रान्नम् , महत्तत्त्वरूपाऽविभक्तनामरूपात्मिका सैव मायोपहिते परमात्मनि अविभागं गता तदुपाधौ मायायामविभागप्राप्त्या सैव प्रथममिन्द्रात् परमेश्वरात् प्रास्यत् प्राक्षिप्यत् प्राविभज्यत, प्रविभक्ता समुत्पन्नाऽभूदित्यर्थ: ।

अत्र नामरूपात्मिका बुद्धिश्छन्द:, स्वस्मिन् निलीनयोरविभक्तयोर्नामरूपयोश्छान्दसत्वात् । तस्माद् बुद्धिरूपाच्छन्दस इमे विषूची विष्वग्गती पृथग्गती भिन्नमार्गे नामरूपे प्रविभक्ते अभूताम् ।

कथं नामरूपयोरुत्पत्तिमार्गौ भिन्नौ इत्यपेक्षायामाह—नाम प्राणात् तत्तत्स्थानेष्वभिहतात् प्राविभज्यत । विवक्षाजनितप्रयत्नवद् बुद्धितत्त्वं प्राणमाविष्टं भवति, प्रयत्नप्रेरितश्च प्राण ऊर्ध्वमायन् तत्तत्स्थानाभिघाते शब्दं जनयतीति प्रागुक्तं सुबहुश: । छन्दसस्तु बुद्धितत्त्वात् तत्तदिन्द्रियाद्द्रवक्रमेण रूपमर्थजातमुत्पन्नम् । एतदपि "शब्देष्वेवाश्रिता शक्ति:" इति कारिकाव्याख्यावसरे उपपादितम् । तदेवमेकमेव छन्दो बुद्धितत्त्वं वाच्यवाचकोभयरूपेण प्रविभागं प्राप्य बहुधा चाकशीति जगति प्रकाशत इति । तथाऽपरोऽपि मन्त्र: पुनराह—

वागेव विश्वा भुवनानि जज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम् ।
अथेद् वाग् बुभुजे वागुवाच पुरुत्रा वाचो न पदं यच्च नाह ।। इति ।

अस्यार्थ:—वागेव बुद्ध्यात्मना स्थितं सूक्ष्मं वाक्तत्त्वमेव विश्वा भुवनानि सर्वाणि भुवनानि वाच्यवाचकोभयात्मकानि जज्ञे जाता इन्द्रियाणि प्राणश्च द्वारीकृत्य, वाच इत् वाच एव, इदिति अवधारणेऽव्ययम् । यदमृतमाकल्पान्तं स्थायि वियदादिकं यच्च मर्त्यं मध्ये एव विनाशि कार्यजातम्, तज्जज्ञे । न केवलं वाग् मर्त्यामर्त्योभयरूपभोग्यात्मनैव जाता, किन्तु भोक्तृरूपेण वक्तृरूपेणापि जाता इत्याह—अथेद् वाग् बुभुजे । अथ वाग् इद् वागेव, बुभुजे आन्तरज्ञातृरूपेणावस्थिता बुभुजे भोक्त्री, वागेव पुरुत्रा बहुभि: प्रकारै:, पुरुशब्दाद् बह्वर्थात् त्राप्रत्यय: प्रकारे । उवाच वक्त्री प्राणं

पुराकल्पोऽप्याह—

विभज्य बहुधात्मानं स च्छन्दस्यः प्रजापतिः ।
छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ॥
साध्वी वाग्भूयसी येषु पुरुषेषु व्यवस्थिता ।
अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ॥
प्राजापत्यं महत्तेजस्तत्पात्रैरिव 'संवृतम् ।
शरीरभेदे विदुषां स्वां योनिमुपधावति ॥

द्वारीकृत्य शब्दानां बहुधा प्रयोक्त्री । यच्च न च नेत्यप्यर्थे निपातः । यत् किञ्चिदपि आह वक्ति जनः, तत्सर्वं शब्दाभिधेयमर्थजातं वाचो न परं न भिन्नम्, किन्तु वागात्मकमेव, वागुपादानकत्वादिति ।

पुराकल्पोऽप्याह—

विभज्य बहुधात्मानं स च्छन्दस्यः प्रजापतिः ।
छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ॥

अस्यार्थः—स च्छन्दस्यः । अत्राव्याकृतनामरूपात्मिका महत्तत्त्वरूपा बुद्धिश्छन्दःपदेन उच्यते, तस्यै हितश्छन्दस्यः । तद्धितत्वञ्च तस्या नामरूपाभ्यां व्याकरणात् । तथा च स श्रुत्यादिषु जगत्कर्तृत्वेन प्रसिद्धः छन्दस्यः छन्दसे हितः छन्द उपहितः छन्दस्तादात्म्यापन्नश्च प्रजापतिर्जगत्स्रष्टा छन्दोमयीभिर्व्याकृतरूपेण छन्दसस्तादृशबुद्धेर्विकारभूताभिरव्याकृतरूपेण छन्दसो मात्राभिरंशैर्वाच्यवाचकरूपैर्बहुधा आत्मानं सर्गकाले प्रविभज्य पुनः प्रलयकाले बहुधा व्यवस्थिताभिर्मात्राभिः सममेव तं छन्दस्यमात्मानं विवेशेति ।

साध्वी वाग् भूयसी येषु पुरुषेषु व्यवस्थिता ।
अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ॥

येषु पुरुषेषु वैयाकरणेषु भूयसी अपभ्रंशापेक्षया अवैयाकरणपुरुषगतसाधुशब्दापेक्षया वा भूयसी बहुतरा साध्वी वाक् साधुः शब्दः, व्यवस्थिता व्याकरणेन प्रकृतिप्रत्ययतत्तदर्थनियमनिश्चयरूपां व्यवस्थां प्राप्य स्थिता । तेषु वैयाकरणेषु छन्दस्तादात्म्यापन्नस्य प्रजापतेः पुण्यं साधुशब्दात्मकं पुण्यजनकं रूपमधिकं वर्तत इति योजना ।

प्राजापत्यं महत्तेजस्तत्पात्रैरिव संवृतम् ।
शरीरभेदे विदुषां स्वां योनिमुपधावति ॥

तद् वैयाकरणानां बुद्धिस्थं साधुशब्दात्मकं प्राजापत्यं छन्दस्तादात्म्यापन्नस्य प्रजापतेः सम्बन्धि, महद् अग्न्यादित्यादीनामपि प्रकाशानां सर्वेषां प्रकाशकत्वात् तेजः ज्योतीरूपम्, वैयाकरणानां विदुषां जीवनकाले पात्रैर्घटादिभिः प्रदीपतेज इव शरीरेण संवृतमास्ते । प्रयाणकाले विदुषां शरीरभेदे सति तु स्वां योनिमुपादानकारणम्, छन्दःस्थामव्याकृतशब्दरूपामुपधावति, तत्रैव लीयत इत्यर्थः ।

अयं भावः—यथा प्रदीपतेजः पात्रेण घटादिना संवृतं तत्पात्रभेदे बहिर्विसर्पति, यथा वैयाकरणानां शरीरभेदे तत्तेजः साधुशब्दाख्यं स्वोपादानकारणं वाक्तत्त्वाख्यमव्याकृतमनुप्रविशतीति ।

**इतिकर्त्तव्यता लोके सर्वा शब्दव्यपाश्रया ।**
**यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यते ।। १२१ ।।**

---

यदेतन्मण्डलं भास्वद् धाम चित्रस्य राधसः ।
तद्भावमभिसम्भूय विद्यायां प्रविलीयते ।।१२०।।

सदपि वाग्व्यवहारेणानुपगृहीतमर्थरूपमसता तुल्यम् । अत्यन्तासच्च प्रसिद्धं लोके

---

यदेतन्मण्डलं भास्वद् धाम चित्रस्य राधसः ।
तद्भावमभिसम्भूय विद्यायां प्रविलीयते ।।

यदेतत् प्रत्यक्षं भास्वद् देदीप्यमानं मण्डलं सूर्यमण्डलम्, चित्रस्य लौकिकाग्न्यादित्यादि-तेजोविलक्षणस्य, सर्वेषां लौकिकतेजसामग्न्यादित्यादीनामपि प्रकाशकस्य राधसस्त्रय्यात्मना परिणतस्य शब्दब्रह्मणो ज्योतीरूपस्य धाम आश्रयः, मरणोत्तरं तत्प्राप्येति शेषः । विद्यायां साधुशब्दज्ञानरूपायां विद्यायां सत्यां सूर्यमण्डलप्राप्त्या तद्भावं त्रयीरूपेण सूर्यमण्डलान्तरवस्थितशब्दब्रह्मभावं तद्रूपतामभिसम्भूय प्राप्य सूर्यमण्डलस्यापि प्रविलये महत्यात्मनि प्रविलीनो महत्तत्त्वस्यापि प्रविलये परस्मिन् वाक्तत्त्वे ब्रह्मणि प्रविलीयते तद्रूपतामधिगच्छतीत्यर्थः ।

अयं भावः—छन्दस्येन प्रजापतिनाऽव्याकृतं महत्तत्त्वान्तरवस्थितं शब्दतत्त्वं त्रयीरूपेणानन्तप्रभेदेन व्याकृत्य सूर्यमण्डले निहितम्, 'सैषा त्रयी विद्या तपति' इत्यादिश्रुतेः । वर्णितञ्च श्रुतिस्मृतीतिहासपुराणेषु सुबहुशः सूर्यस्य त्रयीमयत्वम् । एवञ्च वैयाकरणो मरणकाले साधुशब्दज्ञानवद्बुद्धितादात्म्यापन्नः शरीरान्तरवस्थितनाड्यन्तर्गतसूर्यरश्मीन् समाश्रित्योर्ध्वं प्रत्यवसृप्तः सूर्यमण्डलं प्राप्य तत्र त्रयीरूपेणाव-स्थितशब्दब्रह्मभावं प्राप्य प्रलये प्रागुक्तक्रमेण परब्रह्मरूपत्वमेत्य मुच्यत इति ।

तेदवं शब्दस्य विश्वोपादानत्वं व्याख्यातम् ।।१२०।।

तदेवं महत्तत्त्वात्मनाऽवस्थितस्य शब्दस्य विश्वोपादानत्वं त्रयीरूपेणावस्थितस्य तस्य विश्वनिमित्तत्वञ्च यथाक्रमम् 'शब्दस्य परिणामोऽयम्' इति, 'छन्दोभ्य एव प्रथमम्' इति वाक्याभ्यामाख्याय 'इदमेवं कर्त्तव्यम्' इति इतिकर्त्तव्यताज्ञानेऽपि शब्दस्यैव निमित्तत्वम्, शब्दं विना सर्वेषां कार्याणामिति-कर्त्तव्यताया ज्ञापनासम्भवादित्याह—**इतिकर्त्तव्यता लोक इत्यादि ।**

अयमर्थः—सर्वोऽपि लोके इतिकर्त्तव्यता कर्त्तव्यस्य प्रकारः । कर्त्तव्यस्य प्रकार इति विग्रहेऽव्ययी-भावो यथार्थे प्रकारे । तत इतिकर्त्तव्यशब्दात् स्वार्थे तल्प्रत्ययो देवताशब्द इव । अत्र विषयवाचकेन इतिकर्त्तव्यतापदेन तद्विषयिज्ञानं लक्ष्यते । सर्वमपि कर्त्तव्यप्रकारविषयकम् 'इदमेवं कर्त्तव्यमिति ज्ञानम्' शब्दव्यपाश्रया शब्दाश्रितम्, लोके शब्दप्रकल्पितेन वस्तुना व्यवहारः, न तु सतापि शब्दागोचरेणेति दर्शनादिति भावः ।

कथं तर्ह्यप्रवृत्तवाग्व्यवहाराणां बालानामितिकर्त्तव्यताज्ञानम्, तेऽपि हि स्ववयस्यैः सह किञ्चित्कुर्वन्त्येवेत्याशङ्क्याह—**यां पूर्वाहितसंस्कारो बालोऽपीति ।**

शशविषाणादि, प्राप्ताविर्भावतिरोभावं च गन्धर्वनगरादि वाचा समुत्थाप्यमानं मुख्यसत्तायुक्तमिव तेषु कार्येषु प्रत्यवभासते ।

समाविष्टवाचां च स्वजातिषु बालानामपि पूर्वशब्दावेशभावनासंस्काराधानात् तासु तास्वर्थक्रियास्वनाख्येयशब्दनिबन्धना प्रतिपत्तिरुत्पद्यते ॥१२१॥

---

पूर्वं पूर्वजन्मनि आहितो जनितः शब्दविषयकः संस्कारो यस्य यस्मिन् वा स तथाभूतः, प्राग्भवीयशब्दभावनासम्पन्नोऽप्रवृत्तव्यक्तवाग्व्यवहारो बालोऽपि स्ववयस्यबालशब्दादव्यक्तादेव क्रीडनादिकार्येतिकर्त्तव्यतां प्रतिपद्यत इति ।

अयं भावः—सदप्यर्थरूपं वाग्व्यवहारेण गोचरीकृतमसता शशविषाणादिना तुल्यं भवति; व्यवहारानुपयोगित्वस्योभयोरपि साम्यात् । वस्तुनः सत्त्वमसत्त्वं वा व्यवहाराङ्गम्, अपि तु शब्दकल्पितस्तदाकार एवेति नियमस्य लोकसिद्धत्वाच्च । लोकेऽत्यन्तासत्त्वेन प्रसिद्धञ्च शशविषाणादि आकाशे प्राप्ताविर्भावं तत्क्षण एव च प्राप्ततिरोभावञ्च गन्धर्वनगरादिशब्देन समुत्थाप्यमानं कल्पितं स्वा कार परिदधदेव मुख्यसत्तायुक्तं घटादिकमिव तेषु कार्येषु प्रत्यवभासते ।

तद्यथा—असतोऽपि शशविषाणस्य शशविषाणशब्दकल्पितं स्वाकारं परिदधत एव शशविषाणवदिति दृष्टान्तत्वेन व्यवहारो दृष्टान्तत्वोपगमश्च । गन्धर्वनगरञ्च स्ववाचकशब्दजन्यज्ञानगोचरीकृतमेव सद् आविर्भावं प्राप्नोति, अन्यथा तिरोभावम् । बलिकंसादयश्चातीतास्ते बहिरसन्तोऽपि शब्देन समुत्थापिता बन्धवधौ अनुभवन्ति, वलिं बन्धयति, कंसं घातयतीति ।

किञ्च, पूर्वजन्मनि शब्दपरिच्छेदी यः प्रत्ययः शब्दानुभवरूपः शब्दमनुप्रविष्टः शब्दतादात्म्यापन्नस्य प्रत्ययस्य यस्तत्रैव जन्मनि भावनारूपः सम्भवी सहजोऽभ्यासः, सोऽयं तत्रैव जन्मनि बालानामात्मसु संस्कारमाधत्त । स च संस्कारोऽस्मिन्नपि जन्मनि तेष्वनुवर्तते ।

तद्यथा—पूर्वजन्मसमुद्भूतमनुष्यजात्युचितचेष्टानुभवजनिताः संस्कारा अस्मिन्नपि जन्मन्यनुवर्तन्ते, यतोऽशिक्षितस्यापि बालस्य जातमात्रस्य मनुष्यजात्युचिताश्चेष्टाः स्वमातरमुद्दिश्य प्रवर्तन्ते । एवं पूर्वजन्मकृतकर्मार्जितसंस्काराश्च धर्माधर्मरूपा अस्मिन् जन्मनि भोगप्रदा अनुवर्तन्ते । तथा पूर्वजन्मार्जितशब्दसंस्कारद्वारा सूक्ष्मवाग्रूपानुषङ्गरूपशब्दसमावेशवतामव्यक्तवाचां बालानामपि स्वजातीयेषु बालेषु वयस्येषु तं तमव्यक्तशब्दमुच्चारयत्सु सत्सु क्रीडादिरूपतत्तदर्थक्रियाविषया वयस्यबालोच्चारितानाख्येयाऽव्यक्तशब्दजनिता प्रतीतिरुत्पद्यते ।

यतः स्पष्टवाचां व्यवहारकाले शब्दपूर्विकैवेतिकर्त्तव्यताप्रतिपत्तिर्दृष्टा, अतोऽव्यक्तवाचां बालानामपि क्रीडादिरूपव्यवहारकाले पूर्वजन्मसञ्जातशब्दसंस्कारारूढशब्दानुगमेनानाख्येयाऽव्यक्तवयस्यबालोच्चारितशब्दपूर्विकैव क्रीडादीतिकर्त्तव्यताप्रतिपत्तिरिति योऽसौ बालस्य क्रीडादीतिकर्त्तव्यताप्रतिपत्तिनिबन्धनभूतोऽव्यक्तः शब्दः पूर्वजन्मसमुद्भूतशब्दबुद्धिजनितसंस्कारानुगतोऽनुवर्तते, नासावाख्यातुं शक्यते बालेन । ये वाचमुच्चारयितुं समर्थास्ते शब्दार्थं प्रतिपद्यन्ते, तत्र निरूपयितुं शक्नुवन्ति, शब्दार्थोऽयमस्येति । बालानां तु स्वसजातीयेषु बालेष्वभिलापभेदाद् भिद्यन्तेऽभिलापाः, तांश्च न बाल आख्यातुं शक्नोति, इदमस्य वाच्यमिति । तदेवं शब्दादेवेतिकर्त्तव्यतारूपमर्थं प्रतिपद्यते बालोऽपीति सिद्धम् ॥१२१॥

**आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम् ।**
**स्थानानामभिघातश्च न विना शब्दभावनाम् ।। १२२ ।।**

अनादिश्चैषा शब्दभावना प्रतिपुरुषमवस्थितज्ञानबीजपरिग्रहा । न ह्येतस्याः कथञ्चित् पौरुषेयत्वं सम्भवति ।

तथा ह्यनुपदेशसाध्याः प्रतिभागम्या एव करणविन्यासादयः । को ह्येतान् पुरुषधर्मानन्यत्र शब्दात्मिकतायां कर्तुं प्रतिपादयितुं वा समर्थ इति ॥१२२॥

अशिक्षितशब्दोच्चारणस्य बालस्य सर्वप्रथमे शब्दोच्चारणेऽपि पूर्वजन्माभ्यस्तशब्दभावनैव कारणमित्याह—**आद्यः करणविन्यास इति ।**

अयमर्थः—अशिक्षितशब्दोच्चारणस्य बालस्य प्रथमतो यः शब्दोच्चारणे करणानां विनियोग; स आद्यः करणविन्यासः, येनाकृताभ्यास एव तानि तानि करणानि तत्र तत्र वर्णे प्रथमतो नियुङ्क्ते । अथवान्तःकरणस्य प्रथमतो विन्यासस्तत्तद्वर्णोच्चारणानुकूलत्वापादनरूपं तत्तत्प्रयत्नोन्मुखत्वापादनम्, येन पूर्वमकृतशब्दोच्चारणोऽपि बालस्तत्तच्छब्दोच्चारणानुकूलं तं तं विशिष्टं प्रयत्नमारभते । प्राणस्योर्ध्वं समीरणं तत्तद्वर्णोच्चारणार्थं प्रयत्नविशेषैः प्राणस्योर्ध्वं समीरणं प्रेरणा; स्थानानामभिघातश्च ताल्वादि-तत्तत्स्थानानां तत्तत्करणैः प्राणैश्चाभिघातोऽपि तत्तच्छब्दानुकूल; शब्दभावनां विना पूर्वजन्माभ्यस्तशब्दो-च्चारणेतिकर्त्तव्यतानुभवसञ्जातसंस्कारस्य जीवनादृष्टविशेषवशेन यः समुद्बोधस्तज्जनितस्मृतिं विना न सम्भवतीति ।

इमां कारिकां वाचस्पतिमिश्रा न्यायकणिकायामित्थं व्याचख्युः—"जातमात्रः खल्वयं बालकः पित्रा मुखहुते मधुसर्पिषी जिह्वया लेढि । सोऽयमाद्यः करणविन्यासः । प्राणांश्चोर्ध्वं समीरयति यच्छ्वसितीत्युच्यते । अपि चोदीरितेन वायुना हृदयादीनि स्थानान्यभिहन्ति, यतः शब्दभेद आविरस्ति । तदेत्सर्वं प्राग्भवीयशब्दभावनाविजृम्भितम् ।

अत्र प्रयोगः—बालानामेवंविधा चेष्टा कर्त्तव्यताऽवगतिपूर्विका, स्वतन्त्रचेतनप्रवृत्तित्वात्; या या स्वतन्त्रचेतनप्रवृत्तिः सा सा कर्त्तव्यताऽवगतिपूर्विका, यथाऽस्मदादीनाम्, तथा विवादाध्यासिता कर्त्तव्य-तावगतिः शब्दयोनिः, कर्त्तव्यताकारत्वात्, यो य एवमाकारः स सर्वः शब्दयोनिः, यथास्मदादीनाम् । स च शब्दः साक्षादनुपलभ्यमानो भावनामुखेनाधिकरणसिद्धान्तन्यायेन करणभावमापद्यते । भावना च यथाकार्यदर्शनोन्नेया यावत्कार्यदर्शनं व्यवस्थाप्यत इति न जात्यन्धवधिरादीनां जन्मान्तरानुभूतरूपादि-व्याख्यानप्रसङ्गः" इति ।

अयं भावः—बालानां सर्वप्रथमे शब्दोच्चारणे प्रवृत्तानामाद्यकरणविन्यासादिहेतुः शब्दभावना प्रतिबालमाद्यकरणविन्यासादिरूपस्वकार्यानुमेया पूर्वजन्मानुभूतशब्दोच्चारणेतिकर्त्तव्यतास्मृत्युपा-दानबुद्ध्या स्वस्मिन् तादृशस्मृतिबीजरूपेण परिगृहीता प्रतिपुरुषमवस्थिता । सा चैषाऽनादिः, संसारानादित्वेन जायमानादित्वात् । तादृशस्मृतिबीजरूपाणां शब्दभावनानाञ्च जीवनादृष्टविशेषपरिपाकेण कालकृतेन समुद्बोधरूपे वृत्तिलाभे तु शब्दोच्चारणानुकूलप्रयत्नरूपकार्यनिष्पत्तिद्वारा शब्दोच्चारणरूप-

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।। १२३ ।।**

यथास्य संहतरूपा शब्दभावना तथा ज्ञेयेष्वर्थेषूत्पन्नेनाप्यविकल्पकेन कार्यं न क्रियते ।

कार्यनिष्पत्तिर्नान्यथा । अस्याश्चाशिक्षितबालसमवेतायाः शब्दभावनायाः कथञ्चिदपि इदम्प्रथमतया प्रौढपुरुषकर्तृकबालकर्मकशिक्षणरूपपुरुषप्रयत्नसाध्यत्वरूपं पौरुषेयत्वं न सम्भवति ।

तथा हि— यद्यपि 'इदमिदञ्च स्थानं व्यापारय' इति उपदिश्यते बालानां मात्रुपमातृस्वसादिभिः, तथापि तेऽप्युपदेशशब्दा बालस्य प्राक्तनशब्दभावनारूपसंस्कारात्मकप्रतिभायाः समुद्बोधरूपमुद्घाटनमेव कुर्वन्ति, न तु स्वार्थावबोधम् । यतस्तेऽप्युपदेशशब्दा अगृहीतशक्तिकत्वाद् बालस्याप्रसिद्धसम्बन्धा एव, अतोऽसावुपदेशः पूर्वशब्दभावनारूपबीजस्य समुद्बोधरूपं वृत्तिलाभमेव करोति नान्यदिति मन्तव्यम् । अतस्ते बालस्याद्यकरणविन्यासादयः पूर्वशब्दभावनारूपप्रतिभासाध्या एव, न तु मात्राद्युपदेशसाध्याः । को ह्येतानाद्यकरणविन्यासादीन् बालपुरुषधर्मान् कार्यकारणयोरभेदेन स्वहेतुपूर्वशब्दभावनात्मकताया अन्यत्र कर्तुम् = पृथक्त्वमापादयितुम्, अन्यत्र प्रतिपादयितुं = भेदेन प्रतिपादयितुं वा समर्थ इति ।।१२२।।

यतः शब्दभावनारूपस्यार्थसम्भेदनबीजस्य कालादृष्टादिवशेन समुद्बोधरूपवृत्तिलाभे सति तदर्थसंवेदनं स्मृतिरूपमनुभवरूपं वोपजायते, अतः शब्दः प्रकृतिः, अर्थज्ञानं च विकृतिः । किञ्च, बुद्धौ प्राग्वृत्तादर्थज्ञानादयं गौरिति शब्दो भवतीत्यतो ज्ञानं प्रकृतिः, शब्दो विकृतिरिति । यद्वा शब्दोत्पत्तेः प्राग् वक्तृबुद्धौ अभिनिर्वृत्तं शब्दभावनानुविद्धं ज्ञानं शब्दोत्पादनक्रमेण श्रोतृबुद्धिस्थस्य शब्दभावनानुविद्धस्य ज्ञानस्य कारणम्, ततश्च तस्माद् वक्तृबुद्धिस्थाद् ज्ञानादपृथग्भूता शब्दभावनाऽपि श्रोतृबुद्धिस्थस्य ज्ञानस्य कारणम्, यतश्च कार्येऽपि श्रोतृबुद्धिस्थे ज्ञाने शब्दभावनाऽस्तीति शब्दभावनाविशिष्टस्य श्रोतृबुद्धिस्थस्य ज्ञानस्य कार्यत्वेन शब्दभावनापि पूर्वज्ञानस्य कार्यमित्येवं सर्वस्यापि ज्ञानस्य शब्दानुवेधं दर्शयितुमाह—**न सोऽस्ति प्रत्यय इति ।**

अयमर्थः—स कश्चनोपदेष्टृबुद्धिस्थः प्रतिपत्तृबुद्धिस्थो वा प्रत्ययो लोके नास्ति, यः शब्दानुगमादृते शब्दानुवेधशून्यः । अत्रार्थेऽनुभवमेव प्रमाणत्वेनोपन्यस्यति उत्तरार्द्धेन—**अनुविद्धमिवेति** । यतः सर्वं ज्ञानमुपदेष्टुः प्रतिपत्तुर्वा एतत्पद्यावतरणोक्तदिशा शब्देनानुविद्धमिव भासते तादात्म्यसम्बन्धेन तन्मूलकेन वाच्यतासम्बन्धेन वार्थे विशेषणीभूतेन शब्देनानुविद्धमिव सर्वं ज्ञानं स्वग्राहकेण ज्ञानेनानुव्यवसायेन साक्षिणा वा निमित्तेन भासत इति । अत्रेवशब्दप्रयोगो वस्तुतः शब्दार्थयोस्तादात्म्यस्याभावेन तन्मूलक-वाच्यतासम्बन्धस्य चाप्यभावेनेति ।

अयं भावः—वक्तुः श्रोतुरपि च ज्ञानं त्रिविधम् । एकं बहिरत्यन्तासदर्थविषयकं ज्ञानं वन्ध्यापुत्रादिविषयकं विकल्पपदव्यपदेश्यम् । अत्र बौद्धोऽर्थोऽस्ति बुद्ध्या प्रकल्पिताकारो बुद्धौ प्रतिभासमानो बुद्धेः परिणामविशेषः । अपरञ्च कदाचिदसदर्थविषयकं भूतभविष्यदर्थग्राही । अनयोश्च

तद्यथा त्वरितं गच्छतस्तृणलोष्टादिसंस्पर्शात् सत्यपि ज्ञाने काचिदेव सा ज्ञानावस्था, यस्यामभिमुखीभूतशब्दभावनाबीजायामाविर्भूतास्वर्थोपग्राहिणामाख्येयरूपाणामनाख्येयरूपाणां च शब्दानां प्रत्यर्थनियतासु शक्तिषु शब्दानुविद्धेन शक्त्यनुपातिना ज्ञानेनाक्रियमाण उपगृह्यमाणो वस्त्वात्मा ज्ञानानुगतो व्यक्तरूपप्रत्यवभासो ज्ञायत इत्यभिधीयते । स च निमित्तान्तरादाविर्भवत्सु श्रुतिबीजेषु स्मृतिहेतुर्भवति ।

तथैकेषामाचार्याणां सुप्तस्यापि जाग्रद्वृत्त्या सदृशो ज्ञानवृत्तिप्रबन्धः । केवलं तु शब्दभावनाबीजानि तदा सूक्ष्मां वृत्तिं प्रतिलभन्ते । तस्मात् तामसीं चेति तामवस्थामाहुः । तदेतत् संज्ञानं शब्दप्रकृतिविकारभावेनाविर्भावतिरोभावावजस्रं प्रत्यनुभवति ॥१२३॥

---

द्विविधयोरपि ज्ञानयोर्नार्थेन शब्दस्य तादात्म्यं तन्मूलकं वाच्यवाचकभावादिरूपं वा सम्बन्धान्तरं सम्भवति, बाह्यार्थस्यासत्त्वात् । बौद्धार्थस्य च बुद्धिपरिणामरूपस्य बुद्ध्या सहैव तादात्म्यसम्भवात्, शब्द-परिणामत्वाभावेन शब्देन सह तादात्म्यासम्भवात् । इवशब्दप्रयोगस्तु शब्दभावनानुविद्धाया बुद्धेः परिणाम-त्वेन शब्दपरिणामत्वभ्रान्त्येति । बहिर्विद्यमानार्थविषयकञ्च तृतीयं ज्ञानम् । अत्रापि च न व्यधिकरणयोः शब्दार्थयोस्तादात्म्यस्य तन्मूलकस्य शब्दान्तरस्य च सम्भव इति । परमगभीराशयस्तु यदा प्रतिपत्तुः श्रोतुर्वा ज्ञाने शब्दभावना संहतरूपा तदर्थवाचकशब्दापरिज्ञानाद् व्यक्तशब्दाननुविद्धं ज्ञानम्, तदा ज्ञेयेष्वर्थेषूत्पन्नेनापि शब्दाविषयकत्वेन धर्मविशेषाविषयकत्वेन ज्ञानेन किञ्चिदपि व्यवहाररूपं कार्यं न क्रियते ।

यद्यथा त्वरितं पथि गच्छतस्तृणलोष्टादिसंस्पर्शात् सत्यपि तदर्थविषयकेऽविकल्पे ज्ञाने न तेन ज्ञानेन किञ्चित् कार्यं क्रियते । सा तु काचिदेवान्या प्रयोक्तृबुद्धिस्था ज्ञानावस्था, यस्यां शब्दभावनारूपस्य ज्ञानबीजस्य कालादृष्टादिसहकृतया विवक्षया समुद्बोधरूपे आभिमुख्ये सत्यर्थप्रतिपादकानां पर्यायान्त-रेणाख्येयरूपाणां गवादिशब्दानाम्, पर्यायान्तरेणानाख्येयार्थप्रतिपादकानाञ्च षड्जादिशब्दानां प्रत्यर्थ-बोधनियतासु प्रतिनियतार्थपरिच्छेदोपयोगिनीष्वर्थनिरूपणयोग्यतारूपासु ज्ञानस्य यथार्थनिरूपकत्वे हेतुभूतासु शब्दस्य शक्तिष्वाविर्भूतासु सतीषु स्वभावतः सूक्ष्मशब्दोपरक्तेन स्वानुकूलां शब्दशक्तिमनुपतता तामलङ्घयता च श्रोतृबुद्धिस्थेन ज्ञानेन आक्रियमाणः = विशिष्टेन आकारेण शब्दानुविद्धेन स्पष्टेनोपलभ्य-मानो ज्ञानानुगतः = अयं गौरयमश्व इत्याकारकाभिलापजन्यप्रत्यवमर्शज्ञानेनापि गोचरीकृतः, इदं तदिति व्यपदेश्यरूपतया व्यक्तनामरूपप्रत्यवभासो वस्त्वात्मा ज्ञायत इत्येवं व्यवहारस्य विषयो भवति ।

तदेवं शब्दजन्यो व्यक्तरूपप्रत्यवभासः पूर्वकालिक उत्तरस्मिन् काल आविर्भवत्सु शब्दकारणेषु स्थानकरणाभिघातादिषु सदृशग्रहणसम्बन्धिग्रहणादिरूपनिमित्तबलात् पदाज्जायमानस्य पदार्थस्मरणस्य हेतुर्भवतीति ।

एकेषां त्वाचार्याणां मते सुप्तस्यापि पुरुषस्य जाग्रत्कालिक्या ज्ञानरूपया वृत्त्या सदृशो ज्ञानरूपाया वृत्तेरविच्छेदलक्षणः प्रबन्धः । जाग्रत इव सुप्तस्यापि पुरुषस्य न वृत्तिरूपज्ञानोपरम इति

**वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ।। १२४ ।।**

यथा प्रकाशकत्वमग्नेः स्वरूपं चैतन्यं वान्तर्यामिणः, तथा ज्ञानमपि सर्वं वाग्रूपमात्रानुगतम् । याप्यसञ्चेतितावस्था तस्यामपि सूक्ष्मो वाग्धर्मानुगमोऽभ्यावर्तते ।

योऽपि प्रथमोपनिपाती बाह्येष्वर्थेषु प्रकाशः स निमित्तानामपरिग्रहेण वस्तुस्वरूपमात्रमिदं तदित्यव्यपदेश्यया वृत्त्या प्रत्यवभासयति ।

स्मृतिकालेऽपि च तादृशानामुपलब्धिबीजानामाभिमुख्ये स्मर्तव्येषु श्लोकादिषु प्रकाशानुगममात्ररूपमिव बुद्धौ विपरिवर्तते । कोऽप्यसावनुवाकः श्लोको वा योऽयं मया श्रुतिमात्रेण प्रक्रान्त इति ।

---

यावत् । केवलं तु तदानीं तात्कालिके ज्ञाने शब्दभावनारूपाणि व्यक्तशब्दबीजानि सूक्ष्मां वृत्तिं प्रतिलभन्ते । सा च वृत्तिस्तदानीमविद्यायाः,त्वन्तःकरणस्य, तदा तस्याविद्यायां प्रविलयात् । अत एव तामवस्थां सुषुप्त्याख्यां तामसीमाहुः, तमसोऽविद्याया विकारत्वात् । तदेवमेतत् शब्दानुविद्धं संज्ञानपदव्यपदेश्यं ज्ञानं प्रागेतत्कारिकावतरणावसरे उक्तया रीत्या शब्दस्य प्रकृतित्वं विकृतित्वं चोपगच्छद् आविर्भावतिरोभावावजस्रं प्रत्यनुभवतीति ॥१२३॥

सर्वस्मिन् व्यवहारोपयोगिनो ज्ञाने शब्दाकारानुगमोऽस्तीति प्रागुक्तमेवार्थं द्रढयन्नाह— **वाग्रूपता चेदिति ।**

अयमर्थः—अवबोधस्य ज्ञानस्य शाश्वती नित्या, सहजा = स्वाभाविकी वाग्रूपता सूक्ष्मवाक्तत्त्वोपरक्तता, चेद् यदि, उत्क्रामेद् अपगच्छेत्, तदा प्रकाशो ज्ञानम्, न प्रकाशेत, प्रकाशकाभावात् । ज्ञानं ह्यन्तरवस्थितं परस्याग्राह्यं शब्देनाभिलप्यते, ज्ञानस्य शब्दानुविद्धत्वेन शब्दज्ञानयोस्तादात्म्यात् । असति तु ज्ञानस्य शब्दरूपत्वे ज्ञानं परस्य न प्रकाशेत, परबुद्धिगतस्य प्रकाशकाभावात् । हि = यतः, सा ज्ञानस्य वाग्रपूता प्रत्यवमर्शिनी शब्देन ज्ञानस्याभिलाप एव प्रत्यवमर्शोऽत्र, न त्वनुव्यवसायरूपः, वाचस्तत्त्वासम्भवात् । तस्य प्रत्यवमर्शस्य हेतुर्यतः शब्दानुगममन्तरेण न प्रत्यवमर्श इति ।

अयं भावः—यथा प्रकाशकत्वमग्नेः स्वरूपम्, यथा वा चैतन्यमन्तर्यामिणः परमेश्वरस्य स्वरूपम्, तथा सकलमपि ज्ञानं सूक्ष्मया वाग्रूपतया स्थूलशब्दस्योपादानभूतया स्वरूपभूतयाऽनुगतम् । यापि च सुषुप्तिरूपाऽसञ्चेतितावस्था, तस्यामपि च सुखविषयके मोहविषयके चाविद्यावृत्तिरूपे ज्ञाने सूक्ष्मो वाग्धर्मानुगमोऽभ्यावर्तते । अन्यथा सौषुप्तज्ञाने शब्दानुवेधाभावे तत्समानविषये तज्जन्यसंस्कारे तज्जन्ये स्मरणे च तत्समानविषये शब्दानुवेधाभावे 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति स्मरणस्याभिलापो नोपपद्येत । अतस्तत्रापि सूक्ष्माऽलब्धवृत्तिः शब्दभावनाज्ञानेऽनुवर्तत एवेति मन्तव्यम् ।

योऽपि च बाह्येष्वर्थेषु प्रथमोपनिपाती प्रकाशः = निर्विकल्पकपदव्यदेश्यं प्रथमं प्रत्यक्षम्, तत्रापि सूक्ष्मो वाग्धर्मानुगमोऽभ्यावर्तते । यतः स प्रकाशो विशेषधर्मवत्तया वस्तुस्वरूपस्य प्रत्यव-

वाग्रूपतायां चासत्यामुत्पन्नोऽपि प्रकाशः पररूपमनङ्गीकुर्वन् प्रकाशनक्रियासाधनरूपतायां न व्यवतिष्ठते। भिन्नरूपाणां चानुपकारिणात्मान्तरात्मनामितरेतरस्य वस्तुमात्राज्ञाने प्रत्यवभासमाने यदुत्तरकालमनुसन्धानं प्रत्यवमर्श एकार्थकारित्वविभागेन शक्तिसंसर्गयोगोपग्रहः, तद् वाग्रूपतायां बद्धम्।

---

भासेन निमित्तभूतानां विशेषधर्माणामपरिग्रहेण = अगोचरीकरणेन वस्तुस्वरूपमात्रम् , इदं तदिति सर्वनामपदव्यपदेश्यया 'घटः, पटः, शुक्लः, नीलः' इति, ईदृशानुपूर्वीको वेति विशेषतोऽव्यपदेश्यया वृत्त्या प्रत्यवभासयतीति तत्रापीदं तदिति सर्वनामशब्दानुवेधोऽस्त्येव।

किञ्च, विशेषार्थवाचकशब्दानुवेधोऽप्यव्यक्तस्तत्रास्ति, अन्यथा तस्यैव वस्तुनो द्वितीयग्रहणे न विशेषशब्दानुवेधोऽनुभूयेतेति। तद्यथा केनचित् श्लोकोऽनुवाको वा पठितः, स च केनचित् प्रथमं गृहीतः, तस्य पुरुषस्य तच्छ्लोकानुवाकस्मृतिकाले तादृशानामिदं तदित्युपलब्धिजनितसंस्काररूपस्मृतिबीजानां कालादृष्टादिवशेन समुद्बोधरूपे आभिमुख्ये सति स्मर्तव्यश्लोकाविषयकपूर्वसंवेदनमात्रविषयकमेव स्मरणम् , आरूपामिव = चित्रामिव बुद्धौ विपरिवर्तते, न तु विषयरूपस्य श्लोकस्यानुवाकस्य वा तदा स्फुटं स्मरणम्। अयं हि तदा स्मरणाकारः—कोऽप्यसावनुवाकः श्लोको वा यो मया श्रवणमात्रेण प्रथमं गृहीत इति। अनेन च स्मरणाभिलापेन ज्ञायतेऽस्ति श्लोकस्यानुवाकस्य वा प्रथमग्रहणेऽप्यव्यक्तः शब्दानुवेध इति।

असत्यां हि तत्र सामान्यरूपेणापि वाग्रूपतायामुत्पन्नोऽपि प्रथमः प्रकाशः स्वरूपं विहाय पररूपम् = ज्ञानभिन्नस्य शब्दस्य रूपम् अनङ्गीकुर्वन् ज्ञानस्य परागोचरत्वाच्छब्दरूपस्य चापरिग्रहणात् परं प्रति स्वरूपप्रकाशनक्रियाकर्मतामर्थप्रकाशनक्रियाकरणतां च न प्रतिपद्येत।

किञ्च, भिन्नात्मनां भिन्नधर्मत्वेन परस्परव्यावृत्तरूपाणां चात एव वाक्यार्थस्योपकारकत्वेऽपीतरेलरस्यानुपकारिणां पदार्थानां यद्यपि विभक्त्या परस्परोपकारिता द्योत्यते।

तद्यथा—द्वितीयाविभक्त्या स्वप्रकृत्यर्थस्योपकार्यत्वम् , करणतृतीयया च स्वप्रकृत्यर्थस्योपकारकत्वम् , तथाप्युपग्राह्याणां घटादीनामुपग्राहकाणाञ्च सौरालोकादीनाञ्च यो युगपत् परस्परं सन्निकर्षरूपोऽनुग्रहस्तदभावेनेतरेतरस्यानुपकारिणामित्युच्यते, पदेभ्यो वस्तुमात्राज्ञाने = धर्मविशिष्टस्य वस्तुनो विशेष्यांशो वस्तुमात्रा तस्या ज्ञाने, प्रत्यवभासमानं यद्वस्तु निर्धर्मकं तद्वस्तुविषयको यस्तत्प्रत्यवभासोत्तरकालिकः प्रत्यवमर्शः, पदेभ्योऽनुभूतानामर्थानामिदं तदिति व्यक्तवाग्रूपानुविद्धेन प्रत्ययेन आकारनिरूपणरूपः, यच्च तदुत्तरकालिकं वाक्यार्थबोधे सति तस्यैव वस्तुनो व्यक्तवाग्रूपानुविद्धेन प्रत्ययेन ऐक्यप्रत्यभिज्ञारूपमनुसन्धानम्।

यद्वा पदेभ्योऽवगतानामर्थानां परस्परव्यावृत्ततयाऽवधारणमनुसन्धानम्। यच्च प्रयोज्यप्रयोजकवृद्धव्यवहारदर्शनेन पदार्थविभागराहित्येनैकस्मिन् वाक्यार्थे शक्तिसंसर्गयोगोपग्रहः = शक्तिरूपस्य शब्दार्थयोः संसर्गस्य प्रयोज्यो यो योगो वाच्यवाचकभावाख्यः सम्बन्धः।

यद्वा शक्तिरूपस्य सम्बन्धस्य मूलभूतो यः शब्दार्थयोस्तादात्म्यरूपः सम्बन्धः, तस्योपग्रहोऽनुमानरूपं ज्ञानम् , यद्वा देवदत्तादिगतकर्तृकर्मादिशक्तीनां परस्परानुप्रवेशरूपेण संसर्गेण सह यः

सा ह्यनुसन्दधाना प्रत्यवमृशन्ती च सर्वविशेषणविशिष्टेऽप्यर्थक्रियाकारिणि प्रत्यये शक्त्यपोद्धारकल्पनया भेदसंसर्गमात्रां न विजहाति ॥१२४॥

क्रियान्तरस्य योगो घटकत्वाख्यः सम्बन्धस्तस्योपग्रहः क्रियान्तरस्य तत्स्वीकारः। क्रियाघटितो हि कर्तृकर्मादीनां परस्परं सम्बन्धः।

यद्वा शक्तेर्यः शब्देऽर्थे च संसर्गः, स एव योगस्तस्योपग्रहोऽनुमानम्। नानाविशेषणपदोपस्थापितनानाविशेषणपदार्थविशिष्टैकार्थविषयके वाक्यार्थबोधे जाते प्रतिपत्तृणामेकार्थकारित्वम्, तच्चैकार्थविषया या क्रिया इतिकर्तव्यतारूपा तत्कारित्वम्। एतत् सर्वं प्रत्ययस्य वाग्रूपतायां निबद्धम्।

तत्र प्रत्यवमर्शोऽनुसन्धानञ्च व्यक्तवाग्रूपानुविद्धमनुभवसिद्धमिति तयोर्मूलभूतयोः प्रत्यययोरप्यव्यक्तवाग्रूपानुविद्धत्वम्, व्यक्तवाग्रूपानुविद्धत्वं वा आवश्यकमिति न तत्र प्रमाणविषयं कुतुकम्। शक्तिसंसर्गयोगोपग्रहोऽपि व्यक्तवाग्रूपानुविद्ध इत्यत्रार्थे स्फुटं स्वानुभवमपलपितुं न कोऽपि प्रभुः। एकार्थकारित्वमप्यर्थक्रियाया ज्ञानपूर्वकत्वाद् व्यक्तवाग्रूपानुविद्धज्ञानपूर्वकत्वमेवेति। एवञ्चैषां चतुर्णां जन्मक्रमः। पूर्वं पदेभ्योऽर्थावसायः, ततस्तेषामेवार्थानामिदं तदिति वाग्रूपानुविद्धेन, प्रत्ययेनाकारनिरूपणारूपः प्रत्यवमर्शः, ततस्तेषामेवार्थानां परस्परावच्छेदेनावधारणरूपमनुसन्धानम्, पदार्थविभागाभावेनैकस्मिन् वाक्यार्थे यः शक्तिसंसर्गयोगोपग्रहो बालस्य, सोऽपि व्यक्तवाग्रूपानुविद्ध एवेत्यत्राप्यनुभव एव प्रमाणम्।

यच्च तदुत्तरं वाक्यार्थबोधे जात एकार्थकारित्वं तस्यापि व्यक्तवाग्रूपानुविद्धज्ञानपूर्वकत्वाद् वाग्रूपतानिबद्धत्वं सिद्ध्यत्येव, यतः सा वाग्रूपता पदार्थान् प्रत्यवमृशन्त्यनुसन्दधाना च=पदार्थानां प्रत्यवमर्शमनुसन्धानञ्च जनयन्ती, सर्वविशेषणविशिष्टार्थविषयके, यद्वा सर्वाणि यानि विशेषणानि कर्त्रादिकारकशक्तिरूपाणि तद्विशिष्टा या एका क्रिया तद्रूपार्थविषयके, यद्वा सर्वाणि यानि विशेषणानि गुणजात्यादिरूपाणि तद्विशिष्टो यः पदार्थस्तद्विषयके, लोके तादृशवाक्यार्थकर्मक्रियायाः कारणीभूते यतो वाक्यार्थप्रत्ययादेव लोको वाक्यार्थस्य क्रियायां प्रवर्तते। एकस्मिन् वाक्यार्थविषयके प्रत्यये सत्यपि तत्र वाक्यात् पदानामपोद्धारकल्पनया, पदेषु च पदार्थबोधानुकूलशक्त्यपोद्धारकल्पनयैकस्मिन् वाक्ये पदभेदस्य, एकस्मिन् वाक्यार्थे पदार्थभेदस्य, एकस्यां वाक्यार्थबोधानुकूलशक्तौ पदार्थबोधानुकूलशक्तिभेदस्य संसर्गमात्राम्=संसर्गस्वरूपम्, सा वाग्रूपतां न विजहाति; किन्तु तया भेदसंसर्गमात्रया सहैकस्मिन् वाक्यार्थप्रत्यये प्रत्यवभासते।

ननु वाक्यस्य वाक्यार्थस्य चाभिन्नत्वात् कथं तत्र पदप्रत्ययानुविद्धः पदादवसितार्थस्येदं तदिति व्यपदेशपुरःसरमाकारनिरूपणारूपः प्रत्यवमर्शः, कथञ्च तादृशप्रत्ययावमर्शपूर्वकं पदप्रत्ययानुविद्धमनुसन्धानमिति चेत्, न, समुदायरूपस्य वाक्यार्थस्य युगपत् कर्तुमशक्यत्वात्, पदार्थक्रियायां प्रवृत्तये पदार्थप्रत्ययस्यावश्यकत्वात्, पदार्थप्रत्ययार्थञ्च पदप्रत्ययस्यावश्यकत्वात्, तत्तद्वर्णानुपूर्वीरूपपदप्रतिपत्त्यर्थं वाक्यात् पदानि, वाक्यार्थाच्च पदार्थान्, वाक्यार्थशक्तेश्च पदार्थबोधानुकूलशक्तिरपोद्धरति। तेनाभिन्नोऽपि वाक्यार्थो व्यवस्थित एवेति वाक्ये पदप्रत्ययः, वाक्यार्थे च पदप्रत्ययानुविद्धः पदार्थप्रत्ययः; वाक्यार्थशक्तिप्रत्यये च पदार्थशक्तिभेदप्रत्यय उपपद्यते, सर्वेषु चैषु प्रत्ययेष्वेवं पदवाक्यरूपवाग्रूपानुविद्धत्वमप्युपपन्नमिति ॥१२४॥

**सा सर्वविद्याशिल्पानां कलानां चोपबन्धनी ।**
**तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते ।। १२५ ।।**

विद्याशिल्पकलादिभिर्लौकिकेषु वैदिकेषु चार्थेषु मनुष्याणां प्रायेण व्यवहारः प्रतिबद्धः ।

मनुष्याधीनाश्चेतरस्य भूतग्रामस्य स्थावरजङ्गमस्य प्रवृत्तयः । विद्यादयश्च वाग्रूपायां बुद्धौ निबद्धाः ।

घटादीनां चाभिनिष्पादने प्रयोज्यप्रयोजकानामुपदेशसमीहादि सर्वं वाग्रूपतानुसारेण प्रकल्पते ॥१२५॥

सर्वस्य प्रत्ययस्य वाग्रूपानुविद्धत्वं प्रकारान्तरेण साधयितुमाह—**सा सर्वविद्या-शिल्पानामिति ।**

अयमर्थः—सा सर्वस्य पदार्थप्रत्ययस्य वाग्रूपता, सर्वविद्याशिल्पानां सर्वासां विद्यानाम्, सर्वेषाञ्च शिल्पानामुपबन्धनी, उपबद्ध्यते शिष्यबुद्धावध्यारोप्यते गुरूपदिष्टोऽर्थो यया सा उपबन्धनी । यदि प्रत्ययस्य वाग्रूपता न स्यात्, तदा कथं गुरुणोपदिष्टोऽर्थः शिष्यबुद्धिमुपारोहेत्, शब्देन तस्यार्थस्य प्रत्यायनासम्भवात् । शब्दप्रत्यययोस्तादात्म्ये तु शब्दार्थयोरपि तादात्म्याच्छब्दानुविद्धां प्रयोक्तृबुद्धिमारूढोऽर्थः शब्दजन्यं शब्दानुविद्धं प्रतिपत्तृप्रत्ययं द्वारीकृत्य प्रतिपत्तृबुद्धिमारोढुमर्हति । तद्वशात् = प्रत्ययस्य वाग्रूपतावशात् , अभिनिष्पन्नम् अन्तःप्रयोक्तृबुद्धौ निष्पन्नमभिव्यक्तं सर्वं वस्तु सूक्ष्मवागुपसर्जनकं पश्चाच्छब्दोत्पत्तिशब्दजन्यतदर्थप्रत्ययोत्पत्तिक्रमेण विभज्यते प्रयोक्तृबुद्धेर्बहिः पृथक् क्रियते । यद्वा बहिरनिष्पन्नमपि वस्तु प्रयोक्तृबुद्ध्यारूढं पश्चात् प्रागुक्तक्रमेण विभज्यते शब्दप्रयोगेण प्रयोक्तृबुद्धितः पृथक्कृत्य प्रतिपत्तृबुद्धौ क्रियत इति ।

तदिदं व्याख्यातं हरिणा स्वयम्—''विद्याशिल्पकलादिभिर्लौकिकेषु वैदिकेषु चार्थेषु मनुष्याणां प्रायेण व्यवहारः प्रतिबद्धः । मनुष्याधीनाश्चेतरस्य भूतग्रामस्य स्थावरजङ्गमस्य प्रवृत्तयः । विद्यादयश्च वाग्रूपायां बुद्धौ निबद्धा घटादीनाञ्चाभिनिष्पादने प्रयोज्यप्रयोजकानामुपदेशसमीहादि सर्वं वाग्रूपतानुसारेण प्रकल्पते'' इति ।

अयमर्थः—प्रायेण मनुष्याणां लौकिकार्थविषयको वैदिकार्थविषयकश्च सर्वोऽप्यनुष्ठानहानोपादानपरिवर्जनादिरूपो व्यवहारो विद्याशिल्पकलादिभिः सह प्रतिबद्धः सम्बद्धः ।

इतरस्य मनुष्येतरस्य स्थावरजङ्गमात्मकस्य भूतग्रामस्य प्राणिवर्गस्य मनुष्याधीना मनुष्यप्रवृत्त्यधीनाः प्रवृत्तयश्च, अपि मनुष्यसमवेतविद्याशिल्पकलादिभिः प्रतिबद्धाः । स च सम्बन्धः साक्षात्परम्परासाधारणो जन्यजनकभावरूपः । विद्याशिल्पकलादयश्च सूक्ष्मवाग्रूपतानुविद्धायामुपदेष्टृबुद्धौ ।

किञ्च, घटादिकार्याणामभिनिष्पादने योऽयं प्रयोजकस्य 'एवं क्रियताम्' इत्युपदेशः, यच्च प्रयोज्यस्य 'एवं करोमि' इत्येवमभ्युपगमः, तदर्थोत्पत्त्यनुकूलचेष्टारूपा समीहा चैवमादिकं सर्वं प्रत्ययस्य वाग्रूपतानुसारेणैव प्रकल्पते नान्यथा, उपदेशस्य प्रयोक्तृसमवेतवाग्रूपतानुविद्धप्रत्ययपूर्वकत्वात्, समीहायाश्च प्रतिपत्तृसमवेतवाग्रूपतानुविद्धप्रत्ययपूर्वकत्वादिति ॥१२५॥

**सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते।**
**तन्मात्रामप्यतिक्रान्तं चैतन्यं सर्वजातिषु।। १२६।।**

योऽयं चैतन्ये वाग्रूपतानुगमस्तेन लोके ससंज्ञो विसंज्ञ इति व्यपदेशः क्रियते। एवं ह्याह—

अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः।
तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत्।। इति।

अन्तःसंज्ञानामपि सुखदुःखसंविन्मात्रा यावद् वाग्रूपतानुवृत्तिस्तावदेव भवति। बहिःसंज्ञेषु। तन्निबन्धनो लोकव्यवहारस्तदभावान्नियतमुत्सीदेत्।

न केवलं वाग्रूपता सर्वविद्याशिल्पानां कलानां चोपवन्धनी; किन्तु यैषा सर्वप्राणिषु चैतन्यरूपा संज्ञा, यस्यां सत्यां सर्वास्वर्थक्रियासु प्राणिनां प्रवृत्तयः, यदुत्क्रान्तौ च सर्वेषां प्राणिनिकायानां काष्ठकुड्यादिवत् प्रवृत्तिशून्यता, सैषा वाग्रूपतैव इत्याह—**सैषा संसारिणां संज्ञेति।**

अयमर्थः—सैषा, यैषा सर्वविद्याशिल्पानां कलानां चोपबन्धनी वाग्रूपता, सैषा संसारिणां प्राणिनाम् , संज्ञा चैतन्यम्। सा च शरीराद् बहिरन्तश्च वर्तते, व्यापकत्वात्। यद्वा शरीरान्तर्ज्ञान-रूपेण बहिश्च शब्दरूपेण वर्तते। किञ्च, सर्वजन्तुषु यच्चैतन्यं तत् तन्मात्रां तस्या वाचो मात्रां स्वरूपम्, अनतिक्रान्तं नातिक्रान्तम्; किन्तु वाग्रूपमेवेति नास्ति स प्राणिविशेषो यस्य चैतन्ये वाग्रूपानुषङ्गो नास्तीति।

अयं भावः—योऽयं व्यवहारयोग्यपरिच्छेदरूपे चैतन्ये वाग्रूपतानुगमस्तत एव लोकस्य पदार्थानां विशिष्टाकारपरिच्छेदक इदं तदिति वाग्रूपतानुषक्तः प्रत्ययावमर्शात्मा व्यवहारः, सर्वास्वर्थ-क्रियासु प्रवृत्तयश्च, वाग्रूपतानुगतं चैतन्यमेव च संज्ञापदेन व्यपदिश्यते।

लोके यन्मूलकप्रवृत्तिसत्त्वे 'संसज्ञोऽयम्' इति व्यपदेशः, सुषुप्तिमदमूर्च्छामरणादिषु यदभावे विसंज्ञ इति व्यवहारः क्रियते। अत एवैवमाह—

अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः।
तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत्।। इति।

अस्यार्थः—वाग् वाग्रूपतानुविद्धं चैतन्यमेव, अर्थक्रियासु सफलासु क्रियासु, देहिनः प्राणिनः, समीहयति प्रवर्तयति, श्वासादिवत् स्वाभाविकीषु क्रियासु निष्फलासु चोपविष्टस्य शयानस्य वा हस्तपादादिकम्पनक्रियासु ज्ञानपूर्विकायां प्रवृत्तेरभावादिति भावः। मरणकाले तदुत्क्रान्तौ, यस्य वाग्रूपस्य चैतन्यस्योत्क्रान्तौ अभावे तु, अयं प्राणी, काष्ठकुड्यवद् विसंज्ञो वाग्रूपानुविद्ध-ज्ञानपूर्वकप्रवृत्तिरहितो दृश्यते लोक इति।

तथा चेदं फलितम्—सर्वा हि प्राणिनामर्थक्रियासु प्रवृत्तयो ज्ञानपूर्विकाः, जानाति इच्छति, यतते चेष्टत इति चेष्टायां क्रमस्वीकारात्। तच्च ज्ञानं वाग्रूपानुविद्धमेव। अत एव वाचैव युक्ता नरतिर्यगादयः प्राणिनश्चेष्टन्ते, न तु स्थावरा वृक्षगुल्मलतादयः। यद्यपि वृक्षादिष्वपि वाय्वादिप्रयुक्ताः कम्पादिरूपाश्चेष्टाः सन्त्येव, तथाप्यत्र चेष्टापदेन हिताहितप्राप्तिपरिहारानुकूलाः कायक्रिया एव गृह्यन्त इति बोध्यम्।

न हि सा चैतन्येनाविष्टा जातिरस्ति, यस्यां स्वपरसम्बोधो यो वाचा नानुगम्यते। तस्माच्चितिक्रियारूपमलब्धवाक्शक्तिपरिग्रहं न विद्यते।

वाक्तत्त्वरूपमेव चितिक्रियारूपमित्यन्ये। तथाह—

भेदोद्ग्राहविवर्तेन लब्धाकारपरिग्रहा।
आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा॥
एकत्वमनतिक्रान्ता वाङ्नेत्रा वाङ्निबन्धनाः।
पृथक् प्रत्यवभासन्ते वाग्विभागा गवादयः॥

---

अन्तःसंज्ञानां बहिर्विषयव्यावृत्तप्रत्ययानां तेषामपि सुखदुःखसंविन्मात्रा = सुखदुःखसंवेदनं तावदेव भवति, यावत्तेषां संवेदने वाग्रूपतानुवृत्तिः। तरूणामपि वाग्रूपतानुविद्धसंवेदनसत्त्वे भागवतं प्रमाणम्—

यं प्रव्रजन्तमनपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव।
पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि॥ इति।

तरुगुल्मादीनां प्राणित्वं च भग्नक्षतसंरोहणादिना प्राणानुमानात्। सुखदुःखसंवेदनञ्च प्राणसम्बन्धादेवावसीयते। यमलार्जुनकथा च भागवते स्मर्यमाणा सर्वस्मिन्नस्मिन्नर्थे प्रमाणम्। बहिःसंज्ञेष्वपि = बाह्यवस्तुविषयकप्रत्ययवत्स्वपि नरतिर्यगादिषु वाग्रूपताऽनुपदार्थप्रत्ययनिबन्धनो लोकव्यवहारस्तादृशप्रत्ययाभावान्नियतमुत्सीदेत्।

न हि चैतन्येनाविष्टा सा काचन जातिरस्ति, यस्यां यः स्वसम्बोधः स्वपरसम्बोधो वा, स वाचा नानुगम्यते। तत्र स्वसम्बोधे वाग्रूपानुगमः स्थावरेषु वृक्षादिषु, स्वसम्बोधे परसम्बोधे च वाग्रूपानुगमो मनुष्यादिष्विति। तस्माच्चितिक्रियायाश्चैतन्यरूपायाः स्वरूपमलब्धवाक्शक्तिपरिग्रहं वाग्रूपानुषङ्गोपलम्भरहितं न विद्यते। तदेवं भिन्नयोरेव सम्बन्ध इति वाक्चैतन्ययोर्भेदः सिद्धः।

अन्ये तु वाक्तत्त्वरूपमेव चितिक्रियारूपमिति तयोरभेदमेव मन्यन्ते। तथाह कश्चित्—

भेदोद्ग्राहविवर्तेन·······इत्यादि।

अस्याशयः—भिद्यन्ते भिन्नतया परस्परव्यावृत्ततया प्रतीयन्त इति भेदा गवादयः, तेषां य उद्ग्राहः परावाक्कर्तृकस्तद्रूपपरिग्रहः, स एव विवर्तः, परस्या वाचोऽतात्त्विकोऽन्यथाभावः, तेन लब्धो निराकारस्याप्याकारपरिग्रहो यया सा परा वागेव सर्वविद्यासु परा प्रकृतिराम्नाता उपनिषत्सु उक्ता। उपनिषत्सु हि बह्व्यो ब्रह्मविद्या उक्ता नानाख्या नानावंश्याः, तासु सर्वासु चेतनं ब्रह्मैकमेवाद्वितीयं जगतोऽभिन्ननिमित्तोपादानत्वेन श्रुतम्। तच्चैतन्यं परावाग्रूपमेव, 'ज्ञानस्य शब्दत्वापत्तिरिष्यते' इत्यत्र, "अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः" इत्यत्र च प्रागुपपादितत्वात्। एवं वाक्चैतन्ययोरभेद इति प्रकृतकारिकार्थः संगृहीतोऽनेन पद्येन।

तदेवं वागविभागाः परस्या वाचो विवर्तरूपतया विभज्यमाना गवादयः, भिन्नतया प्रतीयमाना अपि परस्या एकस्या वाचः कार्यत्वेन तदभिन्नाभिन्नस्येति नान्येन कारणात्मना एकत्वमभेदमनतिक्रान्ता अपि कार्यात्मना पृथक् प्रत्यवभासन्ते।

षड्द्वारां षडधिष्ठानां षट्प्रबोधां षडव्ययाम्।
ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते ॥१२६॥

---

तदुक्तं भामत्यां चेतनं ब्रह्म जगतः परप्रकृतित्वेनाभ्युपेत्य—

कार्यात्मना तु नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥ इति।

ते च गवादयः पदार्थाः शब्दाश्च यतो वाङ्नेत्राः, वाग् वचनमेव प्रतिपत्तारं प्रति नयनं साधनं येषां ते वाङ्नेत्राः। लोके हि तेऽर्थरूपाः शब्दरूपाश्च पदार्थाः प्रतिपत्तारं प्रति वचनान्नीयन्ते प्रयोक्त्रेति वाङ्नेत्रा इत्युच्यन्ते। किञ्च, वाङ्निबन्धना वाक् परा प्रकृतिर्निबन्धनम् उत्पत्तौ ज्ञप्तौ च कारणं येषां गवादीनामर्थानां शब्दानाञ्च ते वाङ्निबन्धनाः। अर्थास्तावद् वाचो विवर्तत्वात् तन्निबन्धनाः। शब्दा अपि वाचमर्थरूपापन्नां प्रतिपादयन्तीति तन्निबन्धनाः, प्रतिपाद्याभावे प्रतिपादकाप्रवृत्तेः। तदेवं कार्यात्मना पृथक् प्रत्यवभासमाना अपि गवादयोऽर्थाः शब्दाश्च परावाग्रूपतयैकात्मतां नातिक्रामन्तीत्येकत्वमनतिक्रान्ता इत्युक्तमिति।

षड्द्वाराणि प्राप्त्युपाया यस्या वाचस्तां षड्द्वाराम्, तस्या वाचो बहुधा शक्तयो या हि षड्विधां प्रतिभां जनयितुं प्रवर्तन्ते। ताभिर्हि षड्भिः प्रतिभाभिः सा परा वाक् प्राप्यते। ताश्च षड्विधाः प्रतिभाः—

स्वभावचरणाभ्यासयोगादृष्टोपपादिताम्।
विशिष्टोपगताञ्चेति प्रतिभां षड्विधां विदुः ॥ इति। (वा० प० २/१५२)

तत्र स्वभावः प्राक्तनः संस्कारः, चरणं साधनानुष्ठानम्, अभ्यासः सजातीयप्रत्ययाभ्यासरूपं ध्यानम्, योगः समाधिः, अदृष्टम् इष्टदेवताराधनादिजन्यं पुण्यम्, तैरुपपादिता उत्पादिता, विशिष्टोपगता, विशिष्टात् परावाक्साक्षात्कारविशिष्टाद् आचार्याद् उपगता, विधिवत्प्राप्ता चेत्येवं प्रतिभां षड्विधां विदुरित्यर्थः।

षडधिष्ठानां षड्विधायाः प्रतिभाया विषयीभूता ये षड् अर्थास्ते वाच्यत्वेन कार्यत्वेन वाऽधिष्ठानमाश्रयो यस्या वाचस्ताम्। षट्प्रबोधाम्, ताभिः षड्भिः प्रतिभाभिर्जायमाना ये षट्प्रबोधास्ते कार्यभूता यस्या वैखरीरूपत्वमापन्नाया वाचः, अथवा ज्ञापकाः परस्या वाचः, सा तथाभूता ताम्। षडव्ययां षट्प्रतिभागोचरीकृताः षडर्थास्तत्संसर्गा वा अव्ययानि शाश्वतानि नित्यानि रूपाणि यस्याः परस्या वाचस्ताम्। तदुक्तं भाष्यवार्त्तिके—"सिद्धे शब्दार्थसम्बन्धे, लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः क्रियते" इति।

यद्वा षड्द्वारां षड्वृत्तयो द्वाराणि ज्ञानोपाया यस्या वाचस्ताम्। यद्यपि वाचकत्वलक्षकत्वव्यञ्जकत्वाख्यास्तिस्र एव वृत्तयः, तथापि ताः पदवाक्यगतत्वेन द्वेधा इति षड्वृत्तयः। तासां वृत्तीनाञ्च षडर्था अधिष्ठानान्याश्रया यस्या वाचस्ताम्, षट्प्रबोधां षड्भिर्वृत्तिभिर्जन्या ये षट्प्रबोधास्तज्जनिकाम्, षडव्ययां षड् अव्ययाः सम्बन्धाः अर्थैः सह यस्यास्ताम्, एवंभूतां ये वाचं परां स्वाभेदेनासङ्ग्रहोपासनया उपासन्ते, ते मृत्युमतिवर्तन्ते, वै एव। तयोपासनया परावाग्रूपपरब्रह्मचैतन्यरूपतामुपागता अमृता भवन्तीत्यर्थः ॥१२६॥

**प्रविभागे यथा कर्ता तया कार्ये प्रवर्तते ।**
**अविभागे तथा सैव कार्यत्वेनावतिष्ठते ।। १२७ ।।**

---

प्रविभक्तसाध्यसाधनरूपो हि शब्दब्रह्मणो विवर्तः । प्राप्तजन्मादिविक्रिया वाग्विभागग्रन्थयो जागरणवृत्तिकाले वाग्रूपतामनुगच्छन्त्यो निवृत्तिविक्रियाप्राप्तिभिः कार्येषु यतन्ते । स्वप्नाद्यविभागे तु सैव वागविषया बाह्यवस्तुस्वरूपा सती निर्वृत्तिविक्रियाप्राप्तिषु कर्मभावं प्रतिपद्यते । आह च—

प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ।।१२७।।

---

जाग्रदवस्थायां सर्वेषां प्राणिनां सर्वोऽपि व्यवहारो वाग्रूपतानुविद्धचैतन्यपूर्वक एव । वाग्रूपतैव च चैतन्यम् । तथा च जाग्रद्वृत्तौ वाक् सर्वव्यवहारसाधनमित्युक्तं प्राक्, इदानीं तु स्वप्ने सर्वव्यवहारसाधनत्वेऽपि सर्वव्यवहारकर्मत्वमपि वाच एवेत्येवं साध्यसाधनोभयरूपत्वं स्वप्ने वाच एवेत्येवं स्वप्नेऽपि वाच उपयोगमाह—**प्रविभागे यथा कर्तेति ।**

अयमर्थः—यथा प्रविभागे जाग्रदवस्थायाम् , तत्र व्यवहारे कर्तृकर्मकरणविभागसम्भवात् । कर्ता तया वाचा, कार्ये सर्वविधव्यवहारक्रियाणां कर्मणि घटादौ प्रवर्तते, तथाऽविभागे स्वप्नावस्थायाम् , तत्र गवादिविभागाभावादिति भावः । सैव चैतन्यरूपा वागेव; कर्तृरूपा, कार्यत्वेन अपीति शेषः । व्यवहारक्रियाकर्मत्वेन साध्यत्वेनापीत्यर्थः । अवतिष्ठते । स्वप्नावस्थायां चैतन्यरूपा वागेव व्यवहारक्रियायां कर्तृकर्मकरणरूपा, तदानीं तस्या एव तेन तेन रूपेण विवर्तमानत्वात्; ''न तत्र रथा रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथश्च सृजते'' इत्यादिश्रुतेः । न तु तत्र जाग्रद्वृत्ताविव कर्तृकर्मकरणविभाग इत्यर्थः पर्यवसितः । यद्यपि जाग्रद्वृत्तावपि सर्वासु व्यवहारक्रियासु कर्तृकर्मकरणप्रविभागो वाग्रूपचैतन्यात्मकस्य ब्रह्मण एव विवर्त इति, जाग्रदवस्थायामपि सैव कार्यत्वेनावतिष्ठत इति समानम् ; तथापि स्वप्ने बाह्यार्थभावस्य प्रसिद्धत्वेनाविभागस्योपपत्तिमनायासामालोच्यैवमुक्तमिति ।

अयं भावः—जाग्रदवस्थायां ये प्रविभक्ताः सर्वेऽर्था व्यवहारक्रियायाः साध्यरूपाः साधनरूपाश्च शब्दाः, ते सर्वेऽपि चैतन्यात्मकवाग्रूपस्य शब्दब्रह्मणो विवर्तः, ते हि वाचि परस्यां चिद्रूपायां ग्रन्थिरूपेण = वासनारूपेण विद्यमाना जाग्रत्काले तत एव विभज्यमाना गवादयोऽर्था वाग्विभागग्रन्थयो निर्वृत्तिविक्रियाप्राप्तिभिः क्रियाभिः प्राप्तजन्मादिविक्रिया निर्वृत्ताः, विकृताः प्राप्ताश्च सन्तो जागरणनिर्वृत्तिकाले वाग्रूपतानुविद्धचैतन्यमनुगच्छन्तस्तद्गोचरीभूताः सर्वेष्वपि व्यवहारकार्येषु कर्मतामनुभवितुं यतन्ते, अनुभवन्ति चेति तदानीं वाग् घटादिव्यवहारक्रियायां साधनमेव, न तु साध्यमपि । स्वप्नादौ व्यवहारक्रियायाः कर्तृकर्मकरणविभागे तु या श्रवणागोचरीभूता चिद्रूपा परावाक्, सैव विवर्तमाना बाह्यवस्तुसरूपा सती निर्वृत्तिविक्रियाप्राप्तिषु क्रियासु कर्मभावं प्रतिपद्यते । यत्तत्क्रियाकर्मतां प्रतिपद्यमानैव च व्यवहारक्रियाकर्मतामपि प्रतिपद्यते, न तु जागरण-

**स्वमात्रा परमात्रा वा श्रुत्या प्रक्रम्यते यथा ।**
**तथैव रूढतामेति तया ह्यर्थो विधीयते ।। १२८ ।।**

सर्वो हि विकार आत्ममात्रेति केषाञ्चिद् दर्शनम् । स तु प्रतिपुरुषमन्तःसन्निविष्टो बाह्य इव प्रत्यवभासते । रूढत्वाच्च व्यवहारमात्रमिदमन्तर्बहिरिति । न ह्येतदेकत्वेऽमूर्तत्वे वा सम्भवति ।

---

काल इव निर्वृत्त्यादिक्रियाकर्मताप्राप्तेरनन्तरम् , स्वप्ने पदार्थानां प्रातिभासिकत्वेन प्रतिभाससम-कालत्वादिति । आह चैनमर्थं कश्चित्—

प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥

अस्यार्थः—सर्वेश्वरः सर्वस्य स्वसृष्टस्य स्वाप्नप्रपञ्चस्य प्रातिभासिकस्य ईश्वरः, न तु जाग्रत्प्रपञ्चस्य, तस्येशसृष्टत्वात् । सर्वमयः सर्वस्वाप्नप्रपञ्चरूपः, सर्वोपादानत्वात् । भोक्ता जीवः, आत्मना स्वयमेवात्मानं शब्दतदर्थाकारेण प्रविभज्य, तदानीं तद्द्वितीयस्याभावान्न सहकारिणमपेक्षते । 'न तु तद्द्वितीयमस्ति' इति, 'एकमेवाद्वितीयम्' इति च श्रुतेः ।

अनेन स्वप्नप्रपञ्चं प्रति जीवस्याभिन्ननिमित्तोपादानत्वं जाग्रत्प्रपञ्चे ईशस्येव समर्थितम् , धर्माधर्मौ वासना च जीवोपाध्यन्तःकरणाश्रितत्वेन तद्धर्मत्वेन च जीवस्वरूपादतिरिच्यन्त इति ध्येयम् । स्वप्ने प्रवर्तते भोक्तृभोक्तव्यभोगरूपैरात्मानं प्रविभज्य व्यवहरतीति ॥१२७॥

अद्वैतदर्शनमेवैकं परमार्थवस्तुविषयकमिति "सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा" (वा०प० १/९) इति कारिकाव्याख्यावसरे उपपादितम् । दर्शनान्तराणि तु श्रुतियुक्तिपराहत-विषयकत्वाद् वाक्प्रकल्पितवस्तुविषयाणीति दर्शयितुं वाचोऽपरमार्थवस्तुविकल्पने उपयोगमाह—**स्वमात्रा परमात्रा वेति ।**

अस्यार्थः—इदं पदपदार्थभेदभिन्नं जगत् स्वमात्रा स्वस्य आत्मनः पुरुषस्य, मात्रा स्वरूपं भवतु दृष्टिसृष्टिवादे । अस्मिंश्च स्वमात्रावादे विश्वस्य पुरुषाव्यतिरेकः पर्यवस्यति । परस्य जीवादति-रिक्तस्य परमात्मनो मायोपहितस्य मात्रा स्वरूपं वा भवतु सृष्टिदृष्टिवादे; किन्तु श्रुत्या शब्देन, यथा प्रक्रम्यते नियतेन असाधारणेन रूपेण, वस्तुसता गोगवाद्याकारभेदेन, अवस्तुसता वा घटत्वादि-जातिरूपेण, शशशृङ्गादिरूपेण वा प्रत्याय्यते; तथैव शब्दप्रत्याय्यरूपेणैव सताऽसता वा रूढता-मेति, बहिः सन्नसन् वाऽर्थो बुद्धौ वस्तुत्वेन प्रसिद्धिमभ्येति, येन घटादिषु घटत्वादिजातिं पश्यन्ति नैयायिकाः, न बौद्धाः, द्रव्यगुणयोरत्यन्तं भेदं पश्यन्ति नैयायिकाः, न सांख्यादयः ।

एवं स्वस्वकृतान्तकल्पितं तं तं पदार्थं पश्यन्ति ते ते दार्शनिकाः, न तु तदन्ये तं तं पदार्थं तथा तथेति ।

कुत एतदेवमित्याह—**तया ह्यर्थो विधीयत इति ।**

अपरेषां सर्वप्रबोधरूपः सर्वप्रभेदरूपश्चैकस्य चितिक्रियातत्त्वस्यायं परिणाम इत्यादि स्वमात्रावादिनां दर्शनम् ।

चैतन्यं भूतयोनिस्तिलक्षोदरसवत् प्रविभज्यत इत्येके ।

अन्ये त्वाहुः—तद्यथा महतोऽग्नेर्विस्फुलिङ्गाः सूक्ष्माद् वायोरभ्रघनाश्चन्द्रकान्ताद् विभागिन्यस्तोयधाराः पृथिव्या वा सालादयो न्यग्रोधधानादिभ्यो वा सावरोहप्रसवा न्यग्रोधा इत्येवमादि परमात्रावादिनां दर्शनम् । स्वपरमात्रावादिनां दर्शनं विद्याभाष्येभ्यः प्रतिपत्तव्यम् ।

---

हि यतः, तया वाचा अर्थो विधीयते बहिः सन्नसन् वाऽर्थः शब्देन बुद्धौ वस्तुत्वेन प्रकल्प्यत इति ।

अयं भावः—सर्वो ह्यात्मातिरिक्तः पदार्थो विकारः कार्यम् , स च प्रतीच आत्मनः कार्यमिति स्वमात्रा इति, आत्ममात्रावादिनां केषाञ्चिद् दर्शनम् ।

अत्रापि दर्शनेऽस्त्यवान्तरो मतभेदः । तथा हि—स सर्वोऽपि विकारो दृष्टिसृष्टिवादे प्रातिभासिकत्वात् प्रतिपुरुषमन्तःसन्निविष्टो बाह्य इव प्रत्यवभासते ।

तथा च सुखदुःखज्ञानेच्छादिकं घटादिकं चेति द्वयमपि यद्यप्यन्तःसन्निविष्टमेव, तथापि सुखादिकमन्तर्घटादिकं बहिरित्यनादिनिरूढपूर्वप्रत्ययसमुपजातवासनाबलाद् व्यवहारमात्रमेव, न तु वस्तुतः ।

न हि सुखादेर्घटादेश्च द्विविधस्यापि विकारस्यैकपुरुषोपादानकत्वेनैकत्वेऽमूर्तपुरुषोपादानकत्वेनामूर्तत्वे च सुखादिकमन्तर्घटादिकं बहिरिति व्यवहारोऽर्थस्थितिमनुरुध्य वास्तविकः सम्भवति ।

तथा चैतन्मते इव फलितम्—सर्व एव पदार्थ एकैकस्मिन् पुरुषेऽन्तःसन्निविष्टः, तस्य चोपादानकारणं पुरुषोपाधिर्बुद्धिस्तदुपहितं ब्रह्म चैतन्यं वा जीवभावमुपगतमिति विशेषो नावधार्यत इत्येकमात्ममात्रावादिनां मतम् ।

द्वितीयं त्वपरेषामात्ममात्रावादिनां मतम्—एकस्यैव चितिक्रियातत्त्वस्यायं सर्वप्रबोधरूपः = सर्वाणि यानि गोघटादिज्ञानानि तद्रूपः सर्वप्रभेदरूपश्च = सर्वे ये गोघटादयः प्रभेदाः कार्यभेदास्तद्रूपः परिणामः । तथा चात्मपरिणामत्वेन सर्वस्य विकारस्यात्मनाऽव्यतिरेकः पर्यवस्यति ।

पूर्वस्मिन् मतेऽन्तःसन्निवेशी पुरुषो विश्वस्योपादानकारणमित्यत्र सन्देहः, बुद्धेरप्युपादानत्वसम्भवात् । अस्मिन् मते तु चैतन्यमेकं विश्वस्योपादानकारणमिति निश्चय इति संशयनिश्चयविषयत्वेन मतद्वये विशेषोपपत्तिः ।

परमात्रावादिनामप्यस्ति दर्शनद्वयम् । तद्यथैके आहुः—अव्याकृतनामरूपाविष्टमायोपहितं चैतन्यं भूतानां पृथिव्यादीनां योनिरुपादानकारणम् , तत्र हि प्रलये सर्वाणि पृथिव्यादीनि भूतान्यवस्थितानि, सर्गकाले तु कालदृष्टादिरूपनिमित्तविषयात् तत एव प्रविभज्यन्ते तिलक्षोदरसवत् ।

तद्यथा—तिलानां क्षोदे सति तेष्वन्तर्हितो रसः स्नेहरूपस्तेभ्यः प्रविभज्यते, तथा चैतन्योपाधिभूतायां मायायां कालादृष्टादिकृते क्षोदे सति मायायां प्रविलीनान्यव्याकृतरूपेणावस्थितानि भूतानि पृथिव्यादीनि ततः प्रादुर्भवन्तीति ।

श्रुत्या प्रक्रम्यते। शब्देनान्तःसन्निवेशिना सुखदुःखादिभावेन नानाप्राणिषु बहुधा प्रक्रम्यते, लोष्टक्षेपपातादिषु च लोकभावनासमयेन प्रसिद्ध्या व्यवतिष्ठते। तया ह्यर्थो विधीयत इति। सैव हि श्रुतिरर्थं कल्पयति संस्करोति ॥१२८॥

---

तथा चास्मिन् मते परस्य जीवादतिरिक्तस्य मायोपहितस्य परमेश्वरस्य मात्रेति, यद्वा परस्याः पुरुषादतिरिक्ताया मायाया मात्रेति परमात्रापदार्थः।

अत्रैव परमात्रावादे दृष्टान्तान्तरसमाश्रयणेन मतान्तरम्। तद्यथाऽन्ये आहुः—महतोऽग्नेर्विस्फुलिङ्गाः सूक्ष्माद् वायोरभ्रघनाः, चन्द्रकान्ताद् विभागिन्यस्तोयधाराः, पृथिव्या वा सालवृक्षादयः, न्यग्रोधधानाभ्यो वा सावरोहप्रसवा न्यग्रोधा इत्येवमादि परमात्रावादिनां दर्शनम्। एषु प्रथमो दृष्टान्तो न ब्रह्मजगतोरग्निविस्फुलिङ्गयोरिवांशांशिभावे, किन्तु युगपद्व्युच्चरणरूपे निःसरणे।

तथा च श्रुतिः—'यथाऽग्नेर्विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्वे एतस्मादात्मनो व्युच्चरन्ति' इति।

इतरत्तु उदाहरणचतुष्टयं स्पष्टमेव मायोपहिताच्चैतन्यादन्तर्निलीनस्य विश्वस्य युगपत् प्रादुर्भावं निदर्शयति।

अत्र परमात्रावादिमतद्वये पूर्वस्मिन् मते तिलक्षोदरसवत् क्रमेणाभिव्यक्तिरूपा सृष्टिः प्रतिपादिता। उत्तरस्मिन् मते त्वस्मिन् युगपत् प्रादुर्भावरूपेति भेदः।

अयं च क्रमयौगपद्याभ्यां जगत्सर्गः श्रुतावपि प्रतिपादितः। विरोधस्त्वजातवादं पारमार्थिकमाश्रित्य परिहर्तव्यः। इमानि च स्वमात्रावादिनां परमात्रावादिनां च दर्शनानि तत्तद्विद्याभाष्येभ्यः प्रतिपत्तव्यानि।

"श्रुत्या प्रक्रम्यते यथा तथैव रूढतामेति" इत्यस्य त्वयमभिसन्धिः—प्रतिपत्तॄणां प्रतिपत्तिक्रमेण स्वान्तान्तःसन्निवेशिना शब्देन स्वार्थः सुखदुःखादिभावेन नानाप्राणिषु बहुधा प्रक्रम्यते। यथा च प्रक्रम्यते, तथैव बुद्धौ रूढतामेति।

तद्यथा—परिहासवाक्यं श्यालकादीनां प्रतिपत्तिक्रमेण बुद्ध्यन्तःप्रविष्टं स्वार्थस्य सुखरूपतां विधत्ते। तदेव तु वाक्यमन्यस्मिन् प्रयुक्तं स्वार्थस्य दुःखरूपताम्। एवमन्येषु प्राणिष्वपि। यथा विडालस्योद्वेजको विलविलशब्दो न शुन उद्वेजको भवतीति तस्य शब्दस्य स्वार्थस्य दूरापसरणरूपस्य दुःखरूपताविधानं विडालं प्रत्येव। प्राणिधर्मभिन्नेष्वपि च लोष्टक्षेपलोष्टपतनादिक्रियासु लोकभावनासमयेन = लोकानां या भावना वासना तद्रूपेण समयेन नियमेन प्रसिद्ध्या लोष्टक्षेपपातादिकं सुखदुःखादिभावेन व्यवतिष्ठते।

तद्यथा—सवयसं बालं प्रति लोष्टक्षेपे लोष्टपाते वा तस्य तेन सुखमेव भवति, न दुःखम्, इदं परिहासार्थमनेन क्रियत इति लोकभावनासमयेन तस्य प्रसिद्धेः। अन्यं प्रति तु तथा करणे तस्य दुःखं भवति, नूनमयं मां तिताडयिषयैवं करोतीति लोकभावनासमयेन तस्य प्रसिद्धेः। इत्येवं लोके भावनासमयेन सुखदुःखजनने व्यवस्था, लोष्टक्षेपलोष्टपातादीनामप्राणिधर्माणामपि दृश्यते। स च लोष्टपातादिः शब्दानुविद्धप्रत्ययपुरस्सर एव सुखदुःखादिहेतुः। स च शब्दः सुखदुःखान्यतररूपतया तं बोधयन् सुखदुःखान्यतररूपमेव तं विधत्त इति।

**अत्यन्तमतथाभूते निमित्ते श्रुत्युपाश्रयात् ।**
**दृश्यतेऽलातचक्रादौ वस्त्वाकारनिरूपणा ।। १२९ ।।**

श्रुतिरेव हि सर्वं शब्दार्थं स्वरूपपदात्मनि सन्निविष्टं दर्शयति। सा तमर्थं जनयतीव। स हि तस्यां प्रत्याय्यात्मना नित्यमवस्थितः। न च बाह्यवस्तुगतं सदसत्त्वं श्रुतिरपेक्षते, नापि विपर्ययाविपर्ययौ।

तथा ह्यलातचक्रेऽपि सर्वप्रदेशव्यापिरूपा च क्रियादिशब्दरूपभावनानुगता श्रुतिरवतिष्ठमानाऽलातचक्रादिशब्दानां व्यावहारिकाणामर्थवत्तां प्रकल्पयति। तच्छ्रुति-बीजाभिमुख्ये तथाभूतनिमित्तया श्रुत्या प्रकल्पितो वस्त्वाकारः सत्यप्यनुमानबलीयस्त्वे रूढीभवति।

"तया ह्यर्थो विधीयते" इत्यस्य त्वयं भावः—स एव शब्दो बहिरसन्तमत्यर्थमन्तःकल्पयति संस्करोति च = बुद्धौ तस्यार्थस्य संस्कारमपि जनयति, उत्तरकाले तेन शब्देन तस्यार्थस्य झटिति बोधाय। तद्यथाऽलातचक्रशब्दो बहिरसन्तमप्यलातचक्रं बुद्धौ सृजति कल्पनया, संस्करोति चोत्तरकाले बोधायेति ॥१२८॥

तया ह्यर्थो विधीयत इति प्रागुक्तमर्थं दृष्टान्तेन प्रसाधयितुमाह—**अत्यन्तमतथाभूत इति ।**

अस्यार्थः—प्रायेण शब्दस्य प्रवृत्तिनिमित्तं क्वचित् तत्रैव वा कदाचित् तदानीमेव वा बहि-र्विद्यमानोऽर्थः, किन्त्वलातचक्रादिप्रयोगस्थले बहिरत्यन्तमतथाभूतेऽप्यलातचक्रपदार्थरूपे निमित्ते श्रुत्युपाश्रयाद् अलातचक्रशब्दबलाद् अलातरूपस्य वस्तुनो दीर्घस्य चक्राकारनिरूपणा दृश्यते। अलातचक्रशब्देन श्रुतेन दीर्घस्यालातस्य प्रतिपत्तॄन् प्रति चक्राकारेण निरूपणं दृश्यत इत्यर्थः।

अयं भावः—शब्द एव हि श्रुतः सन् पदात्मके स्वस्वरूपे सन्निविष्टम् = स्थितं शब्दार्थं सहजया शक्त्या दर्शयति 'स्वस्वरूपं दर्शयन् बुद्धौ।' न हि शब्दे श्रवणेन्द्रियं द्वारीकृत्य बुद्ध्या गृह्यमाणे तत्र स्थितोऽर्थो न गृह्येतेत्यत्र कोऽपि हेतुरुपपद्यते। स च शब्दः स्वस्मिन् स्थितं स्वार्थमपि स्वस्वरूपेण सह बुद्धौ दर्शयन् स्वार्थं बहिःसन्तमसन्तं वा बुद्धौ जनयतीव।

अत्र स्वार्थोपदर्शनमेव तज्जननम्, यतः स्वार्थः प्रत्याय्यात्मना शब्दे नित्यमवस्थितः, न तु कुण्डबदरन्यायेन। न च शब्दः स्वार्थोपदर्शने तस्य बहिः सत्त्वमसत्त्वं वाऽपेक्षते, नापि च शब्दः स्वमूलतया प्रयोक्तुः स्वार्थविषयकं विपर्ययमविपर्ययं वाऽपेक्षते; शब्दात्मनि प्रत्याय्यात्मना नित्यं सन्निहितस्य स्वार्थस्यैव शब्देनोपदर्शनात्, तद्विषयकज्ञानस्य प्रयोक्तृसमवेतस्य शब्दप्रयोग-मूलत्वात्।

तथा हि—ऊर्ध्वाधरपार्श्वरूपसर्वप्रदेशव्यापिपदार्थको यश्चक्रादिशब्दो रथचक्रादौ प्रसिद्ध-स्तत्सारूप्यभावनाऽनुगतो योऽलातचक्रशब्दघटकश्चक्रशब्दः, सोऽलातचक्रादिशब्दानां व्यवहारेऽ-वारितां प्रयुज्यमानानामर्थवत्तां बहिरसतीमपि स्वार्थप्रकल्पनद्वारा बुद्धौ प्रकल्पयति। येयं रथचक्रे चक्राकारा बुद्धिः प्रमारूपा प्रयोक्तृसमवेता, साऽप्यलाते चक्रशब्दप्रयोगस्य निबन्धनम्। तेन हि पुनः पुनः प्रयुक्तेन चक्रशब्देन श्रोतृणां बुद्धौ स्वार्थविषयकं संस्काररूपं बीजमाहितम्। तस्य

अत्यन्तासत्सु च निर्ज्ञातेषु शशविषाणादिषु श्रुतिरेवार्थं जनयति प्रकल्पयति स्वात्मन्यवरुणद्धि । तथैवान्यान् प्रत्यक्षानर्थान् ।

नित्यसन्निविष्टो हि सन्निबन्धनश्चानिबन्धनश्च शब्देष्वभिधेयत्वेनार्थात्मा, प्रतिपुरुषं तु भावनानुविधायिनी सत्यसति वार्थे स्वप्रत्ययानुकारेण भिन्नरूपा शब्देभ्यः प्रतिपत्तिरुपपद्यते ।।१२९।।

---

बीजस्यालातचक्रशब्दश्रवणे एतद्घटकचक्रशब्दस्य रथचक्रशब्दघटकचक्रशब्दसारूप्येण स्वकार्योपजननसामर्थ्योद्भवरूप आभिमुख्ये सत्यलातचक्रबुद्धिर्जायते । तया चालातचक्रशब्दप्रयोगाभ्यासेनाभ्यस्तया स्वार्थविषयकसंस्काररूपमलातचक्रशब्दार्थकल्पनाबीजमुपजायते । तस्य बीजस्य स्वकार्याभिमुख्यरूपे वृत्तिलाभे सति च तादृशसंस्काररूपनिमित्तसहकृतेन अलातचक्रशब्देन व्यवहारे कल्पितोऽलातस्य चक्राकारो व्यवहारे रूढीभवति = प्रसिद्धिमभ्येति, अलातं चक्रं न भवति, सदा तेन रूपेणानुपलभ्यमानत्वात्, व्यतिरेके रथाङ्गवदित्यनुमानस्य बलीयस्त्वे सत्यपि । न ह्यूर्ध्वाधरपार्श्वरूपसर्वदेशव्यापिनोऽवयवा अलातस्य दीर्घस्य रथचक्रस्येव सन्ति । नापि तादृशोऽवयवी अलातपदार्थः, नापि तादृशः समुदायः, आयामतः परिच्छिन्नमूर्तित्त्वेन मण्डलाकारत्वाभावात् ।

तदेवं यद्यपि चक्राकारत्ववैशिष्ट्येनोपगृहीतस्यालातस्यैकदेशवर्तिनश्चक्राकारत्वस्यालातेऽनुमानादप्यसत्त्वं प्रतिपद्यते लोकः, तथापि प्रागुक्तदिशा अलातचक्रशब्देन कल्पितमलातस्य चक्राकारत्वमसदपि सदिव पश्यति ।

किञ्चात्यन्तासत्त्वेन निर्ज्ञातेषु शशविषाणादिषु सत्सु शशविषाणादिशब्द एव स्वार्थं शशविषाणादिरूपं जनयति । शशविषाणादिशब्दात् शशविषाणाद्याकारप्रत्ययस्य प्रसवात् सोऽर्थस्तेन जनित इत्युच्यते । वस्तुतस्तु न जनयति, किन्तु प्रकल्पयति । प्रकल्प्य च स्वस्वरूपेऽवरुध्य तमर्थं स्थापयति, यतस्तत्प्रत्ययोत्तरमपि ततः ततः शब्दात् सोऽर्थः प्रतीयते । अत्यन्तासच्छशविषाणाद्यर्थवदेव बहिः सती गोगवयादिपदार्थान् बहिः प्रत्यक्षानपि गोगवयादिशब्दो बुद्धौ जनयति, तत्तदाकारैः प्रकल्पयति, स्वात्मन्यवरुणद्धि च=स्वात्मन्यवरोधपुरःसरं स्थापयति, येन कल्पितो गोगवयादिपदार्थः शब्दतादात्म्यापन्नायां बुद्धावेव तिष्ठति, न ततो बहिर्गच्छतीति । य एव शब्दार्थाः प्रमाणान्तरसिद्धबहिःसत्त्वाः, तानप्ययं शब्दो न बहिः सदसत्तया प्रकाशयति; अपि तु बुद्धिप्रतिभासमानार्थाकारतया ।

नित्यं सन्निविष्टो हि शब्देष्वभिधेयत्वेनार्थात्मा सदर्थाकारबुद्धिजनने हि शब्देष्वभिधेयात्मा सन्निविष्ट इति प्रतीयते ।

स च द्विविधः—सनिबन्धनः, अनिबन्धनश्चेति । तत्र बाह्यार्थसत्त्वे सनिबन्धनः, तदभावेऽनिबन्धनः । तत्र गोगवयादिशब्दस्य प्रत्याय्योऽर्थः सनिबन्धनः । शशविषाणादिशब्दस्य त्वनिबन्धनः ।

ननु यदि शब्दप्रत्याय्योऽर्थः शब्दे नित्यसन्निविष्टः, तदा कथं घटशब्दान्नैयायिकस्यावयविनि प्रतिपत्तिः, बौद्धस्य तु सङ्घातमात्रे, घटशब्दे सन्निविष्टस्यार्थस्यैकरूपत्वादिति चेत्, न, तत्तद्भिन्नदर्शनानुरोधेन या भावनाः प्रतिपुरुषभिन्नास्तदनुविधायिनो सत्यसति वा बाह्यार्थे स्वस्वप्रत्ययानुसारेण भिन्नरूपा घटादिशब्देभ्यः प्रतिपत्तिरुपपद्यत इति स्थितेः । तदेवं बाह्यार्थे सत्यसति वा शब्दस्य स्वप्रत्याय्यार्थविधायकत्वं सिद्धमिति ।।१२९।।

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ।। १३० ।।**

---

इह द्वौ शब्दात्मानौ—नित्यः कार्यश्च । तत्र कार्यो व्यावहारिकः पुरुषस्य वागात्मनः प्रतिबिम्बोपग्राही ।

नित्यस्तु सर्वव्यवहारयोनिः संहृतक्रमः सर्वेषामन्तःसन्निवेशी प्रभवो विकाराणामाश्रयः कर्मणामधिष्ठानं सुखदुःखयोः, सर्वत्राप्रतिहतकार्यशक्तिर्घटादिर्निरुद्ध इव प्रकाशः परिगृहीतभोगक्षेत्रावधिः, सर्वमूर्तीनामपरिमाणा प्रकृतिः, सर्वप्रबोधरूपतया सर्वप्रभेदरूपतया च नित्यप्रवृत्तप्रत्यवभासस्वप्नप्रबोधानुकारी प्रवृत्तिनिवृत्तिपदाभ्यां पर्जन्यवद् दवाग्निवच्च प्रसवोच्छेदशक्तियुक्तः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः, तस्मिन् खलु वाग्योगविदो विच्छिद्याहङ्कारग्रन्थीनत्यन्तविनिर्भागेण संसृज्यन्ते ।

---

पूर्वं चिद्रूपस्य ज्ञातुः शब्दरूपत्वमुक्तम्, "अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः" (११२) इत्यत्र, "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" (१०७) इत्यत्र च । अथेदानीं परमात्मनोऽपि शब्दरूपतां प्रतिपादयितुमाह—**अपि प्रयोक्तुरात्मानमिति ।**

अस्यार्थः—प्रयोक्तुरात्मानमपि, अन्तःशरीरान्तरवस्थितं महान्तमृषभम् "चत्वारि शृङ्गा" इत्यादयो मन्त्राः पादत्रयशृङ्गचतुष्टयादिकल्पनया ज्ञातस्य कामानां वर्षकत्वाच्च महावृषभत्वेन कल्पितं परब्रह्मस्वरूपमाहुः । येन परब्रह्मरूपेण शब्देन सायुज्यं सम्बन्धः, तादात्म्यमिति यावत्, इष्यते मुमुक्षुभिः, तस्य प्रकाशमानानन्दरूपत्वेन परमपुरुषार्थत्वादिति ।

अयं भावः—इह जगति द्वौ शब्दात्मानौ । स्थानकरणाभ्यामविवृत्तो नित्यः, ताभ्यां विवृत्तस्त्वनित्य इति । तत्र कार्यो व्यावहारिको वैखरीरूपः, येन सर्वोऽपि लोकव्यवहारः प्रवर्तते । स च पुरुषस्य परावाग्रूपस्य प्रतिबिम्बम् = छायाम् , सादृश्यम् उपगृह्णाति, विकारे प्रकृतिरूपानुगमदर्शनात् । नित्यस्तु शब्दः परावाग्रूपः सर्वस्य साध्यसाधनव्यवहारस्य पदपदार्थभेदव्यवहारस्य च योनिरुपादानकारणम्, तन्निबन्धनत्वात् सर्वप्रवादानाम् । कार्यस्तु शब्दः सर्वस्य व्यवहारस्य निमित्तकारणम् ।

किञ्च, नित्यः शब्दः संहृतक्रमः, अनवयवत्वेन नित्यत्वेन च क्रमशून्यत्वात् । सर्वेषां प्राणिनामात्मरूपतयाऽन्तःसन्निविष्टः सर्वेषां विकाराणाम् = कार्याणां प्रभवः विवर्तोपादानम् = कर्मजन्यानां पुण्यापुण्यरूपाणां वासनानामाश्रयः, तदुपाधेरन्तःकरणस्य तादृशवासनाश्रयत्वात् । सुखदुःखयोरधिष्ठानम्, अन्तःकरणादिरूपोपाधितादात्म्यापन्नस्य तस्यैव कर्मफलोपभोक्तृत्वात् । तस्यैव ह्यनुकूलसाधनैरनुग्रहे सुखम् , प्रतिकूलैः साधनैः कामोपघाते च दुःखमुत्पद्यते । यद्यप्यसौ सर्वेश्वरत्वात् सर्वत्रैवाप्रतिहतकार्यशक्तिः, तथापि घटादिना निरुद्धः प्रदीपप्रकाश इव परिगृहीतभोगक्षेत्रावधिः । तद्यथा बहिरवस्थितपदार्थप्रकाशनशक्तिमानपि प्रदीपप्रकाशो घटेनावरुद्धत्वादन्तश्चरिष्णुर्बहिरवस्थितरूपप्रकाशने प्रतिहतशक्तिः, तथासावपि परिगृहीतभोगक्षेत्रावधिः = भोगाय क्षेत्रं शरीरं परिगृह्य तेनावृत्तभोगः, अतः शरीरादन्यत्र भोगस्तस्य न भवति, शरीरद्वारेणैव च तस्य सुखदुःखानुभव इति ।

किञ्चासौ सर्वासां मूर्तीनां विकाराणामपरिणामा च प्रकृतिर्विवर्तोपादानरूपा, अपरिणामेऽपि

आह च—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥१३०॥

---

हि कारणे तस्य परिमितत्वे किञ्चित् कदाचिदुत्पाद्य क्षीयेतेति कारणस्यापरिमाणताऽभ्युपगम्यते, तेन सर्वदा मूर्तीनामुत्पादेऽपि नास्ति क्षय इति ।

किञ्चासौ सर्वप्रबोधरूपतया गोगवयादिरूपप्रभेदरूपतया च नित्यप्रवृत्तसर्वप्रत्यवभासरूपः । किञ्च, यथा स्वप्ने सर्वभावानां प्रविलयः पुरुषे निद्राकाले, जाग्रति च सर्वेषां तत एवोद्भवः, तथा प्रलये तस्मिन्नेव परावाग्रूपे पुरुषे सर्वभावप्रविलयः, सर्गादौ च तत एव जन्य इति स्वप्नप्रबोधानुकारी असौ परावाग्रूपः पुरुषः । तत एव हि सर्गादौ जगतः प्रवृत्तिः, तस्मिन्नेव च प्रलये जगतो निवृत्तिरिति प्रवृत्तिनिवृत्तिपदाभ्यामपि स्वप्नप्रबोधानुकारी । किञ्चासौ पर्जन्यवद् दवाग्निवच्च प्रसवोच्छेदशक्तियुक्तः ।

तद्यथा—पर्जन्योऽनुकूलया वृष्ट्या सस्यप्रसवहेतुः, प्रतिकूलया ईतिरूपया च सस्योच्छेदहेतुः । यथा च दवाग्निः क्षितिदाहद्वारा प्रभूततृणगुल्मादिप्रसवहेतुः, प्राक्तनस्य च तृणगुल्मादेरुच्छेदहेतुः तथाऽयमपि सर्गकाले जगतः प्रसवहेतुः, प्रलयकाले च तस्योच्छेदहेतुरिति रीत्या प्रसवोच्छेदशक्तियुक्तः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः, कामानां वर्षणात् । तस्मिन् खलु वाग्योगविदो वैयाकरणा अहङ्काराश्रितान् सर्वान् वासनारूपान् संशयरूपाँश्च ग्रन्थीन् विच्छिद्यात्यन्तविनिर्भागेण = विभागमत्यन्तं परित्यज्य संसृज्यन्ते, "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः ।

आह च मन्त्र एनमर्थम्—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥ इति ॥

अस्यार्थः—अस्य शब्दवृषभस्यालौकिकस्य चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपातरूपाणि, परापश्यन्तीमध्यमावैखरीरूपाणि वा । अस्य त्रयः पादा भूतभविष्यद्वर्तमानकालरूपाः, तैर्ह्ययं प्रतिष्ठते शब्दवृषभः । द्वे शीर्षे, नित्यः कार्यश्चेति शब्दद्वयं शीर्षस्थानीयम् । सप्त विभक्तयः प्रथमाद्या अस्य हस्तासो हस्ताः । त्रिधा बद्ध उरसि कण्ठे शिरसि च त्रिषु स्थानेषु बद्धः, स्थानत्रयेणोच्चार्यत्वात् । अन्येषामपि स्थानानां त्रिष्वेवान्तर्भावः । वृषभः प्रयोक्तुर्ज्ञातुश्च कामानां वर्षणात् । रोरवीति, भृशं शब्दं करोति । महो देवो महान् देवः स्वप्रकाशचिद्रूपः शब्दवृषभो मर्त्यान् मरणधर्मवतो मनुष्यान्, आविवेश । व्याकरणज्ञानजन्येन शब्दरूपमहादेवज्ञानेन महता देवेन सहास्माकमैक्यं सम्पन्नं स्यादित्यध्येयं व्याकरणमिति ॥१३०॥

**तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।**
**तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ।। १३१ ।।**

---

व्यवस्थितसाधुभावेन हि रूपेण संस्क्रियमाणे शब्दतत्त्वेऽपभ्रंशोपघातापगमादाविर्भूते धर्मविशेषे नियतोऽभ्युदयः । तदभ्यासाच्च शब्दपूर्वकं योगमधिगम्य प्रतिभां तत्त्वप्रभवां भावविकारप्रकृतिं सत्तां साध्यसाधनशक्तियुक्तां सम्यगवबुद्ध्य नियता क्षेमप्राप्तिरिति । आह च—

प्राणवृत्तिमतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः ।
क्रमसंहारयोगेन संहृत्यात्मानमात्मनि ।।

---

तदेवं शब्दस्य माहात्म्यमुपदर्श्य व्याकरणहेतुकस्य शब्दसंस्कारस्य धर्मविशेषजननद्वारा ज्ञानोत्पत्तिक्रमेण परब्रह्मप्राप्त्युपायत्वं प्रतिपादयितुमाह—**तस्माद् यः शब्दसंस्कार इति ।**

अस्यार्थः—तस्माच्छब्दस्य यथोपदर्शितमाहात्म्यसत्त्वाद् व्याकरणहेतुको यः शब्दसंस्कारः, साधुशब्दानामपभ्रंशेभ्यो विवेकेन ज्ञानम् , सा परमात्मनः सिद्धिः सिद्ध्युपायः ।

कथमित्यत आह—**तस्य प्रवृत्तितत्त्वज्ञ इति ।**

तस्य शब्दब्रह्मणः प्रवृत्तितत्त्वज्ञः, प्रवृत्तिः क्रिया, ते च षड्भावविकाराः—जायते, अस्ति, वर्धते, विपरिणमति, अपक्षीयते, नश्यतीति; तेषामसद्भूतत्वेन तेषां तत्त्वं सत्ता परब्रह्मरूपा प्रतिभाख्या, तज्ज्ञो व्याकरणहेतुकशब्दसंस्कारजन्यधर्मविशेषसहकारेण शब्दप्रवृत्तितत्त्वज्ञो वैयाकरणः, तत् श्रुत्यादिप्रसिद्धं विद्वदनुभवविषयञ्च, अमृतं जरामरणादिवर्जितम् , ब्रह्म वस्तुतः स्वात्मभूतम् , अश्नुते व्याप्नोति प्राप्नोति, अभेदेन साक्षात्करोति; नित्यप्राप्तस्य प्राप्त्यन्तरायोगादिति ।

अयं भावः—साधुत्वव्यवस्थापनपूर्वकमसाधुशब्देभ्यः साधुशब्देषु व्याकरणज्ञानेन पृथक्क्रियमाणेष्वपभ्रंशकृतो यः साधुशब्दानां विशेषज्ञानतिरोधानजननेन परिभवरूप उपघातस्तदपगमादाविर्भूते धर्मविशेषे नियत ऐहलौकिकः पुत्रपश्वादिप्राप्तिलक्षणः पारलौकिकश्च स्वर्गादिप्राप्तिलक्षणोऽभ्युदयः ।

तथा चागमः—"एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामुधुग् भवति" इति ।

अत्र लोकशब्देनायं लोको गृह्यते । समुच्चयार्थकचकारसन्निधानात् शब्दसंस्कारस्याभ्यासाच्च शब्दपूर्वकं शब्दविषयञ्च योगमधिगम्य तस्यापि च साधुशब्दस्य विकारत्वेनासत्त्वात् तदधिष्ठानभूता परब्रह्मरूपा या सत्ता, तदेव परमार्थभूतं तत्त्वम् , तत्प्रभवा या प्रतिभा तद्गोचरत्वात् प्रतिभापदेनापि व्यपदेश्यां सर्वेषां षण्णां प्रागुक्तानां जन्मादीनां भावविकाराणां प्रकृतिम् = उपादानकारणं सर्वस्य साध्यसाधनरूपभेदद्वयभिन्नस्य जगतः सर्गस्थितिलयानुकूलशक्तिसम्पन्नां परब्रह्मरूपां सत्तां सम्यगवबुध्य नियता परब्रह्मप्राप्तिरूपस्य परस्य क्षेमस्य प्राप्तिरिति ।

**न जात्वकर्तृकं कश्चिदागमं प्रतिपद्यते।**
**बीजं सर्वागमापाये त्रय्येवातो व्यवस्थिता।। १३२ ।।**

वाचः संस्कारमाधाय वाचं ज्ञाने निवेश्य च।
विभज्य बन्धनान्यस्याः कृत्वा तां छिन्नबन्धनाम्।।
ज्योतिरान्तरमासाद्य च्छिन्नग्रन्थिपरिग्रहः।
परेण ज्योतिषैकत्वं छित्वा ग्रन्थीन् प्रपद्यते।।१३१।।

सर्वप्रवादेष्वागमवाक्यानां प्रणेतृपरिग्रहेण पौरुषेयत्वमभ्युपगम्यते। वेदवाक्यानि तु चैतन्यवदपौरुषेयाणि। तान्यागमान्तराणां प्रणेतृषु विच्छिन्नेष्वागमान्तरानुसन्धाने बीजवदवतिष्ठन्ते।।१३२।।

आह चैनमर्थं कश्चित्—**प्राणवृत्तिमित्यादि।**

तत्राद्यपद्यस्याशयस्तु—बुद्धौ प्राणे च शब्दस्यावस्थानमित्युक्तं प्राक् "तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता" (११७) इत्यत्र यच्च शब्दतत्त्वं प्राणवृत्तिमतिक्रान्तं परावाग्रूपं, तस्य दूरीभूतैव करणवृत्तिगोचरवैखरीरूपशब्दगतस्य भेदरूपस्यासत्यताऽवबोधात् प्राणवृत्तिमतिक्रान्त इत्यनेन बुद्धिस्थ एव शब्दे व्यवस्थितः।

तत्र बुद्धावपि शब्दात्मा प्रत्यवभासमानो गृहीतवर्णक्रम एव प्रत्यवभासत इति तस्यापि गृहीतवर्णक्रमस्य बुद्धिस्थस्य शब्दस्य व्यवच्छेदार्थमाह—क्रमसंहारयोगेणेति।

बुद्धिस्थे शब्दे गृह्यमाणे यो वर्णक्रमस्तस्य यः संहारः प्रविलयस्तस्योपायभूतो यो योगस्तेन संहृतवर्णक्रमं परावाग्रूपमात्मानमात्मनि बुद्धौ संहृत्य क्रमसंहारपूर्वकं बुद्धौ निवेश्य, बुद्धिगोचरीकृत्येत्यस्य परेण ज्योतिषैकत्वं प्रपद्यत इति तृतीयपद्यस्थवाक्येन व्यवहितेन सम्बन्धः।

तत्र परेण ज्योतिषैकत्वप्राप्तौ क्रममाह द्वितीयतृतीयपद्याभ्याम्। तत्र पूर्वं वैखरीरूपाया वाचो व्याकरणेन संस्कारम्, असाधुशब्देभ्यः पृथक्कृत्य ज्ञानरूपम्, आधाय कृत्वा, तामेव च वाचं ध्यानक्रमेण ज्ञाने, ज्ञायतेऽनेनेति करणव्युत्पत्त्या बुद्धौ, मध्यमारूपेण हृद्देशावच्छेदेन, पश्यन्तीरूपेण च नाभिदेशावच्छेदेन प्रत्यवभासमानसूक्ष्मरूपवर्णक्रमवतीमेव निवेश्य, वाचं करणात् प्राणे प्राणाद् बुद्धौ ध्यानक्रमेण निवेश्येत्यर्थः।

ततः परमस्या वाचो मध्यमारूपायाः पश्यन्तीरूपायाश्च वाचः, बन्धनान्यविद्याहङ्कारादीनि विभज्य पृथक्कृत्य, अविद्यया हि संहृतक्रमे वागात्मनि वर्णक्रममध्यारोपयति, अहङ्कारेण च बुद्धिं परावाग्रूपचैतन्यात्मरूपतयाऽभिमन्यत इत्यविद्याहङ्कारौ वाचो बन्धनभूताविति।

एवं तां वाचं छिन्नबन्धनां विवेकज्ञानेन कृत्वा परावाग्रूपात्मरूपं ज्योतिरान्तरमासाद्य साक्षात्कृत्य छिन्नग्रन्थिपरिग्रहः छिन्नोऽविद्याऽहङ्कारादिरूपग्रन्थिपरिग्रहो यस्य स तथाभूतः सन् ग्रन्थीन् प्रागुक्तान् छित्वा परेण ज्योतिषैकत्वं साक्षात्कारेण प्रपद्यत इति।

अत्र प्रागुक्तोऽपि ग्रन्थिच्छेदपदार्थः "छित्वा ग्रन्थीन्" इति पुनरुपात्तः, परेण ज्योतिषैकत्वप्रतिपत्तावुपायत्वं प्रतिपादयितुम्।।१३१।।

ननु "एकः शब्दः सम्यग् ज्ञातः" इत्यादिवेदवाक्येभ्यः साधूनां धर्मसाधनत्वम्, "चत्वारि

**अस्तं यातेषु वादेषु कर्तृष्वन्येष्वसत्स्वपि ।**
**श्रुतिस्मृत्युदितं धर्मं लोको न व्यतिवर्तते ।। १३३ ।।**

---

इह प्रणेतृवदागमानामपि प्रवादेषु विच्छेदो (ना)भ्युपगम्यते । तेषु प्रत्यस्तमितेषु यावदन्ये प्रणेतारो नोत्पद्यन्ते, आगमान्तराणि च न प्रतायन्ते, तत्राप्यन्तराले श्रुतिविहितानि कर्माणि स्मृतिनिबन्धनाँश्च भक्ष्याभक्ष्यादीन् नियमान्नातिक्रामन्ति शिष्टाः ।।१३३।।

---

शृङ्गाः'' इत्यादिवाक्येभ्यश्च तेषामपवर्गसाधनत्वमागमप्रामाण्येन व्यवस्थाप्यते; किन्त्वागमान्तराण्यपि कापिलादीनि सन्ति । तेष्वेतत् सिद्धमित्याशङ्क्याह—**न जात्वकर्तृकं कश्चिदिति ।**

अस्यार्थः—कश्चिद् वादी सांख्यादिः स्वमागमं जातु कदाचिदपि, अकर्तृकमपौरुषेयं न प्रतिपद्यते न जानाति, न चाभ्युपगच्छति । पौरुषेयत्वादेव चासम्भाव्यं प्रामाण्यं कापिलाद्यागमस्य, भ्रमविप्रलिप्सादिपुरुषदोषसंक्रमसम्भवात् । अतः पौरुषेयत्वेनानित्यत्वात् सर्वागमापाये प्रलये सर्वेषामागमानां विनाशे सर्गादौ पुनरप्यागमानां कापिलादीनां प्रवृत्तौ त्रय्येव वेदरूप एवागमोऽपौरुषेयत्वेन नित्यः सर्वागमानां बीजं व्यवस्थिता। अत एव परमेश्वरः कपिलं सञ्जातमात्रं त्रयीज्ञानेनानुजग्राहेति श्रूयते—''ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्'' इति । उद्धृता चेयं श्रुतिः शारीरकभाष्ये तर्कपादारम्भे सांख्यमतखण्डनावसरे । अतस्त्रयीमूलकस्त्रय्यविरुद्धश्च कापिलाद्यागमस्यैकदेशः प्रमाणम् , अन्यत् तु पौरुषेयत्वेन सम्भावितपुरुषदोषत्वादप्रमाणमिति ।

अयं भावः—सर्वेषु दार्शनिकप्रवादेषु तत्तत्प्रवादमूलभूतानामागमवाक्यानां प्रणेतारः परिगृह्यन्ते, तेन तेषामागमानां पौरुषेयत्वमित्यभ्युपगम्यते । वेदरूपागमवाक्यानि तु चैतन्यवदनादीन्यपौरुषेयाणि च ।

तदुक्तं प्राक्—''चैतन्यमिव यश्चायमविच्छेदेन वर्तते'' (वा० प० १।४१) इत्यत्र, ''अनादिमप्यविच्छिन्नां श्रुतिमाहुरकर्तृकाम् ।'' (वा. प. १/१४५) इत्यत्र च ।

तानि त्वपौरुषेयत्वेन नित्यानि वेदवाक्यानि कालक्रमेण कापिलाद्यागमान्तराणां प्रणेतृषु विच्छिन्नेषु तदागमेषु च विच्छिन्नेषु पुनरपि युगान्तरे तदागमप्रणेतॄणां कपिलादिमहर्षीणां तत्तदागमानुसन्धाने बीजवदवतिष्ठन्त इति ।।१३२।।

तस्मादागमानां प्रणेतारो विच्छिद्यन्ते, नागमा इत्याह—**अस्तं यातेषु वादेष्विति ।**

अस्यार्थः—सर्वेष्वागमप्रवादेषु कालक्रमेणास्तं यातेषु तत्कर्तृषु चान्येष्वसत्स्वपि भूतानां भविष्यतां चागमानामन्तरालकाले श्रुतिस्मृत्युदितं धर्मं शिष्टो लोको न व्यतिवर्तते नातिक्रामति, किन्तु तदानीमपि त्रयीरूपस्यागमस्यापौरुषेयत्वेन नित्यस्य सर्वागमानां मूलस्य सत्त्वात् तं तं धर्ममनुतिष्ठत्येवेति ।

अयं भावः—इह प्रवादेष्वागमप्रणेतॄणामिव तत्प्रणीतागमानामपि विच्छेदोऽभ्युपगम्यते । तेषु प्रणेतृषु तदागमेषु च प्रत्यस्तमितेषु यावदन्ये प्रणेतारो नोत्पद्यन्ते, आगमान्तराणि च न प्रतायन्ते,

**ज्ञाने स्वाभाविके नार्थः शास्त्रैः कश्चन विद्यते ।**
**धर्मो ज्ञानस्य हेतुश्चेत् तस्याम्नायो निबन्धनम् ।। १३४ ।।**

अनुपदेशं हि कस्यचिज्ज्ञानमभ्युपगच्छतामहितप्रतिषेधार्थानां हितप्रतिपादनार्थानां चोपदेशशास्त्राणां वैयर्थ्यं प्रसज्यते ।

यदि हि धर्मविशेषात् कस्यचिदेव पुरुषस्योपदेशमन्तरेण ज्ञानमुत्पद्यते, केचित् तु पुरुषाः शास्त्रेण प्रतिपादयितव्याः, तदा तस्य पुरुषविशेषहेतोर्धर्मस्य व्यवस्थितेन निबन्धनेन भवितव्यम् । विच्छिद्यन्ते चान्यानि निबन्धनानि । तस्मादाम्नायनिबन्धनं धर्ममासेवमानाः पृथक्प्रवादानां प्रणेतारस्तां तां बहुविकल्पां सिद्धिं लभन्ते ।।१३४।।

तत्राप्यन्तराले काले श्रुतिविहितानि कर्माणि शाब्दमशाब्दं वा स्मरणमङ्गीकृत्य स्मृतिनिबन्धनाँश्च भक्ष्याभक्ष्यादिनियमान्नातिक्रामन्ति शिष्टाः । तेऽपि कपिलादयो वेदमाश्रित्यैव कर्मसु प्रवृत्तवन्तः, तदानीं पौरुषेयागमानामभावादिति ।।१३३।।

तैरपि कपिलादिभिरविच्छिन्नो वेदाख्य आगमोऽभ्युपगन्तव्य इत्याह—**ज्ञाने स्वाभाविक इति ।**

अस्यार्थः—यतः कपिलादय आगमं प्रणीतवन्तो मन्दानां प्रबोधाय, तत एव ज्ञायते ते खल्वात्मनो ज्ञानातिशयमलौकिकमस्वाभाविकं च स्वीकुर्वन्तीति । तच्च तेषां ज्ञानं यदि स्वाभाविकं स्यात्, तदाऽन्येषामपि शास्त्रं विनैव कपिलादीनामिव स्वभावत एव स्यादित्यनर्थकं शास्त्रप्रणयनमित्येतदुक्तम्—**ज्ञाने स्वाभाविके नार्थः शास्त्रैः कश्चन विद्यत इति ।**

कपिलादीनां ज्ञाने स्वाभाविके शास्त्रैः कश्चनार्थः किञ्चित् प्रयोजनं न विद्यते । कपिलादीनां यथा स्वभावत एव शास्त्रं विना ज्ञानं जातम् , तथाऽन्येषामपि शास्त्रं विना स्वभावत एव, ज्ञानस्य सम्भवात् । कपिलादीनां ज्ञानस्य हेतुधर्मश्चेत् , तस्य कपिलादीनां धर्मस्याम्नायो वेदो निबन्धनमित्यतोऽपि शास्त्रप्रणयनं व्यर्थमिति ।

एतदुक्तं भवति—येषां धर्मानुग्रहस्तेषामेव ज्ञानातिशयः । स च धर्मानुग्रह आगमप्रणेतॄणामेव भवति, न तु वेदमधीत्यानुष्ठितकर्मणां मन्दावबोधानामिति वक्तुं न शक्यते, कपिलादीनां धर्मस्यापि वेदतदध्ययनतदर्थानुष्ठानमन्तरेण सम्भवादिति ।

अयं भावः—शास्त्रोपदेशं विना स्वभावत एव कस्यचित् कपिलादेर्ज्ञानं भवतीत्यभ्युपगच्छतां मतेऽहितप्रतिषेधार्थानां चोपदेशशास्त्राणां वैयर्थ्यं प्रसज्यते, अन्येषामपि स्वभावत एव कपिलादिवज्ज्ञानसम्भवात् ।

यदि तु धर्मविशेषादागमप्रणेतॄणां कपिलादीनामेव शास्त्रोपदेशमन्तरेण ज्ञानमुत्पद्यते, अन्ये पुरुषा धर्मविशेषाभावाच्छास्त्रेणैवाहितप्रतिषेधहितविध्यादीनर्थान् प्रतिपादयितव्या इत्युच्यते, तदा पुरुषविशेष आगमप्रणेतरि कपिलादौ शास्त्रोपदेशमन्तरेण ज्ञानहेतोर्धर्मस्य केनचिन्निबन्धनेनान्यपुरुषेभ्यो व्यावृत्तेन भाव्यम् , वैशेषिकादिरूपान्यागमनिबन्धनो ज्ञानविशेषः कपिलादेरिति तु न वक्तुं शक्यते, वैशेषिकादिनिबन्धनज्ञानस्य सांख्यशास्त्रीयज्ञानस्य च परस्परं वैलक्षण्यात् । तस्माद् वेद-

**वेदशास्त्रावरोधी च तर्कश्चक्षुरपश्यताम् ।**
**रूपमात्राद्धि वाक्यार्थः केवलान्नावतिष्ठते ।। १३५ ।।**

आगमवाक्यानामेव हि शब्दार्थप्रविभागव्यवस्था तर्केण क्रियते । स चायमर्वाग्दर्शनानामनुग्रहे वर्तत इति पूर्वैर्न्यायविद्यास्वित्थम्भूतस्तर्क आश्रितः ।

तत्र यावाननुगम्यमानस्तर्कः स्वशास्त्रं न बाधते, तावाननुगन्तव्यः । तर्कातीतमपि बहु श्रद्धानुगम्यं सर्वेषु शास्त्रेषु दृश्यते ।

अथ तर्काननुगमेन यः केवलमागमं प्रमाणं करोति, तस्य किं प्रयोजनम् ? आगमवाक्यानां सम्यक् प्रतिपत्तिः प्रयोजनम् । वाक्यानां हि तुल्यरूपत्वेऽपि सति निमित्तान्तराच्छक्तिर्भिद्यते ।

तत्र यो रूपादेव केवलाद् वाक्यार्थं प्रतिपद्यते, प्रकरणसामर्थ्यादि नापेक्षते, स विवक्षिताविवक्षितयोः सम्मोहमापद्यते ।।१३५।।

---

निबन्धनं धर्ममासेवमानाः पृथक् सिद्धान्तानां प्रणेतारः कपिलादयो महर्षयस्तां तां बहुप्रकारां ज्ञानविशेषरूपां सिद्धिं लभन्त इत्येव वक्तव्यम् । ततश्चाम्नायस्य सर्वागममूलत्वादपौरुषेयत्वाच्च तस्यैव प्रामाण्यम् । आगमानां तु पौरुषेयतया पुरुषदोषशङ्कयाऽसम्भाव्यं प्रामाण्यमिति ।।१३४।।

एवमवस्थापित आम्नायस्य प्रामाण्ये तीर्थिकान्तरप्रोक्तागमस्य तत्कल्पितस्य तदागममूलस्य तर्कस्य चाप्रामाण्येऽभिप्रेतं तर्कप्रामाण्यं कथयति—**वेदशास्त्राविरोधी** चेति ।

अस्यार्थः—ये श्रवणमात्राद् वेदार्थान् द्रष्टुमसमर्थास्तेषामपश्यतां वेदशास्त्राविरोधी तर्कश्चक्षुर्वेदार्थदर्शने । अत्र वेदशास्त्राविरोधी चेत्यनेन शास्त्रान्तरेषु प्रकल्पितं तर्कं निरस्य वेदार्थव्यवस्थापकस्य मीमांसायां स्थापितस्य श्रुतिलिङ्गादेस्तर्कस्य प्रामाण्यमुद्भावयति । हि यतः, केवलात् तर्करहिताद् रूपमात्रात् शब्दस्वरूपमात्रात् श्रूयमाणादाम्नायस्य वाक्यार्थो नावतिष्ठते, वाक्यार्थो व्यवस्थितो निश्चितो न भवति, सन्दिग्ध एव तिष्ठति । वेदशास्त्राविरोधी चेत्यत्र कर्मधारयगर्भः षष्ठीतत्पुरुष इति ।

अयं भावः—आगमवाक्यानां शब्दार्थप्रविभागव्यवस्था = अयं वाक्यार्थो विवक्षितोऽयं चाविवक्षित इति शब्दार्थप्रविभागव्यवस्था तर्केणैव हि क्रियते । स चायं तर्कोऽर्वाग्दर्शनानाम् = बाह्यदृष्टीनाम् , अनुग्रहार्थम् = शब्दार्थप्रविभागव्यवस्थारूपानुग्रहाय प्रवर्तत इति तेषामनुग्रहार्थं पूर्वैर्जैमिन्यादिभिर्न्यायविद्यासु = तर्कव्यवस्थापकविद्यासु वेदशब्दोपात्तार्थाविपरीतप्रतिपत्तिहेतुः श्रुतिलिङ्गादिरूपस्तर्को वेदवाक्यार्थव्यवस्थापनार्थमाश्रितः ।

तत्र यावान् तर्को वेदवाक्यार्थव्यवस्थापनायानुगम्यमानः स्वानुग्राह्यं शास्त्रं न बाधते, तावाननुगन्तव्यः । यतस्तर्कातीतमपि श्रद्धानुगम्यमीश्वरादृष्टादिकं बहु वस्तु सर्वेषु शास्त्रेषु दृश्यते, तत्र तर्कः शास्त्रं प्रबाधमानो नानुगन्तव्यः ।

तदुक्तम्—''अचिन्त्याः खलु ये भावा न ताँस्तर्केण योजयेत्'' ।। इति ।

**सतोऽविवक्षा पारार्थ्यं व्यक्तिरर्थस्य लैङ्गिकी ।**
**इति न्यायो बहुविधस्तर्केण प्रविभज्यते ।। १३६ ।।**

कर्तुरीप्सिततमं कर्म, तस्यापत्यम् , ग्रहं सम्मार्ष्टि, कर्मणा यमभिप्रैति स सम्प्रदानम् । "स्त्रियं ये चोपजीवन्ति प्राप्तास्ते मृतलक्षणम्" इति लिङ्गसंख्याकालानामविवक्षा, क्वचिच्च विवक्षेति लक्षणव्यवस्थापनं तर्काधीनम् ।

तथा च—"नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इति कालोपलक्षणार्थं नक्षत्रदर्शनं तत् प्रधानस्यान्यथासिद्धौ परार्थत्वाद् दृश्यमानेषु ज्योतिःषु कालविशेषपरिच्छेदे सति तत् क्रियते ।

---

अथ यस्तर्कगोचरेष्वप्यर्थेषु तर्कं विहाय केवलमागममेव प्रमाणीकरोति, तस्य किं प्रयोजनं सिद्ध्यतीति प्रश्नस्योत्तरमागमवाक्यानामर्थस्य सम्यगप्रतिपत्तिस्तस्य फलमिति ।

तथा हि—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति, "उद्भिदा यजेत पशुकामः" इति च वाक्ययोस्तुल्यरूपत्वेऽपि सति निमित्तान्तरात् स्वार्थप्रतिपादने शक्तिर्भिद्यते ।

तथा हि—ज्योतिष्टोमयागस्योत्पत्तिविध्यन्तरसत्त्वेनोभयविधाने गौरवान्नोत्पत्त्यधिकारविधित्वम्, किन्त्वधिकारविधित्वमेव; "उद्भिदा यजेत पशुकामः" इत्यत्र तूत्पत्तिवाक्यान्तराभावेनान्यथाऽनुपपत्त्योत्पत्त्यधिकारविधित्वमिति तर्कं विना सम्यग् वाक्यार्थाप्रतिपत्तेः ।

ततश्च यो रूपादेव केवलाद् वाक्यार्थं प्रतिपद्यते, लिङ्गप्रकरणादिकं तु तर्कं सम्यग्वाक्यार्थबोधाय नापेक्षते, स को वाक्यार्थो विवक्षितः, कस्त्वविवक्षित इत्यत्र सम्मोहमापद्यते, यतस्तदेव शब्दरूपमन्यत्र प्रयुज्यमानं भिन्नार्थमवगम्यते । तद्यथा कौण्डपायिनामयनगताऽग्निहोत्रवचनोऽग्निहोत्रशब्दो नैयमिकाग्निहोत्रवचनश्च भिन्नार्थो विवक्षित इति प्रकरणादिरूपात् तर्कादेव व्यवतिष्ठत इति ।।१३५।।

वेदशास्त्राविरोधिनस्तर्कस्य वाक्यार्थव्यवस्थापकत्वं प्रागुक्तं कतिपयतर्कोदाहरणमुखेन प्रतिपादयति—**सतोऽविवक्षेति** ।

अस्यार्थः—सतोऽविवक्षा शब्देनोपात्तस्याप्यर्थस्याविवक्षा, पारार्थ्यम्, शब्दोपात्तस्यार्थस्योपलक्षणता, अर्थस्य लैङ्गिकी व्यक्तिः, शब्दात् सामान्येनावसीयमानस्यार्थस्य वाक्यान्तरप्रकल्पनेन विशेषाभिव्यक्तिरिति बहुविधो न्यायः । नीयतेऽध्यवसायगोचरतामिति न्यायः सिद्धान्तः । बाहुलकात् कर्मणि घञ् । तर्केण प्रविभज्यते प्रविभक्तः परस्परव्यावृत्तरूपो ज्ञायत इति ।

तत्र सतोऽविवक्षा यथा 'कर्तुरीप्सिततमं कर्म' (पा० १/४/४९) इत्यत्र नपुंसकलिङ्गस्य शब्देन प्रतिपादितस्यापि विवक्षा नास्ति, लिङ्गसर्वनामत्वेन पदसाधुत्वार्थं नान्तरीयकतयोपादानात् । तेन स्त्रीपुंसयोरपि कर्मत्वं भवति । घटीं करोति, कटं करोतीति । यथा "कर्तुरीप्सिततमम्" (पा० १/४/४९) इति पदद्वयेऽप्येकत्वसंख्याऽविवक्षिता । तेन कर्त्रोः कर्तॄणाञ्च ईप्सिततमयोः, ईप्सिततमानाञ्च कर्मत्वं भवति । देवदत्तयज्ञदत्तौ यज्ञदत्तादयश्च घटौ घटान् कुरुतः कुर्वन्तीति । तथा

'काकेभ्यो दधि रक्ष्यताम्' इत्युपघातप्रतिषेधस्य चिकीर्षितत्वात् काकेष्वसत्स्वपि श्वादिभ्यो रक्ष्यते। 'पात्राणि सम्मृज्यन्ताम्' इति भुजिक्रियाङ्गोपसंहारपरत्वात् पात्राभावेऽप्यङ्गान्तराण्युपसंह्रियन्ते।

लैङ्गिकी खल्वपि व्यक्तिः। अक्ताः शर्करा उपदधाति'' इति सर्वाञ्जनद्रव्यप्रसङ्गे ''तेजो वै घृतम्'' इति लिङ्गाद्विशेषप्रतिपत्तिरित्येवंप्रकारो न्यायस्तर्केण प्रविभज्य लक्षणं व्यवस्थाप्यते ॥१३६॥

---

ईप्सितशब्देऽपि यदीच्छार्थो मत्यर्थः, तदा ''मतिबुद्धिपूजार्थेभ्यश्च'' (पा० ३/२/९८८) इति विहितस्य वर्तमाने क्तस्याप्यविवक्षा। तेन यच्चाप्तुमिष्यमाणं यच्चेष्टं घटं करिष्यत्यकार्षीदिति, तत्रापि कर्मसञ्ज्ञा भवति। अथेप्सितशब्दे भूते क्तः, मत्यर्थस्य मननार्थकत्वात्; तथा तस्याविवक्षायां वर्तमानभविष्यतोरपि सिद्धा कर्मसंज्ञेति।

किञ्च, ''तस्यापत्यम्'' (पा० ४/१/९२) इत्यत्र तस्येति पुंस्त्वेन निर्देशः, अपत्यमिति नपुंसकत्वेन, द्वयोरपि चैकत्वेन निर्देशः, लिङ्गसंख्योः शब्दोपात्तयोरप्यविवक्षाऽत्र। तेन राधेय इति स्त्रिया अपत्येऽप्यपत्यप्रत्ययो भवति, दाक्षीति स्त्रीरूपेऽप्यपत्यप्रत्ययो भवतीति।

किञ्च, 'ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहगता एकत्वसंख्याऽविवक्षिता। गृह्णाति सोमरसं यत्तद् ग्रहमिति व्युत्पत्त्या पचाद्यचि ग्रहमिति सोमपात्रस्य संज्ञा। एकत्वसंख्याया अविवक्षणाच्च बहूनामपि पात्राणां सम्मार्गः।

किञ्च ''कर्मणा यमभिप्रैति स सम्प्रदानम्'' (पा० १/४/३२) इत्यत्र यमिति पदे लिङ्गसंख्ययोरविवक्षा, अभिप्रैतिपदे च बर्तमानकालस्याविवक्षा। तेन तद् यां वाऽभिप्रैष्यति, अभिप्रागाद् वा, तत्र सर्वत्र सिद्धा सम्प्रदानसंज्ञा, देवदत्तो विप्राय वस्त्रं गां वा दास्यति, अदाद् वेति।

किञ्च, ''स्त्रियं ये चोपजीवन्ति प्राप्तास्ते मृतलक्षणम्'' इत्यत्रोपजीवन्तीत्यत्र वर्तमानकालस्याविवक्षा। तेन स्त्रियं य उपजीविष्यन्ति ये चोपजीविषुस्तेऽपि मृतलक्षणं प्राप्ता इति सिद्धं भवति।

अस्य वाक्यैकदेशस्यार्थः—ये पुमांसः स्वस्त्रियं वृत्तये उपजीवन्ति आश्रयन्ते, भार्योपार्जितधनेन जीवन्तीत्यर्थः। ते मृतस्य शवस्य लक्षणं सादृश्यं प्राप्ताः, जीवन्त एव शवा इति। अतः पुरुषैर्भार्या वृत्तये न नियोक्तव्या; किन्तु गृहकर्मण्येव, बालव्याधितवृद्धसेवादौ पाकादौ च नियोक्तव्येति सिद्धं भवतीति।

क्वचित् तु शब्दोपात्तस्यार्थस्य विवक्षा भवति। यथा ''गर्भाष्टमे ब्राह्मणमुपनयीत'' इति लिङ्गस्य विवक्षा। तेन स्त्रीनपुंसकयोर्नोपनयनम्। 'पशुना यजेत'' इत्यत्र टाप्रत्ययार्थैकत्वसंख्याया विवक्षा, तेन द्वाभ्यां बहुभिर्वा पशुभिर्नेज्यते। ''तेन दीव्यतिखनतिजयतिजितम्'' (पा०४/४/२) इत्यत्र भूतवर्तमानकालयोर्विवक्षा, तेनान्यस्मिन् काले न भवति।

पारार्थ्यस्योदाहरणम्—''नक्षत्रं दृष्ट्वा वाचं विसृजेत्'' इति। यद्यप्यत्र नक्षत्रदर्शनपूर्वको वाग्विसर्गः शब्दोपात्तः, तथाप्यत्र नक्षत्रदर्शनेन तद्योग्यः काल उपलक्ष्यते। तेन मेघाच्छन्ने नभसि नक्षत्रदर्शनयोग्ये काले वाग्विसर्गः क्रियते। तेन तदा, नक्षत्रमुदेति तदा वाचंयमेन वाग्विसर्गः कर्त्तव्य इति वाक्यार्थः सिद्धः।

**शब्दानामेव सा शक्तिस्तर्को यः पुरुषाश्रयः ।**
**शब्दाननुगतो न्यायोऽनागमेष्वनिबन्धनः ।। १३७ ।।**

शब्द एवोपदेष्टा, तत्सामर्थ्यमेवानुगच्छन्तो वक्तारो योग्यशब्दनिबन्धनयैव विवक्षया प्रवर्तन्ते ।

नियतां तु शब्दशक्तिमर्थप्रकरणलिङ्गवाक्यादिभिरनुगच्छति पुरुषे शब्दाश्रितमेव सामर्थ्यं पुरुषाश्रयोऽयं तर्क इति मन्यन्ते, शब्दशक्तिरूपापरिगृहीतस्तु साधर्म्यवैधर्म्यमात्रानुसारी सर्वागमोपघातहेतुत्वादनिबन्धनः शुष्कस्तर्क इत्युच्यते ।

अयं भावः—अत्र नक्षत्रं दृष्ट्वेत्यस्य तद्दर्शनयोग्यकाले लक्षणया तादृशकालविशिष्टो वाग्विसर्गो विधीयत इति कालस्यापि विधेयत्वेन प्राधान्यम्, नक्षत्रदर्शनस्य तु तादृशकालविशेषपरिच्छेदार्थतया पारार्थ्यमिति दृश्यमानेषु ज्योतिःषु कालविशेषपरिच्छेदे सति वाग्विसर्गः क्रियते; मेघादिना आवृत्ते नभसि नक्षत्रादर्शने त्वन्यतो घटिकादियन्त्रेणापि कालविशेषस्य परिच्छेदे सति स क्रियत इति नक्षत्रदर्शनस्य पारार्थ्यं कालविशेषे वाग्विसर्गस्य कर्तव्यताऽवधारणहेतुः ।

एवं "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र दध्युपघातप्रतिषेधश्चिकीर्षितो वक्तुरिति तस्य प्राधान्यम्, शक्यार्थघटितस्य च वाक्यार्थस्य तदर्थत्वात् पारार्थ्यमिति काकेष्वसत्स्वपि श्वादिभ्यो रक्ष्यते । एवं "पात्राणि सम्मृज्यन्ताम्" इत्यत्र भुजिक्रियाङ्गानाम् = तत्साधनानां सम्मृज्योपसंहारेऽभिसंहिते भुजिक्रियाङ्गोपलक्षणार्था पात्रश्रुतिः परार्थेत्यसत्सु सम्मार्जनीयेषु पात्रेषु भुजिक्रियाया अङ्गान्तराण्येव पीठादीनि सम्मृज्योपसंह्रियन्ते, भुजिक्रियाङ्गानां सम्मृज्योपसंहारस्यैव लक्ष्यार्थस्य तात्पर्यविषयत्वादिति ।

अथाविवक्षातः पारार्थ्यस्य को विशेष इति शङ्कायामविवक्षायां शब्दोपात्तस्य नान्तरीयकमुपादनमिति न तस्योपयोगः । पारार्थ्यं त्वन्योपलक्षणार्थतेति शब्दोपात्तस्याप्युपयोगोऽस्त्येवेति विशेष इत्युत्तरम् ।

अर्थस्य विवक्षितार्थस्य लैङ्गिकी लिङ्गबलाद् व्यक्तिरभिव्यक्तिर्भानमिति यावत् । यथा 'अक्ताः शर्करा उपदधाति' इत्यत्र सर्वाञ्जनद्रव्यग्रहणप्रसङ्गे 'तेजो वै घृतम्' इति घृतस्तुतिरूपाल्लिङ्गाद् घृतरूपस्याञ्जनद्रव्यविशेषस्य प्रतिपत्तिरित्येवंप्रकारो न्यायस्तर्केण प्रविभज्यते । तर्केण लक्षणं प्रविभज्य व्यवस्थाप्यत इति ॥१३६॥

"वेदशास्त्रविरोधी च तर्कश्चक्षुरपश्यताम्" (वा० प० १/१३५) इत्यत्र वेदशास्त्राविरोधिनस्तर्कस्य वाक्यार्थव्यवस्थापकत्वेनापश्यज्जननेत्रत्वं तेन चोपादेयत्वमुक्तम्, "सतोऽविवक्षा" (वा०प०१/१३६) इति पद्येन तु तादृशतर्कैकदेश उदाहृत आगमाविरोधी आगमाश्रित आगममूलकश्च । अथाधुना योऽयमर्थप्रकरणलिङ्गवाक्यादिरूपः शब्दार्थस्यानवच्छेदे शब्दशक्तिपरिच्छेदद्वाराऽर्थविशेषस्मृतिहेतुर्नानाविधस्तर्कः, सोऽपि तत्तच्छब्दशक्तिमूलक इति न पुरुषैः शक्तिमनपेक्ष्य कल्प्यत इत्येवं सर्वस्यापि तर्कस्यागममूलकत्वं प्रतिपादयन् शब्दाननुगतस्य तर्कस्य साधर्म्यवैधर्म्यमात्रानुसारिणः सर्वागमोपघातहेतुत्वादनिबन्धनत्वं तेन शुष्कत्वं चाह—**शब्दानामेव सा शक्तिरिति ।**

तद्यथा—

यदुदुम्बरवर्णानां घटीनां मण्डलं महत्।
पीतं न गमयेत् स्वर्गं किं तत् क्रतुगतं नयेत्॥

शब्देन वाच्यमित्युक्ते द्रामिलकेन भवति वक्तव्यमिति ॥१३७॥

---

अस्यार्थ:—य: पुरुषाश्रय: पुरुषनिष्ठ:, अर्थप्रकरणलिङ्गादिरूपस्तर्क: । तर्कस्यार्थप्रकरणादिरूपत्वञ्च विषयविषयिणोरभेदोपचारात्, सा शब्दानां शक्तिरेव, प्रतिपत्तृनिष्ठस्यार्थविशेषोपस्थापकस्यार्थप्रकरणलिङ्गादिरूपस्य तर्कस्य शब्दशक्त्यनुसारित्वेन प्रयोज्यप्रयोजकयोरभेदोपचारात् । यस्त्वनागमेष्वागमनिरपेक्षेषु पुरुषेषु, यद्वा वेदाख्यागमरहितेष्वर्थेषु, शब्दाननुगत आगमरूपशब्दमूलरहितो न्यायस्तर्क:, सोऽनिबन्धनो: मूलप्रमाणरूपनिबन्धनशून्य:, यद्वा अनिबन्धनो निर्विषय: । न शब्दावस्थिता शक्तिर्मूलत्वेन तस्य तर्कस्य विषय:, शुष्कतर्क इत्यर्थ: । तथा च शब्दमनुगत: शब्दशक्त्यनुसारेणावस्थापितो य: स एव न्याय: = तर्क:, अन्यस्तु शुष्कतर्क इति द्रष्टव्यम् ।

अयं भाव:—वस्तुत: शब्द एवोपदेष्टा, सर्वेषामपि प्रयोक्तॄणां शब्दप्रयोगे शब्दसामर्थ्यानुसारित्वात् ।

किञ्च, नान्यस्यानुमानादेरर्थप्रतिपादनसामर्थ्यमस्ति, अप्रतिष्ठितत्वात् । तथा च शब्दसामर्थ्यमेवानुगच्छन्तो वक्तारस्तत्तदर्थबोधनयोग्यशब्दनिबन्धनयैव विवक्षया प्रवर्तन्ते ।

किञ्च, प्रत्यर्थनियतां शब्दशक्तिमर्थप्रकरणलिङ्गवाक्यादिभिस्तर्कैरर्थविशेषावबोधार्थमनुगच्छति प्रतिपत्तृपुरुषे शब्दाश्रितं सामर्थ्यमेव "अयं प्रतिपत्तृपुरुषाश्रयोऽर्थप्रकरणादिरूपस्तर्क:" इति मन्मते लौकिका: ।

वस्तुतस्तु स तर्क: शब्दाश्रित एव, आरोपितस्तु प्रतिपत्तृपुरुषे लौकिकै: । तत्र लिङ्गवाक्यादिरूप: साक्षात् शब्दाश्रित:, अर्थप्रकरणादिरूपस्तु साक्षादर्थाश्रितोऽपि बोधकतया शब्दाश्रित इत्यवधेयम् ।

यस्तु शब्दशक्तिरूपमूलपरिग्रहशून्य: साधर्म्यमात्रानुसारेण वस्तु प्रसाधयन् तर्क:, स सर्वागमोपघातहेतुत्वादनिबन्धन: = मूलप्रमाणशून्य: शुष्कस्तर्क इत्युच्यते ।

यस्य हि आगम उपोद्बलको नास्ति, सोऽर्थप्रतिपत्तिं प्रति प्रसरणसामर्थ्यविरहात् शुष्कस्तर्क: शुष्ककाष्ठवन्नीरस: ।

शुष्कस्तर्को यथा—

यदुदुम्बरवर्णानां घटीनां मण्डलं महत्।
पीतं न गमयेत् स्वर्गं तत्किं क्रतुगतं नयेत्॥ इति ।

अयं भाव:—अन्यत्र हेतुभूयस्त्वे फलभूयस्त्वं दृष्टमिति तत्र यदि मद्यपानात् सौत्रामण्यां फलं भवति, तर्हि मद्यघटशतपानात् ततोऽपि भूय: फलं स्यात् , न च तथाऽस्ति, स्वीक्रियते वेत्ययं सौत्रामणीविधायकागमोपघाती शुष्कस्तर्क: ।

अस्य तर्कस्यानिबन्धनत्वेनानुपादेयत्वं चैवम् , आगमेन सौत्रामण्यां प्रतिनियतानि यान्य-

**रूपादयो यथा दृष्टाः प्रत्यर्थं यतशक्तयः ।**
**शब्दास्तथैव दृश्यन्ते विषापहरणादिषु ।। १३८ ।।**

ज्ञाने शास्त्रपूर्वके वा प्रयोगेऽभ्युदय इत्यागमात् प्रतिपन्नानामुपपत्तिमात्रमागमस्यैवोपोद्बलकमित्युच्यते । इहैषां रूपरसगन्धस्पर्शानां प्रत्येकं समुदितानां च दृष्टादृष्टफलाः प्रत्यर्थं यताः शक्तयः परिगृह्यन्ते । दृष्टफलास्तावद् विषौषध्ययस्कान्तवनस्पतिप्रभृतीनाम् ।

---

ङ्गानि विहितानि, तानि स्वेच्छया मद्यघटशतपानस्थले न सन्तीति न तत्र फलातिप्रसङ्ग इति तादृशतर्कनिरासप्रकारः ।

अन्योऽपि शुष्कतर्को यथा—साधुभिः शब्दैर्वाच्यमित्युक्ते द्रामिलकेन कुतो न वक्तव्यमिति यस्तर्कः समुत्पद्यते, स शुष्कतर्कः । द्रामिलको द्रविडानामपभ्रंशभाषारूपः शब्दः ।

क्वचित् तु टीकायां द्राविडकेन वक्तव्यमिति प्रयोगो दृश्यते । अस्यापि स एवार्थः ।

तत्र साधुभिर्वाच्यमिति यद्यर्थप्रतिपत्त्यर्थमेतत्, साऽर्थप्रतिपत्तिर्द्राविडकृतेष्वपभ्रंशेष्वविशिष्टा । अथ किञ्चित् प्रयोजनमनभिसन्धायैतत् प्रयुज्यते, तदापि द्राविडकृते तत्तुल्यम् । अभ्युदयहेतुत्वमतिसाधुष्वनिबन्धनम् = अमूलम् अभ्युपगम्यमानं साधुद्राविडप्रयोगयोरविशिष्टमिति यस्तर्कः, स शुष्कः । यतो ''न म्लेच्छितवै नापभाषितवै'' इत्यागमोऽपभ्रंशानां प्रत्यवायहेतुतामाहेति ।।१३७।।

एवम्—

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।।

इति मनुसम्मतं वेदशास्त्राविरोधिनस्तर्कस्य धर्मज्ञापने आम्नायसहायत्वमुपपाद्य ''एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति'' इत्यागमेन साधुशब्दप्रयोगस्य धर्मजननद्वाराऽभ्युदयहेतुत्वं यदुक्तम्, यच्च ''शास्त्रपूर्वके शब्दप्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन'' इति तदेव भाष्यवार्तिककृतोपपादितम्, तदेव ''धर्मो ज्ञानस्य हेतुश्चेत् तस्याम्नायो निबन्धनम्'' इति पूर्वकारिकोत्तरार्धस्मारितमुपपादयितुं धर्मोत्पत्तौ साधुशब्दानां सामर्थ्यमग्रिमपद्येन साधयिष्यन् प्रथमं शब्दानामन्यत्रार्थे सामर्थ्यं रूपादिसामर्थ्यदृष्टान्तसिद्धं दृष्टान्ततयोपन्यस्यति—**रूपादयो यथा दृष्टा इति ।**

अस्यार्थः—यथा रूपादयः रूपरसगन्धस्पर्शाः, प्रत्येकं यथासम्भवं समुदिता वा प्रत्यर्थं प्रतिप्रयोजनम्, प्रतिफलमिति यावत् । यतशक्तयः, नियतशक्तयो दृष्टाः, तथैव शब्दाः = गारुडादिमन्त्ररूपाः, विषापहरणादिषु विषापहरणस्वर्गगमनादिषु कार्येषु प्रत्यर्थं यतशक्तयो दृश्यन्त इति सम्बन्धः । तद्यथा तुल्ये रूपत्वे नीलं हरितं च चक्षुषोऽनुग्राहकम्, भास्वरं तूपघातकम् । तथा तुल्ये रसत्वे मधुरो रसः श्लेष्माणं जनयति, कटुको रसः पित्तम् । तुल्ये गन्धत्वे विषौषधिगन्ध आघ्रातो मूर्च्छयति, यथा क्लोमोपारोही हृदयं फालयन् तन्द्रेर्मजनकः क्लोरोफार्मगन्धः, मालतीमालादिगन्धस्तु संज्ञां प्रवर्धयति । एवं तुल्ये स्पर्शत्वे विषौषधिस्पर्शो विषकन्यास्पर्शो वा मारयति, चन्दनकुङ्कुमकस्तूरिकाद्यनुलेपनस्पर्शः श्यामास्पर्शश्च प्रह्लादयन् प्रोज्जीवयति । तदुक्तमायुर्वेदे—

अदृष्टफला मद्यतीर्थोदकादीनाम्। शब्दानामपि केषाञ्चिदुच्चारणे विषापहरणादि दृष्टं फलमुपलभ्यते। तथा सूक्तादीनामभ्यासादभ्युपगम्यते विशिष्टमदृष्टं फलम् ॥१३८॥

---

बाला प्राणप्रदा प्रोक्ता युवती प्राणधारिणी।
प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥ इति।

इति दृष्टफला रूपादीनां शक्तयः।

अदृष्टफला अपि रूपादिशक्तयः, यथा तुल्ये रूपयोगेऽजः श्वेतगुण एवालभ्यते वायव्यो नेतररूपयोगी। तथा तुल्ये स्पर्शत्वे मद्यस्पर्शादिभिरधर्मो जायते, तीर्थोदकस्पर्शेन तु धर्मः। एवं मद्यरसेनाधर्मः, "ब्राह्मणो मदिरां पीत्वा तप्तवर्णां सुरां पिबेत्" इति निषेधात्। सोमरसेन धर्मोऽधर्मनिवृत्तिश्च। तद्यथा स्मर्यते—

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥ इति।

एवं मद्यगन्धेनाधर्मः। तथा चाहुः—"आघ्राणं चार्धभोजनम्" इति। युज्यते चैतत्। तथा हि—गन्धो गुणत्वेन निष्क्रियो न स्वाश्रयं त्र्यणुकादिगतिं विना नासिकादेशं प्राप्तुं शक्नोतिः, तथा च प्राप्तो मद्यगन्धाघ्राणे मद्यावयवसम्पर्को नासिकायाः। श्राद्धपिण्डगन्धेन तु धर्म इति। तथा च स्मर्यते 'पिण्डानाघ्रायोत्थापयेत्' इति। तदेवं नीलरूपमधुररसयोः प्रत्येकं नियतशक्तिकत्वं दृष्टम्। विषौषधिमद्यादीनां तु रसगन्धस्पर्शानां यथासम्भवं मिलितानां यतशक्तित्वं दृष्टमिति। "शब्दास्तथैव दृश्यन्ते विषापहरणादिषु" इत्यत्र रूपादीनां दार्ष्टान्तिकतयोपात्ता अपि गारुडमन्त्रादिरूपाः शब्दा अग्रिमपद्ये वक्ष्यमाणानां दार्ष्टान्तिकानां साधुशब्दानां दृष्टान्ता एवेति "यथैषां तत्र सामर्थ्यम्" इत्यत्रैतत्पदेन विषापहरणादिकार्यजनकगारुडमन्त्रादिरूपशब्दानामपि रूपादिवद् ग्रहणमित्यवधेयमिति।

अयं भावः—साधुशब्दानां ज्ञाने शास्त्रस्मरणपूर्वके तेषां प्रयोगे वाऽभ्युदय इतीममर्थम् "एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इत्यागमात् प्रतिपन्नानां पुंसामस्यैवागमस्योपोद्बलकमुपपत्तिमात्रमनेन पद्येनोच्यते—**रूपादयो यथेति।**

इहैषां रूपरसगन्धस्पर्शानां प्रत्येकं समुदितानां च दृष्टादृष्टफलाः प्रतिफलं नियताः शक्तयो लोके परिगृह्यन्ते। यथोपदर्शितमस्यैव पद्यस्य व्याख्यावसरेऽनुपदमत्रैव। तत्र दृष्टफलास्तावद् विषौषध्ययस्कान्तवनस्पतिप्रभृतीनां शक्तयः। तत्र पूर्वं विषौषधिरसादीनां मूर्च्छामारणादिशक्त्युपदर्शनेन विषौषधेरपि सा प्रदर्शितैव। अयस्कान्तस्य च मणेः स्वसन्निहितायसः समाकर्षणे शक्तिर्दृष्टफलैव। वनस्पतीनाञ्च हरितनवपल्लवाढ्यानां रूपस्य नेत्रोपकारकत्वम्, रसस्य रोगनिवर्तकत्वम्, फलरसस्य च शरीरपोषकत्वम्, पत्रादिस्पर्शस्यापि शय्यालङ्कारादिभावेन सुखविशेषजनकत्वम्, पुष्पगन्धस्यापि सुरभेरसुरभेर्वा यथासम्भवं मदमूर्च्छादिजनकत्वमिति। अदृष्टफला मद्यतीर्थोदकादीनां शक्तयः प्रागुदाहृताः।

**यथैषां तत्र सामर्थ्यं धर्मेऽप्येवं प्रतीयताम् ।**
**साधूनां साधुभिस्तस्माद् वाच्यमभ्युदयार्थिनाम् ।। १३९ ।।**

सन्ति चेह दृष्टफलाः काश्चित् प्रतिशब्दं शक्तय इत्यागमादेवावसीयते । सत्यागमे साधूनामपि तथैवावसीयतां धर्मसाधनत्वमित्यतोऽभ्युदयार्थिभिरनतिशङ्कनीयां स्मृतिमविच्छिन्नशिष्टसमाचारां परिगृह्य व्यवहारे साधव एव शब्दाः प्रयोक्तव्याः ॥१३९॥

शब्दानामपि केषाञ्चिदथर्ववेदपठितगारुडादिमन्त्ररूपाणामुच्चारणे विषापहरणादि दृष्टं फलमुपलभ्यते, स्वार्थप्रतिपादने तेषां मन्त्राणामङ्गतेति नास्ति विषापहरणादिसामर्थ्यं तेषामिति सम्भाव्यते, तथापि तेऽर्थास्तैरेव शब्दैः प्रत्याय्यमाना विषं हरन्ति, नान्यैरिति ध्येयम् । तथाऽदृष्टफला अपि मन्त्ररूपाणां शब्दानां शक्तयः । तद्यथा—सूक्तादीनामभ्यासेन पाठादभ्युपगम्यते विशिष्टमदृष्टं फलमिति ॥१३८॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—**यथैषां तत्र सामर्थ्यमिति ।**

अस्यार्थः—यथैषां रूपादीनाम्, तत्र स्वस्मिन् कार्यविशेषे, प्रागुक्तरीत्या सामर्थ्यम्, एवं साधूनामपि धर्मे सामर्थ्यं प्रतीयताम् । तस्मात् साधूनां धर्मसाधनत्वादभ्युदयार्थिभिः शब्दप्रयोगादर्थावबोधातिरिक्तमभ्युदयमपि फलं कामयमानैः पुंभिर्न केवलं क्रतौ, किन्तु लौकिकव्यवहारेऽपि साधुभिरेव शब्दैर्वाच्यम्, नासाधुभिः, तेषामर्थावबोधकत्वेऽपि धर्माजनकत्वेनाभ्युदयरूपफलं प्रत्यकरणत्वात् । तस्मादविच्छिन्नपरम्परां व्याकरणस्मृतिमालम्ब्य साधव एव शब्दाः प्रयोक्तव्या इत्यर्थः । क्रतौ तु 'नानृतं वदेत्' इति निषेधात् साधव एव प्रयोक्तव्या इत्यस्त्येवेति ।

अयं भावः—सन्ति तावदिह लोके विषापहरणादिरूपदृष्टफला अथर्ववेदपठितानां मन्त्राणामर्थवतामनर्थकानां वा शाबरमन्त्राणां शक्तय इत्यागमादेवावसीयते । एवं साधूनां शब्दानां धर्मे शक्तिरपि "एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इत्यागमादेवावसीयतामित्यतो व्यवहारेऽप्यभ्युदयार्थं साधुशब्दानेव प्रयुञ्जानैः शिष्टैः साधुशब्दनिर्णयाय मूलत्वेन तत्तत्काले परिगृह्यमाणां शिष्टपरिग्रहादेवानतिशङ्कनीयामविच्छिन्नपरम्परां व्याकरणस्मृतिं परिगृह्याभ्युदयार्थिभिः पुंभिर्व्यवहारे साधव एव शब्दाः प्रयोक्तव्या इति परिसंख्याविधिः कल्प्यते, "एकः शब्दः सम्यग् ज्ञातः" इत्यादिभूतार्थवादवाक्यात् । यत् स्तूयते तद्विधीयत इति हि स्थितिः । स्तूयते चात्र साधुशब्दप्रयोगः, प्राप्तश्चार्थावबोधार्थमसाधुशब्दप्रयोगवत् साधुशब्दप्रयोगोऽपि लोकत एवेति "पञ्च पञ्चनखा भक्ष्याः" इतिवत् परिसंख्याविधिर्व्याकरणे सर्वत्र विधिसूत्रेषु शब्दप्रयोगांशे । यणादिरूपविधेयांशेऽपूर्वविधिरेव । रात्रिसत्रन्यायेन चात्राप्यार्थवादिकमेव फलं कामप्राप्तिरूपमिति ।

तद्यथा रात्रिसत्रे—"प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यार्थवादिकं फलं प्रतिष्ठारूपं कल्प्यत इति ॥१३९॥

**सर्वोऽदृष्टफलानर्थानागमात् प्रतिपद्यते ।**
**विपरीतं च सर्वत्र शक्यते वक्तुमागमे ।। १४० ।।**
**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः ।**
**अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम् ।। १४१ ।।**

---

तत्र केचिदाहुः—यथैषां विषापहरणादिषु सामर्थ्यमधर्मेऽप्येवं कस्मान्न प्रतीयते ? एतस्मादेव दृष्टान्तादस्तु शक्तिविपर्ययप्रतिपत्तिरिति । एतस्मिन् पर्यनुयोगे प्रतिविधीयते— सर्वेष्वागमेषु दृष्टादृष्टफलासु प्रतिपत्तिषु विपरीतफलप्राप्तिः शक्यते प्रसङ्क्तुम् । तस्मादागमं कञ्चित् प्रमाणीकृत्य व्यवस्थिते तस्मिन् या काचिदुपपत्तिरुच्यमाना प्रतिपत्तावुपोद्बलकत्वं लभते ॥१४०॥

यथैव भक्ष्याभक्ष्यगम्यागम्यवाच्यावाच्यादिविषया व्यवस्थिताः स्मृतयः, यासु निबद्धं समाचारं शिष्टा न व्यतिक्रामन्ति, तथेयमपि वाच्यावाच्यविशेषविषया

---

ननु केषाञ्चिच्छब्दानां यथा विषापहरणादिसामर्थ्यं दृष्टम्, एवं तद्दृष्टान्तात् साधुशब्दानामधर्मे सामर्थ्यमिति शक्तिविपर्ययप्रतिपत्तिरेव कस्मान्न भवति इतीमं शुष्कतर्कं प्रतिविधातुमाह—**सर्वोऽदृष्टफलानर्थानिति ।**

अस्यार्थः—सर्वोऽपि जनः, अदृष्टफलान् =अदृष्टं फलं येषां तान्, यागाङ्गभूतान् दानहिंसादीनर्थान्, आगमात् प्रतिपद्यते । आगमादेव यागाङ्गभूताया दानक्रियायाः पशुहिंसायाश्च धर्मसाधनत्वं प्रतीयते, अदृष्टफलेषु दानहिंसादिषु प्रत्यक्षादिप्रमाणानामप्रवृत्तेरित्यर्थः ।

सर्वत्रैव चागमे आगमविषये दानहिंसादावदृष्टफले विपरीतमागमेन धर्मसाधनत्वेनाभिहितेऽधर्मसाधनत्वम्, अधर्मसाधनत्वेनाभिहिते च धर्मसाधनत्वं वक्तु शक्यते ।

एवञ्च यथा तत्र दानहिंसादीनां धर्मसाधनत्वप्रसिद्ध्यर्थमागमाविरोधी एव तर्कः समाद्रियते, न शुष्कस्तर्कः, अप्रतिष्ठितत्वात्, तथा प्रकृतेऽपि साधुशब्दानां धर्मसाधनत्वविषये शुष्कस्तर्को हेय इति ।

अयं भावः—यथा केषाञ्चिच्छब्दानां विषापहरणादिषु सामर्थ्यम्, तथा साधूनामधर्मे सामर्थ्यं कस्मान्न प्रतीयते ? अस्तु विषापहरणादिसमर्थशब्ददृष्टान्तेन साधुशब्दानां शक्तिविपर्ययप्रतिपत्तिरेवेत्यस्मिन् केषाञ्चित् पर्यनुयोगे प्रतिविधानभूतं पद्यमिदम्—**सर्वोऽदृष्टफलानर्थानिति ।**

सर्वेष्वागमेषु दृष्टादृष्टफलासु तत्तत्साधनप्रतिपत्तिष्वागमोपवर्णितशक्तिविपर्ययकल्पनया विपरीतफलप्राप्तिः शक्यते प्रसञ्जयितुमिति सर्वागमप्रामाण्योच्छेदप्रसङ्गः । तस्मादागमं कञ्चित् प्रमाणीकृत्य तदर्थे व्यवस्थिते तत्र काचिद् युक्तिरुच्यमाना आगमजन्यप्रतिपत्तावुपोद्बलकत्वम् = समर्थकत्वं लभत इत्यागमप्रामाण्यायागमाविरोध्येव तर्कं उपादेयः, न तु शुष्कतर्क इति ॥१४०॥

नन्वागमस्य श्रुतिस्मृतिरूपत्वेन द्वैविध्यात् कोऽसावागमः, येन साधूनां धर्मसाधनत्वेन प्रयोक्तव्यता बोध्यत इत्याशङ्क्य व्याकरणस्मृतिरूपमागमं तत्र प्रमाणमुपन्यस्यति—**साधुत्वज्ञानविषयेति ।**

व्याकरणाख्या स्मृतिः । स्मृतो ह्यर्थः पारम्पर्यादविच्छेदेन पुनः पुनर्निबध्यते, प्रसिद्धसमाचारायां स्मृतावनिबन्धनशब्दायां शिष्टसमाचाराविच्छेदेनैव स्मर्यते ॥१४१॥

---

अस्यार्थः—यः = आगमः साधूनां धर्मसाधनत्वे तत्त्वेन प्रयोक्तव्यत्वे च प्रमाणत्वेन जिज्ञास्यते, सा एषा साम्प्रतमुपलभ्यमाना पाणिनीयाऽष्टाध्यायी साधुत्वज्ञानविषया साधुत्वज्ञानं कार्यत्वेन विषयो यस्यास्तथाभूता व्याकरणस्मृतिः । इदं व्याकरणं शिष्टानां साधुशब्दानां प्रयोगरूपस्य समाचारस्याविच्छेदेन स्मृतिनिबन्धम्, स्मृतिः साधुशब्दानां स्मरणम्, निबन्धनं प्रणयने निमित्तं यस्य तथाभूतमित्यर्थः ।

अयं भावः—साधुशब्दप्रयोगरूपस्य शिष्टानां समाचारस्याविच्छेदेन वर्तमानत्वात् तस्मिन् तस्मिन् काले तैस्तैर्व्याकरणप्रणेतृभिः शिष्टसमाचारविषयान् साधुशब्दान् स्मृत्वा तत्तद्व्याकरणं प्रणीयत इति ।

अनेन पद्येनैतदुक्तं भवति । यथा 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्रापि नोच्यते—पञ्च पञ्चनखा भक्ष्यमाणा धर्माय, अन्येऽधर्मायेति । केवलं पञ्च पञ्चनखा भक्ष्या इत्युच्यते, किन्त्वस्मादेव वचनात् पञ्च पञ्चनखभक्षणस्य धर्मसाधनताऽवसीयते, यतो नेदं वचनं क्षुदपनयनाय क्षुत्प्रयुक्तत्वाद् वा विधीयते, श्वमांसादिष्वपि तुल्यत्वात् । यतो नापीदं वचनमनर्थकम्, व्यवस्थितप्रामाण्यत्वात् स्मृतीनाम्, तथा व्याकरणेऽप्येते शब्दाः साधवोऽमी नेति केवलमुच्यते, न चायमुपदेशोऽर्थावबोधप्रयुक्त इति विधिः, असाधुष्वपि तुल्यत्वात् । न चानर्थक्यम्, स्मृतित्वादस्येति साधुशब्दानां धर्मसाधनत्वबोधनद्वाराऽभ्युदयाङ्गतैव तेषां व्याकरणस्मृत्या बोध्यत इत्येवं साधवः प्रयुज्यमाना धर्मसाधनं नान्य इति शब्दोपनिबन्धनं विनापि साधुशब्दप्रयोगमात्रं विदधती व्याकरणस्मृतिरेव साधुशब्दानां धर्मसाधनत्वे प्रमाणमिति ।

अस्य पद्यस्य निगूढोऽभिसन्धिस्तु—शास्त्रेषु यथैव भक्ष्याभक्ष्यगम्यागम्यवाच्यावाच्यादिविषया व्यवस्थिताः स्मृतयः सन्ति, यासु निबद्धं समाचारं शिष्टा न व्यतिक्रामन्ति । तद्यथा—भक्ष्याभक्ष्यविषयाः पञ्च पञ्चनखा भक्ष्या इत्यादिकाः ।

गम्यागम्यविषया यथा—

रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च ।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते ॥

इत्यादिनिषेधदर्शनात् कुमार्यादयोऽगम्याः, अन्यास्तु गम्या इति ।

वाच्यावाच्यविषया यथा—

सत्यं ब्रूयात् प्रियं ब्रूयाद् न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥

इति वाक्येन सत्यं प्रियं च वाच्यम्, सत्यमप्यप्रियं न वाच्यम्, प्रियमप्यनृतं न वाच्यमिति यथायथं विधीयते निषिध्यते च । तथेयमपि व्याकरणस्मृतिर्वाच्यावाच्यविशेषविषया साधव एव वाच्याः, नासाधव इति । शिष्टैः पारम्पर्यादविच्छेदेन स्मृतो ह्यर्थः = शब्दार्थोभयरूपः पदार्थः, तदा तदा तैस्तैर्व्याकरणप्रणेतृभिः पुनः पुनर्निबध्यते ।

**वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।**
**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ।। १४२ ।।**

---

परैः संवेद्यं यस्याः श्रोत्रविषयत्वेन प्रतिनियतं श्रुतिरूपं सा वैखरी। श्लिष्टा व्यक्तवर्णसमुच्चारणा प्रसिद्धसाधुभावा भ्रष्टसंस्कारा च। तथा याऽक्षे या दुन्दुभौ या वेणौ (या) वीणायामित्यपरिमाणभेदा।

मध्यमा त्वन्तःसन्निवेशिनी परिगृहीतक्रमेव बुद्धिमात्रोपादाना। सा तु सूक्ष्मप्राण-वृत्त्यनुगता क्रमसंहारभावेऽपि व्यक्तक्रमपरिग्रहैव केषाञ्चित्।

---

तथा हि यस्यां शिष्टस्मृतौ साधुशब्दानां तत्तदर्थे सङ्केतरूपः समयः प्रसिद्धः, साधुशब्दानामेव प्रयोगरूप आचारश्च विषयत्वेन प्रसिद्धः, तस्यां शिष्टस्मृत्यां सत्यां नैतेष्वर्थेष्वसाधूनां गाव्यादीनां शक्तिः। न गाव्यादयोऽसाधवः प्रयोक्तव्या इति निषेधनिबन्धनशब्दाभावेऽपि साधुशब्दानामेव प्रयोगरूपस्य शिष्टसमाचारस्याविच्छेदेनैव तदा तदा तैस्तैर्व्याकरणप्रणेतृभिस्तेषां तेषां साधुशब्दानां तेषु तेष्वर्थेषु शक्तिः, शब्दविशेषाणामेव साधुत्वं प्रयोक्तव्यत्वं च स्मर्यत इति ॥१४१॥

एवमनादिपारम्पर्याविच्छेदायातिशिष्टसमाचारमूलकत्वेन स्मृतित्वेन च व्याकरणस्मृतेः प्रामाण्य-माख्यायास्या वैखर्यादिशब्दज्ञापकत्वमप्याह—**वैखर्या मध्यमायाश्चेति ।**

अस्यार्थः—वैखर्या मध्यमायाश्च पश्यन्त्याश्चानेकतीर्थभेदाया अनेकस्थानभेदायाः, तदुक्तम्—

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ।। इति।

त्रय्याः त्रयोऽवयवा वैखर्यादयो यस्या इति त्रयी, तस्या वाचः, एतद् व्याकरणम्, परम् उत्कृष्टम् अद्भुतञ्च, पदं पद्यते ज्ञायते येनेति व्युत्पत्त्या ज्ञानसाधनम्। पदम् आस्पद प्रतिष्ठारूपं वा व्याकरणमनेकप्रकारस्य शब्दराशेरास्पदं प्रतिष्ठेत्याश्चर्यमेतदिति।

अयं भावः—त्रिविधं तावत् शब्दस्य रूपम् = करणस्थम्, प्राणस्थम्, बुद्धिस्थं चेति। तत्र करणस्थं शब्दस्वरूपं वैखरी, यस्याः प्रतिनियतम् = विशिष्टानुपूर्वीनियतं पदान्तरव्यवच्छिन्नम्, श्रुतिरूपम् = श्रूयमाणं रूपं श्रोत्रग्राह्यत्वेनैव, न त्वनुमानादिना परैः प्रतिपत्तृभिः संवेद्यते। साऽपि द्विविधा—श्लिष्टा, व्यक्तवर्णसमुच्चारणा चेति। तत्र श्लिष्टा अव्यक्ताक्षरा। व्यक्तवर्णसमुच्चारणा नाम्नैव प्रसिद्धरूपा।

प्रकारान्तरेणापि द्विविधा—प्रसिद्धसाधुभावा, भ्रष्टसंस्कारा चेति। तत्र प्रसिद्धसाधुभावा व्याकरणेन संस्कृता। भ्रष्टसंस्कारा तु योऽयं शकटाक्षे परिवर्तते शब्दः, योऽयं दुन्दुभौ शब्दः, यो वेणौ शब्दः, यश्च वीणायां शब्द इत्येवमपरिमाणभेदा।

मध्यमा वाक् तु बुद्धिस्थत्वादन्तःसन्निवेशिनी बुद्धिमात्रोपादाना च, बुद्धेरेकत्वात् तदभेदाच्च मध्यमाया वाचो वस्तुतः क्रमशून्यत्वेऽपि क्रमपरिग्रहेणेव प्रत्यवभासमाना। तथा च मध्यमाया वाचो

प्रतिसंहतक्रमा सत्यप्यभेदे समाविष्टक्रमशक्तिः पश्यन्ती । सा चलाचला प्रतिलब्धसमाधानां चावृता विशुद्धा च, सन्निविष्टज्ञेयाकारा प्रतिलीनाकारा निराकारा च, परिछिन्नार्थप्रत्यवभासा संसृष्टार्थप्रत्यवभासा प्रशान्तसर्वार्थप्रत्यवभासा चेत्यपरिमाणभेदा ।

---

बुद्धिमात्रोपादानत्वेन बुद्धिस्थत्वम्, बुद्धिस्थत्वाच्चान्तःसन्निवेशित्वम्, तत्तद्वर्णानुपूर्वीरूपेण प्रत्यवभासनात् क्रमवत्त्वम्, एकबुद्धितत्त्वादव्यतिरेकादक्रमत्वमिति । सा तु वर्णानुपूर्वीरूपस्य क्रमस्य संहारसत्त्वेऽपि यतः सूक्ष्मया प्राणवृत्त्याऽनुगता, अतोऽव्यक्तक्रमपरिग्रहेव अधिष्ठानतया व्यक्तप्राणपरिग्रहेव च केषाञ्चिन्मते ।

तेषामयमाशयः—तत्तत्स्थानकरणान्यभिघ्नतोऽस्य प्राणस्य स्थूला वृत्तिरस्ति, यया वैखरी वाक् समुत्पद्यतेऽभिव्यज्यते वा । बुद्धौ त्वानुपूर्वीविशिष्टाकारपरिग्रहेण क्रमतः प्रत्यवभासमानः शब्दस्य संहारः = क्रमवत्तया समाहृतवर्णात्मकं रूपम् उपलक्ष्यते । न चैतद्रूपं शब्दस्य प्राणवृत्त्यनुग्रहमन्तरेणास्ति, शब्दस्य वस्तुतोऽनवयवत्वेन नित्यत्वेन चाक्रमत्वात्, प्राणस्य जन्यत्वेन सावयवत्वेन च संक्रमत्वसम्भवात् । तस्यैव क्रमस्य शब्देऽक्रमेऽध्यारोपसम्भवाच्च ।

किञ्च, यद्यप्येकबुद्धिनिष्ठत्वात् तदभेदाच्च नास्ति शब्दे वर्णानुपूर्वीरूपः क्रमः, तथापि व्यक्तमुपलभ्यमानया प्राणवृत्त्या तदानीमप्यस्ति क्रमपरिग्रहो मध्यमाया वाचः, स्वयमप्युपांशुतरं पठतः पुरुषस्य शब्दे. क्रमोपलम्भादिति ।

पश्यन्ती तु पराऽपरा चेति द्विविधा । तत्रापरा प्रतिसंहतवर्णक्रमा नाभिदेशस्था बुद्धिमात्रग्राह्या बुद्धिमात्रस्वरूपा च सत्यपि ग्राहकबुद्धेरभेदे समाविष्टा =समारोपितवर्णक्रमशक्तिः । सा च चलाचला, रूपादिषु हि विषयेष्ववार्वाग्दर्शनानां विक्षिप्ता बुद्धिरुत्पद्यते । सा च वाग्रूपानुविद्धत्वाद् वागेव । विक्षिप्तत्वाच्च चलाचला । अतिचञ्चला अपरा । सा च यदा प्रतिलब्धसमाधाना भवति = प्रतिलब्धं प्राप्तं समाधानं समाधिर्यया सा तथाभूता, तदा परा, योगिनामविक्षिप्ता शब्दपूर्वेण योगेन समाहितत्वात् = वैखरीरूपे शब्दे मनः समाधाय पश्यन्तीरूपे शब्दे क्रमेण मनसः समाधानात् । तत्र चलाचला, आवृता अविद्या अविद्यया आवृतं यत्क्रमवत्तया भासमानं वाग्रूपं तदनुविद्धरूपादिबुद्धिरूपत्वादपभ्रंशैर्वा समाकीर्णा तैरवष्टब्धा आवृता अपरा । विशुद्धा च परा, क्रमादिराहित्यरूपविशुद्धियुक्तपश्यन्तीरूपशब्दात्मकबुद्धिरूपत्वात् । सा च वाग्योगविदाम्, ते हि तामक्रमां वाचं वेदयन्ते । अपभ्रंशैर्वा विविक्ता विशुद्धा, तां वैयाकरणा वेदयन्ते । एषाऽप्यपरैव ।

किञ्च, सन्निविष्टज्ञेयाकाराज्ञेयाकारेण सन्निविष्टम् = अनुस्यूतं यथा ज्ञानम्, तथा शब्दोऽप्यर्थाकारेणानुस्यूत इयमपरैव ।

प्रतिलीनाकारा तु परा पश्यन्ती । तथा हि—तस्यां सद्भावेऽप्याकाराणां न तेऽवधार्यन्ते, तस्या एव हि सूक्ष्मत्वादनवधारणम् । किं पुनस्तत्सन्निविष्टाकाराणामिति प्रलयस्तेषामिति । निराकारा सेत्यपि केषाञ्चिन्मतम् । परिच्छिन्नार्थप्रत्यवभासाऽप्यपरा, परस्परविरुद्धस्वभावा वागादयोऽर्थाः प्रत्यवभासन्ते यस्यां बुद्धौ स तादृशी, यस्याः सकाशात् प्रकृताः = प्रजाता इव वागादयोऽर्था दृश्यन्त इति परिच्छिन्नाः ।

तत्र व्यावहारिकीषु सर्वासु वागवस्थासु व्यवस्थितः साध्वसाधुप्रविभागः पुरुषसंस्कारहेतुरेकेषाम् । परन्तु पश्यन्तीरूपमनपभ्रंशमसङ्कीर्णं लोकव्यवहारातीतम् । तस्या एव वाचो व्याकरणेन साधुत्वज्ञानलभ्येन वा शब्दपूर्वेण योगेनाधिगम्यत इत्येकेषामागमः ।

तथेतिहासेषु निदर्शनान्युपलभ्यन्ते—

गौरिव प्रक्षरत्येका रसमुत्तमशालिनी ।
दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता ।।

---

ननु सन्निविष्टज्ञेयाकारा इति प्रागुक्तम्, साम्प्रतं तु परिच्छिनार्थप्रत्यवभासेति । अत्र शब्दभेदेऽप्यर्थपुनरुक्तिरिति चेत्, न, सन्निविष्टज्ञेयाकारा इत्यत्र शब्देऽर्थाकार उक्तः, परिच्छिन्नार्थप्रत्यवभासा इत्यत्र तु ज्ञाने ज्ञेयाकारः, प्रतिलीनाकारा इत्यत्र तु ग्राह्यांशसम्भवस्तत्रोक्तः, परिच्छिन्नार्थप्रत्यवभासा इत्यत्र तु तथा प्रत्यवभासने बौद्धस्यार्थस्य ग्राहकरूपतोक्ता । संसृष्टार्थप्रत्यवभासाऽप्यपरा । अस्यां हि परस्परं संसृष्टौ शब्दार्थौ प्रत्यवभासेते । न ह्यस्यां बुद्धिस्वरूपायां पश्यन्त्यां पृथग्भावः शब्दार्थयोरिति सैव बुद्धिः परस्परसम्भिन्नशब्दार्थरूपा प्रत्यवभासत इति । एषाऽप्यपरैव । प्रशान्तसर्वार्थप्रत्यवभासा चेति परा । इत्येवं परापराभेदभिन्ना पश्यन्त्यपरिमाणभेदा ।

एषु च सर्वेष्वपरपश्यन्तीभेदेषु पश्यन्त्या बुद्धिरूपत्वमुक्तम् । तत्र वैखर्यादिषु तिसृष्वपि वागवस्थासु व्यावहारिकीषु व्यवस्थितो ज्ञातः प्रयुक्तश्च साध्वसाधुशब्दप्रविभागोऽदृष्टजननद्वारा पुरुषसंस्कारहेतुः । परं पश्यन्तीरूपं त्वनपभ्रंशमसङ्कीर्णं लोकव्यवहारातीतमिति न तस्य पुरुषसंस्कारकत्वम् । तथापि परं तत्पश्यन्तीरूपं व्याकरणेन साधुत्वज्ञानलभ्येन वा शब्दपूर्वेण वा योगेनाधिगम्यत इत्येकेषामागमः = सम्प्रदायः ।

येयं वैखरी वाक् तस्यां व्याकरणेन संस्क्रियमाणायां सर्वा अपि वाचः संस्कृता भवन्ति, तज्जातीयकत्वादिति व्याकरणेन साधुत्वज्ञानपूर्वकसम्प्राप्तयोगेन पश्यन्तीरूपं परमधिगम्यत इति ज्ञेयम् ।

एतदनुसारीणि इतिहासेषु निदर्शनान्युपलभ्यन्ते । भारते हि वासुदेवेनार्जुनस्यैतदुपदिश्यते । तद्यथा—**गौरिवेत्यादि ।**

अयञ्च श्लोकसन्दर्भो यद्यपि महाभारते आश्वमेधिके पर्वणि ब्राह्मणगीतासु एकविंशेऽध्याये वाक्यविपर्यासेन दृश्यते, तथापि महाभारतव्याख्यां नीलकण्ठीं वृषभदेवटीकाञ्च वाक्यपदीयहरिव्याख्याम् अनुसृत्य भारताविरोधेन व्याख्यायते । अयं च महाभारतस्यार्थतोऽनुवाद इत्थं प्रतीयते ।

यद्वा क्वचिद् ब्राह्मणगीताभ्योऽन्यत्र महाभारते वासुदेवार्जुनसंवादरूपेणेदृशानुपूर्वीक एव पठित इति वृषभदेवटीकादर्शनेनावधार्यते ।

अस्य श्लोकपञ्चकस्यार्थः—**गौरिवेति** । उत्तमत्वेन शालते शोभत इत्युत्तमशालिनी । उत्तमत्वं च वाचः सर्वकारणत्वात् । हि शुचिस्मिते इति ब्राह्मण्याः सम्बोधनम्, ब्राह्मणगीतासु तथैव दर्शनात् ।

वृषभदेवेन त्वेतत् पद्यं विवृण्वतोक्तम्—'शुचिस्मिता इति । स्मितं विकासः । स च तयोः शुचिः । एकस्या भविष्यत्वादपरस्या भेदनिरूपणे विवृतत्वात्' इति ।

एतयोरन्तरं पश्य सूक्ष्मयोः स्पन्दमानयोः ।
प्राणापानान्तरे नित्यमेका सर्वस्य तिष्ठति ॥
अन्या त्व (तु)प्रेर्यमाणैव विना प्राणेन वर्तते ।
जायते हि ततः प्राणो वाच्यमाप्याययन् पुनः ॥

---

अस्यार्थः—एकस्याः 'प्राणापानान्तरे' इत्यत्र वक्ष्यमाणाया वाचो मध्यमाया भविष्यत्वात्, अपरस्याः 'गौरिव प्रक्षरत्येका' इत्यत्र उक्ताया वाचो वैखरीरूपाया भेदनिरूपणे निमित्तभूते सति विवृतत्वाद् मध्यमातो भेदनिरूपणार्थं वैखरीरूपेण व्याख्याततत्वादित्येवमेतयोरुक्तवक्ष्यमाणयोर्वाचोर्लक्षणसाङ्कर्याभाव एव शौचमिति । स्मितं विकास इत्यत्रापि वैखर्या मध्यमापेक्षया विकासः, मध्यमायास्तु पश्यन्त्य-पेक्षयेत्यवधेयम् । एका कर्मकाण्डे पठिता मन्त्ररूपा वैखरी भारती, वाग्रूपा दिव्यादिव्येन रूपेणोपलक्षिता । इत्थम्भूतलक्षणे तृतीया । तत्र वाचो दिव्यं रूपं देवताकर्षणादिरूपं सामर्थ्यम्, अदिव्यं रूपं तु व्यवहारोपयोगिसामर्थ्यम्, तेनोपलक्षिता । गौः गौरिव, रसं रस्यमानं तत्तत्कर्मफलरूपं दुग्धं प्रक्षरति प्रस्यन्दत इति ।

अयं भावः—'वाचं धेनुमुपासीत, तस्याश्चत्वारः स्तनाः—स्वाहाकारः, स्वधाकारः, हन्तकारः, वषट्कारः' इति श्रूयते । ततश्च कर्मविधायिका वैखरीवाग्रूपा गौश्चतुर्भिः स्तनैस्तत्तत्कर्मफलरूपं रसं प्रस्रवतीत्यर्थ इति ।

**एतयोरिति** । एतयोरित्यनेन 'गौरिव प्रक्षरत्येका' इत्यत्रोक्तां मन्त्ररूपां वैखरीं वाचं 'प्राणापानान्तरे नित्यमेका सर्वस्य तिष्ठति' इत्यत्र वक्ष्यमाणां मध्यमां वाचं चैकीकृत्य परामृशति । एतयो-रुक्तवक्ष्यमाणयोर्वैखरीमध्यमयोर्वाचोः, सूक्ष्मयोः, अत्र वैखर्याः स्थूलाया अपि सूक्ष्ममध्यमावाक्साहचर्येण क्षत्रिन्यायेन लक्षणया सूक्ष्मत्वेन निर्देशः । स्पन्दमानयोः यथायथं स्थूलसूक्ष्मप्राणवृत्त्यनुगतयोः, अन्तरं विशेषं पश्य, अर्जुन इत्युच्यते वासुदेवेन । सर्वस्यापि जनस्यैका मध्यमा वाक्, नित्यं प्राणापानयोरन्तरे छिद्रेऽवकाशेऽभावे इति यावत् । तेन प्राणापानरहितायां बुद्धावेव प्रतितिष्ठतीत्यर्थः । मध्यमा सूक्ष्मप्राणवृत्त्यनुगताऽधिष्ठानतया व्यक्तप्राणपरिग्रहेति पक्षेऽपि प्राणापानान्तर इत्यत्रत्यान्तरशब्दस्य मध्यार्थकतया प्राणापानमध्ये प्राणस्थेत्येवं व्याख्येयम् । प्राणस्य बुद्धिव्यतिरेकपक्षेऽपि मध्यमायाः प्राणाधिष्ठानताऽस्त्येवेति ।

अन्येति । अन्या तु पश्यन्तीरूपा वाक् प्रेर्यमाणैव, विवक्षाजनितप्रयत्नेन प्रेर्यमाणाऽपि । एवकारोऽप्यर्थः ।

अत्र 'अन्या त्वप्रेर्यमाणेव' इत्येवमुपलभ्यमानोऽपि पाठः—

प्राणापानान्तरे देवी वाग् वै नित्यं स्म तिष्ठति ।
प्रेर्यमाणा महाभागे विना प्राणमपानती ॥

इति महाभारतीयब्राह्मणगीतास्थपद्यपाठदर्शनेन नादृतः । विना प्राणेन बुद्धौ वर्तते, तदानीं प्राणस्यानुत्पादात् । हि यतः, ततः पश्यन्त्या वाचः प्राणो जायते । किं कुर्वन् इति जिज्ञासायां वाचं मध्यमां पुनः मुहुर्मुहुः, आप्याययन् परिपोषयन् । स चायं पश्यन्त्या जातः पश्यन्तीप्रेरितश्च प्राणो मध्यमां वाचं परिपुष्णाति, परिपोषश्च तस्याः श्रोत्रोपलभ्यस्वरूपनिष्पत्तिः ।

प्राणेनाप्यायिता सेयं व्यवहारनिबन्धना ।
सर्वस्योच्छ्वासमासाद्य न वाग् वदति कर्हिचित् ।
घोषिणी जातनिर्घोषा अघोषा च प्रवर्तते ।।
तयोरपि च घोषिण्योर्निर्घोषैव गरीयसी ।

पुनश्चाह—

स्थानेषु विधृते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ।।

---

यद्वा—'अन्या तु प्रेर्यमाणैव विना प्राणेन वर्तते' इति मध्यमाकथनम् । प्रेर्यमाणैवेत्यत्र प्रयोजककर्तृत्वं पश्यन्त्याः । मध्यमायाः सूक्ष्मप्राणवृत्त्यनुगतत्वेऽपि 'विना प्राणेन वर्तते' इत्युक्तिः स्थूलप्राणानुगत्य भावमुद्दिश्य । पुनर्मध्यमातो वैखर्या उत्पत्तिरित्याह 'जायते हि ततः प्राणः' इति । ततो मध्यमाया वाचः प्राणः, स्थूलः प्राणो जायते हि । पुनः मुहुः, वाचं वैखरीरूपाम्, आप्याययन् परिपोषयन् ।

अयं भावः—सा बुद्धिः प्राणं प्रेरयति, मध्यमारूपेण स्वरूपनिविष्टस्य शब्दस्य व्यवहारार्थं वैखरीरूपेण करणे निवेशपूर्वकं व्यक्तय इति ।

एतदेवाह—'प्राणेनाप्यायिता सेयं व्यवहारनिबन्धनम्' इति ।

अस्यार्थः—सेयं मध्यमा वाक् प्राणेनाप्यायिता परिपोषिता वैखरीरूपतां प्राप्ता सती व्यवहारनिबन्धनं सर्वव्यवहाराणां साधनम् । यतः सैव मध्यमा प्राणेन करणेषूपनिचिता श्रोत्रोपलभ्यतां प्राप्य वैखरी भवति । 'तस्मादप्राणन्ननपानन् वाचमभिव्याहरति' इति श्रुतेर्यस्मादेवं तस्मादुच्छ्वासं प्राणव्यापारमासाद्य कर्हिचित् सर्वस्य वाग् न वदति । वाच उत्पत्तावभिव्यक्तौ वा प्राणव्यापारो नापेक्ष्यते; किन्तु वाचः परिपोष एवेति भावः ।

**घोषिणीति** । घोषिणी घोषः सततं विद्यते यस्याः सा । का पुनः सेत्याह—जातनिर्घोषेति । जातो निर्घोषो यस्याः सा । अत्र निर्घोषपदेन घोषविशेष एव विवक्षितः, निरन्तरो नितरां वा घोष इति, न तु घोषाभावः, 'जातिनिर्घोषा इति वैखरीमाह' इति वृषभदेवोक्तेः । 'अघोषा च प्रवर्तते' इत्यनेन पश्यन्तीमध्यमे घोषरहिते तत्त्वेनैव एकीकृत्योपात्ते । तयोरपि अघोषघोषिण्योर्मध्ये, घोषिण्याः घोषिणीमपेक्ष्य, निर्घोषैव अघोषैव गरीयसी । यतो घोषिणी प्राणाप्यायनमपेक्षते, तद्विना विच्छिद्यते । अघोषा तु प्राणाप्यायनं विनापि सर्वास्ववस्थासु प्रवर्तत इति घोषिण्या अघोषा गरीयसीति ।

पूर्वोक्तं वाक्त्रयं प्रकारान्तरेण प्रदर्शयितुं श्लोकत्रयं पुनश्चाह महाभारत एव क्वचिद् व्यासः—**स्थानेष्वित्यादि ।**

अस्यार्थः—**स्थानेष्विति** । स्थानेषु उर आदिषु, वायौ प्राणवायौ, विवृते वर्णरूपतयोद्भूते सति, 'विधृते' इति पाठे उर आदिषु स्थानेषु प्रतिघाताद् विधृत इव सति, कृतवर्णपरिग्रहा, ततः प्राक् तु वर्णपरिग्रहशून्यैवासीदिति गम्यते । प्रयोक्तॄणां प्राणवृत्तिः प्राणव्यापारो निबन्धनं परिपोषकारणं यस्याः सा तथाभूता वैखरी वाक् प्रवर्तत इति ।

केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते॥
अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी॥

---

**केवलमिति**। मध्यमा वाक् तु केवलं बुद्ध्युपादानक्रमरूपानुपातिनी, केवलं बुद्ध्यैवोपादीयमानं गृह्यमाणम्, न तु श्रोत्रेणाप्युपादीयमानम्, यत्क्रमरूपं वर्णक्रमरूपम्, तदनुपातिनी तदनुसारिणी सूक्ष्मप्राणवृत्त्यनुगतापि वैखरीवत् स्थूलप्राणवृत्तिमतिक्रम्य तामनाश्रित्य प्रवर्तत इति।

**अविभागेति**। पश्यन्ती त्वविभागा वर्णप्रविभागशून्या, सर्वतः सर्वैः प्रकारैः, आद्यादित्वात् सार्वविभक्तिकस्तसिः। संहृतक्रमा वर्णक्रमसंहारवती, अन्तःस्वसंवेद्यतयातीन्द्रियत्वेन सूक्ष्मा, अनपायिनी नित्या, स्वरूपज्योतिरेव स्वरूपप्रकाशनात्। यतो न स्वगतेन स्वसम्बन्धिगतेन वा बुद्ध्यन्तरेण संवेद्यते। वैखर्याः स्वपरसंवेदनं प्रतीतमेव। मध्यमायां स्वसंवेदनमस्त्येव। परस्याप्यनुमानात् तत्र संवेदनाभिमान इति।

यत्तु क्वचित् परा पश्यन्ती मध्यमा वैखरी इति वाचो भेदचतुष्टयमुक्तम्, तत्पश्यन्त्या एव परापरभेदमाश्रित्य द्रष्टव्यम्। दर्शितं च प्राक् पश्यन्त्याः परापरभेदेन भेदद्वयम्।

अस्य च श्लोकत्रयस्य व्याख्यानं वादिदेवसूरिणा स्याद्वादरत्नाकरे प्रथमपरिच्छेदे सप्तमसूत्रे कृतम्। तद्यथा—**स्थानेष्विति**।

ताल्वादिस्थानेषु। वायौ प्राणसंज्ञे विधृते अभिघातार्थं निरुद्धे सति। कृतवर्णपरिग्रहेति हेतुद्वारेण विशेषणम्। ततः ककारादिवर्णरूपस्वीकाराद् वैखरी संज्ञा, विशिष्टायां खरावस्थायां स्पष्टरूपायां भवा वैखरीति निरुक्तेः।

जयन्तस्तु—विखर इति देहेन्द्रियसंघात उच्यते, तत्र भवा वैखरीति निरवोचत्। वाक् प्रयोक्तॄणां सम्बन्धिनी। यद्वा तेषाम् = प्रयोक्तॄणां स्थानेषु। तस्याश्च प्राणवृत्तिरेव निबन्धनम्। तत्रैव निबद्धा सा, तन्मयत्वादिति। या पुनरन्तःसङ्कल्प्यमाना क्रमवती श्रोत्रग्राह्यवर्णरूपाभिव्यक्तिरहिता वाक्, सा मध्यमेत्युच्यते।

तदुक्तम्—**केवलं बुद्ध्युपादानेत्यादि**।

अस्यार्थः—स्थूलां प्राणवृत्तिं हेतुत्वेन वैखरीवदनपेक्ष्य केवलं बुद्धिरेवापादानं हेतुर्यस्याः, सा प्राणस्थत्वात् क्रमरूपमनुपतति। अस्याश्च मनोभूमाववस्थानम्। वैखरीपश्यन्त्योर्मध्ये भवान्मध्यमा वागिति। या तु ग्राह्यभेदक्रमादिरहिता स्वप्रकाशा संविद्रूपा वाक्, सा पश्यन्तीत्युच्यते।

तदुक्तम्—**अविभागा त्वित्यादि**।

अस्यार्थः—पश्यन्ती, यस्यां वाच्यवाचकयोर्विभागेनावभासो नास्ति। सर्वतश्च सजातीयविजातीयापेक्षया संहृतो वाच्यानां वाचकानां च क्रमो देशकालकृतो यत्र। क्रमविवर्तशक्तिस्तु विद्यते। स्वरूपज्योतिः स्वप्रकाशा, वेद्यवेदकभेदातिक्रमात्। सूक्ष्मा दुर्लक्ष्या। अनपायिनी कालभेदास्पर्शादिति।

सेयमाकीर्यमाणापि नित्यमागन्तुकैर्मलैः ।
अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते ॥
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ।
पुरुषे षोडशकले तामाहुरमृतां कलाम् ॥

---

अस्य श्लोकत्रयस्यार्थः—सेयं स्वरूपज्योतीरूपा परा वाक् संविद्रूपा स्वप्रकाशा नित्यमागन्तुकैः = अविद्याकल्पितैः, मलैः = अपभ्रंशैः, आकीर्यमाणापि = सम्भिद्यमानापि । ननु व्यवहारातीतत्वात् कथमस्या अपभ्रंशैः सह सम्भेद इति चेत्, उच्यते—वाग्विभागमजानन्तस्तामेव सङ्कीर्णां पश्यन्ति, न हि तस्यां परिशुद्धायां मलमस्तीति । आगन्तुकैरिति विशेषणेनैतदेवोक्तम् । सोमस्यान्त्या कला पञ्चदशी सैव नात्यन्तमभिभूयते । अत्रापि मलैरित्येव कर्तृत्वेनान्वेति ।

अयं भावः—चन्द्रस्य हि चतुर्दशकलाः प्रतिपद आरभ्य सूर्येणाभिभूयन्ते । या त्वस्य पञ्चदशी कला, साऽमावस्यायां सूर्येणैकीभावान्नाभिभूयते । अभिभवितुरभिभाव्यस्य च भेदे ह्यभिभवो भवति । एवं सोममयस्य पुरुषस्यान्त्या कला स्वरूपज्योतीरूपा वागप्यपभ्रंशैर्नाभिभूयते ।

ननु सोमः षोडशकलो लोके शास्त्रे च प्रसिद्ध इति तस्यान्त्या कला षोडशी, न तु पञ्चदशीति चेत्, उच्यते—षोडशकलः सोम इति सत्यम्, तथापि तस्य पञ्चदशैव कलाः प्रतिपदमारभ्य पूर्णिमापर्यन्तं दृश्यन्ते व्यवह्रियन्ते च । या तु तस्य षोडशी कला, सा तु सर्वथैव सर्वदैवादृश्याऽनपायिनी चेत्यनभिभाव्या सूर्येण कदापि कथमपीति पञ्चदश्या एवामावास्यायामत्यन्तमनभिभाव्यता, सूर्ये प्रविलयाच्च कथञ्चिदभिभाव्यताऽप्यभिप्रेता । एवं पुरुषोऽपि षोडशकलः, तस्यान्त्या कला पश्यन्ती वाग्रूपा । पश्यन्ती तु परापरभेदेन द्विविधा । तत्र यत्तस्या अपरं रूपं तदपभ्रंशैराकीर्यमाणमपि नात्यन्तमभिभूयते । अविद्यया त्वभिभूयमानत्वेन कल्प्यत इत्येतदवबोधयितुमत्यन्तपदमुपात्तम् । अत्रापि पश्यन्त्या अपभ्रंशैः सङ्कीर्णत्वभ्रमरूप एकीभाव एव तस्या अत्यन्तमनभिभवे हेतुरिति ।

अथाधुना पश्यन्त्या यत्परं रूपम्, तदुपन्यस्यति—**तस्यां दृष्टस्वरूपायामिति ।**

तस्यां पश्यन्तीरूपायां परस्यां वाचि दृष्टस्वरूपायाम्, अपभ्रंशाद् विभागेन परिशुद्धायां प्रकाशमानानन्दचिद्रूपायां दृष्टायां सत्याम्, अधिकारो नियोगो विधिर्बन्धाख्यो निवर्तते । यतो येन विधिना नियुक्त इव पुरुषोऽविद्यावशाद् संसारे उत्पत्तिविनाशावनुभवन्नवतिष्ठते । परस्यां वाचि तु परिशुद्धायामद्वितीयात्मरूपायां दृष्टायामविद्यापगमे न क्रियाकारकभेददर्शनमूलको विधिस्तं पुरुषं प्रति प्रवर्तते, अद्वितीयात्मदर्शनेन भेददृष्टेरुपमृदितत्वात् । विधिप्रवृत्त्यभावे च नादृष्टद्वारा जन्ममरण-परम्पराऽविच्छेदलक्षणः संसार इति । षोडशकले सोममये पुरुषे तां परां वाचम् अमृतामात्मरूपत्वेन नित्यां कलामाहुः शास्त्रविद इति ।

अयं भावः—द्वे दर्शने, सूर्यमयः पुरुषः, सोममय इति च । सोममय इति दर्शनमङ्गीकृतमत्र । सोमश्च षोडशकल इति पुरुषोऽपि तथेति ।

प्राप्तोपरागरूपा सा विप्लवैरनुषङ्गिभिः ।
वैखरी सत्त्वमात्रेव गुणैर्न व्यवकीर्यते ।।

सेषा त्रयी वाक् चैतन्यग्रन्थिविवर्तवदनाख्येयपरिमाणा तुरीयेण मनुष्येषु प्रत्यवभासते । तत्रापि चास्याः किञ्चिदेव व्यावहारिकम्, अन्यत्तु सामान्यव्यवहारातीतम् ।

आह च—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।। इति ।

---

प्राप्तोपरागेति उपरज्यन्ते स्वसंसर्गेण समावरणपूर्वकं स्वासाधारणरूपरूषिततया प्रत्याय्यन्ते स्वसंसर्गिणो यैस्ते उपरागः । यथा राहुश्चन्द्रमस उपरागः । राहुणा हि चन्द्रः स्वसंसर्गेण समावरणपूर्वकं स्वासाधारणरूपेण कार्ष्ण्येन रूषिततया प्रत्याय्यते । राहूपरागे स्नायादित्यादौ तूपरागशब्द उपरञ्जनमुपराग इति भावघञन्तः । अत्राप्युपरञ्जनं स्वसंसर्गेण समावरणपूर्वकं स्वासाधारणरूपरूषिततया प्रत्यायनमेवार्थः । प्रकृते तु साधुशब्दस्य गौरित्यादेर्गाव्यादयोऽपभ्रंशा उपरागाः, तैर्हि साधुशब्दः स्वरूपेणावृत्य स्वासाधारणधर्मवत्तया प्रत्याय्यते । प्राप्तमुपरागाणामपभ्रंशानां रूपं ययेति विग्रहे प्राप्तरूपोपरागा सा वैखरी वाक्, अनुषङ्गिभिः स्वसंसृष्टैः, विप्लवैरपभ्रंशैः, विप्लवो ह्यसत्येन स्वरूपाभासेनार्थस्वरूपसंस्पर्शी उच्यते ।

तद्यथा—असत्येन तोयस्वरूपाभासेनोपरागाद्यर्थसंस्पर्शि तोयं विप्लव उच्यते । एवमभ्रंशा अप्यसत्येन बालादिभिरविद्याकल्पितेन स्वरूपाभासेन साधुस्वरूपसंस्पर्शिन उपप्लवस्थानीया बालैः साधुत्वेन गृहीता उपप्लवा उक्ताः । वाच उपरागरूपप्राप्तानुषङ्गिणां विप्लवानां करणत्वात् तृतीया । किञ्चैषां तन्त्रादिना व्यवकीर्यत इत्यत्र कर्तृत्वमपि । न व्यवकीर्यते न सङ्कीर्यते, वस्तुतो न सम्भेदमापद्यत इति यावत् । अत्रार्थे दृष्टान्तः—सत्त्वमात्रेवेति गुणैः ।

अयं भावः—यथा सत्त्वमात्रा सत्तारूपस्य ब्रह्मणो मात्रा स्वरूपम्, गुणैः सत्त्वरजस्तमोभिः, तत्कार्यैश्च कार्यकरणसंघातैः सङ्कीर्णत्वेन प्रतीयमानमपि वस्तुतो न सङ्कीर्यत इति ।

एवञ्च यदुक्तमनेकतीर्थभेदाया इति, सा एषा पश्यन्तीमध्यमावैखरीरूपैस्त्रयी वाक् चैतन्यग्रन्थिविवर्तवद् ब्रह्मजीवयोर्भेदिका व्यवधायिका च । चैतन्ययोर्ग्रन्थिरिव ग्रन्थिरिति व्युत्पत्त्याऽविद्या, तस्या विवर्ताः परिणामाः सर्वं जगद् यथाऽनाख्येयपरिमाणाः, तथेयमप्यनाख्येयपरिमाणा नामाख्यातोपसर्गनिपातभेदाच्चतुर्विधस्यापि स्वस्य स्वरूपस्य प्रत्येकं चतुर्थेन भागेन मनुष्येषु वर्तमाना प्रत्यवभासते ।

त्रयस्तु भागा अस्या मनीषिणां ब्राह्मणानामेव ज्ञानगोचराः । तत्रापि च मनुष्यैर्व्यवह्रियमाणे तुरीये भागे किञ्चिदेवास्या रूपं सर्वमनुष्यव्यवहारगोचरीभूतम् । अन्यत्तु सामान्यव्यवहारातीतं व्याकरणाध्ययनजन्यविशिष्टमनीषासम्पन्नब्राह्मणमात्रसंवेद्यम् ।

आह चैतद् ऋङ्मन्त्रः—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।।

(ऋ० सं० १/१६४/४५)

तस्याश्चासङ्कीर्णं वाचो रूपं कात्स्न्येंन सामान्यविशेषवत्यस्मिँल्लक्षणे व्याकरणाख्ये निबद्धम्।

अर्वाग्दर्शनानां तु पुरुषाणां प्रायेण सातिशयाः प्रतिघातिन्यः सापराधाः शक्तयः। निरपराधस्तु लक्षणप्रपञ्चवाननेकमार्गोऽयं शब्दानां प्रतिपत्त्युपायो दर्शितः ॥१४२॥

---

वाक्परिमिता वाचः सम्बन्धीनि वर्णानुपूर्व्या परिच्छिन्नानि यानि पदानि व्यवहारे समुपलभ्यन्ते, तानि चत्वारि परापश्यन्तीमध्यमावैखरीरूपैः, यद्वा वाचः सम्बन्धीनि नामाख्यातोपसर्गनिपातैः परिच्छिन्नानि यानि पदानि समुपलभ्यन्ते, तानि चत्वारि, नामाख्यातोपसर्गनिपातभेदात्। तानि सर्वाणि ये मनीषिणो ब्राह्मणा वैयाकरणास्ते विदुर्नेतरे। मनुष्यास्तु वाचस्तुरीयं चतुर्थं भागं वैखरीरूपम्, यद्वा नामाख्यातादीनामपि प्रत्येकं चतुर्थं भागं वदन्ति। त्रीणि तु वाचो रूपाणि परापश्यन्तीमध्यमारूपाणि, गुहा निहिता गुहायां निहितानि, बुद्धिरूपायां गुहायां स्थितानि, यद्वा नामाख्यातादीनां प्रत्येकं त्रयो भागाः, नेङ्गयन्ति न चेष्टन्ते, न प्रकाशन्त इति यावत्। अप्रकाशमाना हि चेष्टमाना अपि न चेष्टन्त इत्युच्यन्त इति।

तस्याश्चानेकतीर्थभेदायास्त्रय्या वाचोऽपभ्रंशैरसङ्कीर्णं रूपं सर्वं सामान्यविशेषवति = उत्सर्गापवादवति अस्मिन् लक्षणशास्त्रे व्याकरणे निबद्धम्। तत्रापि वैखर्याः स्वरूपं साक्षान्निबद्धम्, पश्यन्तीमध्यमयोरपि तां द्वारीकृत्य परम्परया।

ननु साधूनां शब्दानां साधुत्वं शिष्टपुरुषस्मरणपारम्पर्यादेवावधार्यत इति किं व्याकरणेनेति चेत्, न, अर्वाग्दर्शनानाम् = बाह्यदृष्टीनाम्, अध्यात्मदृष्टिरहितानाम्, अध्यात्मदर्शिनो हि सर्वज्ञा भवन्ति। पुरुषाणां प्रायेण शक्तयः सातिशया भवन्तीति न तैः सर्वे साधवः शब्दा ज्ञातुं शक्या इति तत्कृतप्रयोगस्मरणपरम्परयाऽस्माभिरपि न सर्वे साधवो ज्ञातुं शक्याः। किञ्च, तेषां शक्तयः साधुशब्दज्ञानेऽप्रवृत्तिरूपप्रतिघातवत्य इति तेषां कात्स्न्येंन साधुशब्दाज्ञानम्। किञ्च, तेषां शक्तयः सापराधाः, भ्रान्त्या साधूनामसाधुतया परिज्ञानात्। अयं त्वार्षदृष्टिसम्पन्नमुनिप्रणीतो व्याकरणरूपः शब्दानां प्रतिपत्त्युपायो भ्रान्त्याद्यसम्भवनेन निरपराधः।

संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥

इति षड्विधलक्षणप्रपञ्चवान्, "बहुलमन्यतरस्यां विभाषा" इत्यादिग्रहणेन, उत्सर्गापवादस्थान्यादेशादिभेदाश्रयणेन चाऽनेकमार्गः।

एवं ह्युक्तं भाष्ये—"सर्ववेदपार्षदं हीदं शास्त्रम्, तत्र नैकः पन्थाः शक्य आस्थातुम्। बहुलमन्यतरस्यां विभाषेत्यादिग्रहणं ततः" इति ॥१४२॥

**तद्विभागाविभागाभ्यां क्रियमाणमवस्थितम् ।**
**स्वभावज्ञैश्च भावानां दृश्यन्ते शब्दशक्तयः ।। १४३ ।।**

विभागो नाम परप्रतिपादनाय कल्पितः प्रकृतिप्रत्ययादिभेदः । तद्यथा—धातोस्तव्यदायत इति ।

तथा चोक्तम्—'यत्तावदयं सामान्येन शक्नोत्युपदेष्टुं तत्तावदुपदिशति' इति । अविभागस्तु यत्र स्वरूपेणोच्चारणम् । तद्यथा—'दाधर्त्तिदर्धर्तिदाश्वान्साह्वान्' इति ।

कानिचिद् व्याकरणानि बह्वविभागानि बहून् प्रत्यक्षपक्षेण शब्दान् प्रतिपादयन्ति । कानिचित् तु विभज्यानुमानपक्षेण बहूनां समुदायानां प्रतिपादनं कुर्वन्ति । सैषा स्मृतिर्यथाकालं पुरुषशक्त्यपेक्षया तथा तथा व्यवस्थाप्यते । सन्ति तु साधुप्रयोगानुमेया एव शिष्टाः । सर्वज्ञेयेष्वप्रतिबद्धान्तःप्रकाशास्ते विशिष्टकालावधिप्रविभागां यथाकालं धर्माधर्मसाधनभावेन समन्वितां शब्दशक्तिमव्यभिचारेण पश्यन्ति ॥१४३॥

---

एवं सामान्यरूपेण प्रागुक्तं व्याकरणस्य सर्वशब्दप्रतिपत्त्युपायत्वं साम्प्रतं विशेषतो निर्दिशति—**तद्विभागाविभागाभ्यामिति ।**

चो हेतौ, यतो भावानां पदार्थानां स्वभावज्ञैरार्षदृष्टिसम्पन्नैः शब्दानां धर्माधर्मानुकूलास्तत्तदर्थबोधानुकूलाश्च शक्तयो दृश्यन्ते साक्षात् क्रियन्ते, अतस्तद् व्याकरणम्, तैर्विभागेन प्रकृतिप्रत्ययादिभेदेन, अविभागेन पङ्क्तिविंशतीत्यादिस्वरूपनिर्देशेन लोके साध्वसाधुप्रविभागज्ञानायावस्थितम् । अत्र क्रियमाणमिति वर्तमानकालता व्याकरणशास्त्रप्रबन्धाविच्छेदात् । तथा हि—पूर्वं कृतान्यन्यानि व्याकरणानि, करिष्यन्ते च, क्रियन्ते चापराणीति ।

अयं भावः—विभागो नाम परं प्रति शब्दस्वरूपप्रतिपादनाय कल्पितः प्रकृतिप्रत्ययादिभेदः । तद्यथा—धातोस्तव्यदादय इति ।

तथा चोक्तमाद्यन्तवत्सूत्रे भाष्ये—"यत् तावदयं सामान्येन शक्नोत्युपदेष्टुं तत्तावदुपदिशति । प्रकृतिम्, ततो वलाद्यार्धधातुकम्, ततः पश्चादिकारम् । तेनायं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यत इति । अविभागस्तु यत्र शब्दस्य स्वरूपेणोच्चारणम् । तद्यथा—दाधर्ति, दर्धर्ति, दाश्वान्, साह्वान् इति ।"

तत्र कानिचिद् व्याकरणान्यल्पशक्तीन् पुरुषान् अपेक्ष्याल्पविभागानि बह्वविभागानि बहवोऽविभागाः प्रतिपदपठिताः शब्दा येषु तानि तथाभूतानि बहून् शब्दान् प्रत्यक्षमेव प्रतिपादयन्ति । कानिचित् तु व्याकरणानि महाशक्तीन् पुरुषानपेक्ष्य बहुविभागानि प्रकृतिप्रत्ययादिरूपलिङ्गोपस्थापनेनानुमानेनैव बहूनां शब्दानां प्रतिपादनं कुर्वन्ति । तदेवं सैषा व्याकरणस्मृतिर्यथाकालं पुरुषाणां शक्त्यल्पत्वशक्तिमहत्त्वापेक्षया यथाक्रमं बह्वविभागा अल्पविभागा, बहुविभागाऽल्पाविभागा च व्यवस्थाप्यते । येषां च शब्दप्रयोगस्मृतिपारम्पर्येण तैस्तैराचार्यैस्तदा तदा व्याकरणस्मृतयः प्रणीताः, प्रणीयन्ते, प्रणेष्यन्ते च, शिष्टास्तु साधुशब्दप्रयोगानुमेया एव । ते हि शिष्टाः सर्वे

**अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकाम् ।**
**शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिः ।। १४४ ।।**

---

ये शब्दप्रमाणका एव केवलं सर्वमेव शास्त्रप्रत्ययमदृष्टफलेष्वर्थेष्वभिशङ्कनीयत्वाद-प्रमाणं पुरुषस्य दर्शनमिति मन्यन्ते, तेषां श्रुतिस्मृत्योरविच्छेदाविशेषे तुल्ये चोभयोरर्थस्य नित्यत्वे श्रुतिरव्यभिचरितस्वरवर्णानुपूर्व्यदेशकालनियमा न केनचित्कर्त्रा प्रकारान्तरेणा-वस्थापितपूर्वा सर्वकालं सर्वप्रदेशेषु प्रतिचरणं विभागेन व्यवस्थापिता । स्मृतिस्तु नित्य-मविच्छिद्यमानार्था गद्यश्लोकवाक्यादिभेदेन प्रतिकालमन्यथा शिष्टैरेव निबध्यते ।

तत्र केचिदाचार्या मन्यन्ते—न प्रकृत्या किञ्चित् कर्म दृष्टमदृष्टं वा (दृष्टार्थमदृष्टार्थं वा)। शास्त्रानुष्ठानात् तु केवलाद् धर्माभिव्यक्तिः । शास्त्रातिक्रमाच्च प्रत्यवाययोगः । येषामेव हि ब्राह्मणवधादीनां विषयान्तरे पातकत्वम्, तेषामेव विषयान्तरे प्रकृष्टाभ्युदयहेतुत्वं शास्त्रेण विधीयत इति ।

---

संज्ञेयेषु पदार्थेष्वप्रतिबद्धान्तःप्रकाशाः, अत एव विशिष्टकालावधिप्रविभागाम् = एतत् कालमारभ्यैतत्कालं यावदयं साधुरन्यदाऽसाधुरित्येवं विशिष्टकालरूपोऽवधिप्रविभागो यस्या धर्माधर्मसाधनत्वशक्तेस्ताम्, यथाकालं धर्माधर्मसाधनत्वेन समन्वितां शब्दशक्तिमव्यभिचारेण = प्रमया पश्यन्ति । तद्यथोक्तं प्राक् ४४ कारिकाव्याख्यावसरे—''पुरा न्यङ्कोरणि न्याङ्कवमिति साधु आसीत्, तत्सम्प्रत्यन्यथा, नैयङ्कवमित्येवाभ्युदयाय'' इति ।।१४३।।

एवं स्मृतित्वाद् व्याकरणस्य प्रामाण्यमाख्याय प्रसङ्गादन्यासामपि स्मृतीनां तन्मूलभूतायाः श्रुतेश्च प्रबन्धाविच्छेदाविशेषेऽपि स्मृतीनां सकर्तृकत्वं श्रुतेस्त्वकर्तृकत्वमित्याह—**अनादिमिति** ।

अस्यार्थः—अनादिम्, कारणवर्जिताम्, अव्यवच्छिन्नाम्, व्यवच्छेदः प्रवाहपरम्परा-विनाशस्तद्रहिताम्, श्रुतिं श्रूयत एव केवलम्, न केनापि क्रियत इति व्युत्पत्त्या त्रयीरूपाम्, अकर्तृकाम् अपौरुषेयामाहुर्मीमांसकाः । स्मृतिस्तु यद्यपि शिष्टैः काले काले निबध्यते, तथापि न व्यवच्छिद्यते, स्वरूपेण व्यवच्छिद्यमानापि प्रवाहरूपेण न व्यवच्छिद्यत इत्यर्थः ।

अयं भावः—ये शब्दप्रमाणका एव केवलम्, अदृष्टफलेष्वर्थेषु धर्माधर्मादिषु सर्वमेव शास्त्रजन्यं प्रत्ययं प्रमाणं मन्यन्ते, तेष्वर्थेषु पुरुषस्य दर्शनं तु भ्रमविप्रलिप्साकरणापाटवादिभिरभिशङ्कनीयत्वादप्रमाणं मन्यन्ते, तेषां मते श्रुतिस्मृत्योरविच्छेदाविशेषे तयोरर्थस्य नित्यत्वे च तुल्ये श्रुतिः सर्वस्मिन् काले देशे चाव्यभिचरितस्वरवर्णानुपूर्वीका, '' चतुष्पथे नाधीयीत' इति देशनियमरहिता, ''सन्ध्यायां नाधीयीत'' इति कालनियमरहिता च केनचित् कर्त्रा प्रकारान्तरेण नावस्थापितपूर्वा, किन्तु सर्वकालं सर्वदेशेषु प्रतिशाखं विभागेन व्यवस्थापिता । स्मृतिस्तु श्रुतिवद् नित्यमविच्छिद्यमानार्थापि गद्यश्लोकवाक्यादिभेदेन प्रतिकालमन्यथाऽन्यथा शिष्टैरेव निबध्यते, नास्ति च तत्र स्वरवर्णानुपूर्व्यादिनियम इति भेदः ।

अन्ये तु मन्यन्ते—भावशक्तिमेव प्रतिनियतविषयां शास्त्रमनुवदति। को हि शास्त्रस्य क्रीडत इव कारणस्य पुरुषानुग्रहोपघाताभ्यामर्थः। शास्त्रस्वभावाभ्युपगमाद् द्रव्यस्वभावाभ्युपगम एव युक्ततरो दृश्यते।

तथा हि दृष्टार्थासु चिकित्सादिषु स्मृतिषु विषौषधादीनामिवार्थक्रियासु सामर्थ्यमुपलभ्यते, न स्मृतिशास्त्राणाम्। तस्माच्छास्त्रस्वभाव इव पक्षान्तरे द्रव्यादिस्वभावोऽयं शास्त्रेणानूद्यते।

यथैवोपघातनिमित्तान्यनुग्रहनिमित्तानि च लोके व्यवस्थितानि, तथैव तत्प्रतिपत्त्युपायानामप्यविच्छेदेन व्यवस्था विद्यते ॥१४४॥

एवं श्रुतिस्मृत्योर्भेद इव धर्मं प्रति श्रुतिस्मृत्योर्दर्शनभेदोऽपि केषाञ्चिदाचार्याणां सम्मतः।

तद्यथा केचिदाचार्या मन्यन्ते—न किञ्चिदपि कर्म प्रकृत्या दृष्टार्थमदृष्टार्थं वा; किन्तु यथाशास्त्रं केवलादनुष्ठानादेव धर्माभिव्यक्तिः। शास्त्रातिक्रमाच्च प्रत्यवाययोगः। तथा च कर्मरूपस्य पदार्थस्य न धर्मजनकत्वं प्रत्यवायजनकत्वं वा स्वभावनियतम्, किन्तु शास्त्रस्यैवैष स्वभावो यत्कर्मणो धर्मजनकत्वमधर्मजनकत्वं वा।

तथा हि— येषामेव हि ब्राह्मणवधादीनां रागद्वेषादिप्रयुक्तानां पातकत्वम्, तेषामेव हि क्रतुविशेषे ब्रह्माणमुद्दिश्य प्रयुक्तानाम्, "ब्रह्मणे ब्राह्मणमालभेत" इत्यादिशास्त्रेण प्रकृष्टाभ्युदयहेतुत्वं विधीयते। तथा च पदार्थस्य न कश्चिन्नियतः स्वभावः, किन्तु शास्त्रस्यैव।

अन्ये तु मन्यन्ते—न शास्त्रस्य कश्चिन्नियतः स्वभावः; किन्तु पदार्थस्यैव सहकारिभेदेन भिन्नः स्वभावभेदः।

तथा हि—प्रतिनियतविषयां भावशक्तिमेव शास्त्रमनुवदति, पदार्थस्वभावस्यैव हि केवलमवबोधकं शास्त्रमिति। दृश्यते हि सहकारिकारणवशात् पदार्थानां शक्तिभेदः। को हि धर्माधर्मज्ञापककारणस्य शास्त्रस्य क्रीडतः पुरुषानुग्रहोपघाताभ्यामर्थः।

तद्यथा—सृष्टिः परस्य पुंसः क्रीडेति पक्षे जीवरूपस्य पुरुषस्य जगत्सृष्टिरूपया क्रीडया सुखोपभोगरूपोऽनुग्रहो दुःखोपभोगरूपो वा उपघातो न प्रयोजनत्वेनापेक्षितः, तथा शास्त्रस्यापि शब्दापशब्दप्रयोगद्वारा धर्माधर्मजननं फलमिति न साधु सिद्ध्येत्।

तथा हि—शब्दापशब्दयोर्यथेष्टाचरणेऽभ्युदय इति किं न शास्त्रं प्रवृत्तम्, येन कस्यचित् प्रत्यवायो न भवेदिति पर्यनुयोगस्य किमुत्तरं शास्त्रस्वभाववादिनाम्। यद्यप्यस्य पर्यनुयोगस्येदमुत्तरं सम्भवति। स्वभाव एष शब्दरूपस्य शास्त्रस्य यत् कस्यचित् कर्तव्यतां चोदयति, कस्यचिच्च कर्तव्यतां निवर्तयतीति, तथापि तुल्ये स्वभाववादाभ्युपगमे द्रव्यस्वभावाभ्युपगम एव युक्ततरः, दृष्टार्थासु चिकित्सादिस्मृतिषु द्रव्यस्वभाववादाभ्युपगमस्यैव दर्शनात्।

तथा हि—दृष्टार्थासु चिकित्सादिस्मृतिषु विषौषधादीनां द्रव्याणामेव तत्तदर्थक्रियासु सामर्थ्यमुपलभ्यते, न स्मृतिशास्त्राणाम्। तस्माच्छास्त्रस्वभाव इव पदार्थस्वभाववादे द्रव्यादिस्वभावोऽयं शास्त्रेणानूद्यते।

**अविभागाद् विवृत्तानामभिख्या स्वप्नवच्छ्रुतौ ।**
**भावतत्त्वं तु विज्ञाय लिङ्गेभ्यो विहिता स्मृतिः ।। १४५ ।।**

---

येषां तावदियं नित्यैव लोकस्य विभागेन प्रवृत्तिर्नैव काचिद् युगमन्वन्तरव्यवस्था, नापि ब्रह्मणोऽसाधारणः कश्चिदहोरात्रविभागो विद्यत इति दर्शनम् , तेषामुक्तः श्रुतिस्मृति-प्रवृत्तिधर्मः पुरस्तादनन्तरे श्लोके ।

येषां तु स्वप्नप्रबोधवृत्त्या नित्यं विभक्तपुरुषानुकारितया कारणं प्रवर्तते, तेषा-मृषयः केचित् प्रतिभात्मनि विवर्तन्ते, सत्तालक्षणं महान्तमात्मानमविद्यायोनिं पश्यन्तः प्रतिबोधेनाभिसम्भवन्ति ।

---

एवञ्च यथा प्रथमपक्षे शास्त्रस्य स्वभावो न पर्यनुयोज्यस्तथा द्वितीयपक्षे पदार्थस्वभावोऽपि न पर्यनुयोज्यः, यथैव च लोके जीवस्योपघातनिमित्तानि, अनुग्रहनिमित्तानि च द्रव्याण्यौषधादीनि तत्तच्छक्तिमन्ति व्यवस्थितानि, तथैव तादृशशक्तिमद्द्रव्यप्रतिपत्त्युपायानां तत्तच्छास्त्राणामपि परम्पराऽविच्छेदेन शिष्टैः कृता व्यवस्था विद्यत इति ।

अयं भावः—यथा ते तेऽर्थास्तत्तद्विशिष्टशक्तियुक्ताः स्वत एव स्थिताः, स्मृतिशास्त्राणि तादृशशक्तिमत्तया तत्तद्द्रव्यप्रतिपादकानीति, तथा साधुशब्दानामसाधुशब्दानाञ्च यथायथं धर्माधर्म-जनकत्वशक्तिः स्वत एव स्थिता, व्याकरणशास्त्रं तु तत्प्रतिपादकमिति ।।१४४।।

पूर्वं स्वत एव तत्तच्छक्तिमन्तोऽर्थाः प्रवाहरूपेणाविच्छेदेनावस्थिता इति नित्याः, शास्त्रं तु तत्प्रतिपादकमित्युक्तम् , साम्प्रतं त्वर्थवच्छब्दानामपि नित्यतां "सिद्धे शब्दार्थसम्बन्धे" इत्यादि-वार्त्तिकप्रबोधितामनुवदन्नाह—**अविभागादिति ।**

इदं त्ववधेयम्—शब्दार्थयोर्नित्यत्वे समानेऽप्यर्थानां प्रवाहरूपेण नित्यत्वम् , शब्दानां तु स्वरूपत इति ।

अस्यार्थः—अविभक्ताद् अविद्यारूपात्मकशक्त्युपहितात् शब्दब्रह्मणो विवृत्तानाम् , सर्गादौ शब्दब्रह्मणो विवर्तभावमुपागतानामृषीणां श्रुतौ वेदे स्वप्नवत् स्वप्न इवाभिख्या मानसं ज्ञानं भवति। यथा स्वप्ने श्रोत्रनिरपेक्षं बाह्यविषयाभावेन तदनुकारशून्यञ्च शब्दविषयं मानसं ज्ञानं भवति, तथा सर्गादिभुवां महर्षीणां वेद इति। स्मृतिस्तु भावानां पदार्थानां तत्त्वं वास्तवं रूपं विज्ञाय आर्षेण चक्षुषाऽवलोक्य लिङ्गेभ्यो वेदव्यवस्थितान्येव लिङ्गान्यवबुध्य तानि मूलीकृत्य विहिता इति।

अयं भावः—येषामिदं दर्शनं यथैते पदार्थाः सम्प्रति विभक्तस्वभावास्तथा सर्वकालम् , न त्वेव कदाचिदविभागावस्थाः, नैव च काचिद् युगमन्वन्तरव्यवस्था, कृतादीनि द्वासप्ततिश्चतुर्युगानि मन्वन्तरम्, नैव च ब्रह्मणोऽसाधारणः कश्चिदहोरात्रप्रविभागो विद्यते। तद्यथा—चतुर्दशमन्वन्तराणि कल्पः, स ब्रह्मणोऽहोरात्रः। तत्र यो दिवसः स सर्गः, या रात्रिः स प्रलय इति येषामिदं दर्शनं नास्ति मीमांसकानाम्, तेषां मते पुरस्ताद् अनन्तरे श्लोकेऽविच्छिन्नश्रुतिस्मृतिप्रवृत्तिगोचरीभूतो धर्म उक्तः।

केचित् तु विद्यायां विवर्तन्ते। ते मनोग्रन्थिमात्मानमाकाशादिषु भूतेषु प्रत्येकं समुदितेषु वा विशुद्धमनिबद्धपरिकल्पं तथैवाभिसम्भवन्ति। तेषां चागन्तुरविद्याव्यवहारः सर्व एवौपचारिकः, विद्यात्मकत्वं तु नित्यमनागन्तुकं मुख्यम्। ते च स्वप्न इवाश्रोत्रगम्यं शब्दं प्रज्ञयैव सर्वमाम्नायं सर्वभेदशक्तियुक्तमभिन्नशक्तियुक्तं च पश्यन्ति।

केचित् तु पुरुषानुग्रहोपघातविषयं तेषामर्थानां स्वभावमुपलभ्याम्नायेषु क्वचित् तद्विषयाणि लिङ्गानि दृष्ट्वा दृष्टादृष्टार्थां च स्मृतिमुपनिबध्नन्ति। श्रुतिं तु यथादर्शनमव्यभिचरितशब्दामेव प्रथममविभक्तां पुनः संगृहीतचरणविभागां समामनन्तीत्यागमः ॥१४५॥

---

येषां तु मते कृतादियुगरूपो विवर्तः प्रबोधवृत्तिरूपः प्रतिलयस्तु स्वप्नवृत्तिरिति, तथा चात्मावधिको विश्वस्य प्रविभागरूपः प्रबोधः, प्रतिलयस्तु विश्वस्यात्मन्यविभागरूप इति स्वप्नप्रबोधवृत्त्या = वृत्तिरत्र स्थितिः, विभक्तपुरुषानुकारितया नित्यं कारणं ब्रह्म प्रवर्तते।

अयं भावः—यथा परस्मात् पुरुषाद् विभक्ताः पुरुषा जीवाः स्वस्वकार्ये प्रवर्तन्ते, तथा विभक्तपुरुषाननुकुर्वन् ब्रह्मरूपं कारणं नित्यं सर्गे प्रवर्तत इति। अस्मिन् दर्शने आद्यन्तवत्त्वात् सर्गस्य विच्छेदः श्रुतिस्मृत्योः प्रतिपाद्य इत्यस्याः कारिकायाः फलम्।

किञ्चेदं येषां दर्शनम्, तेषां मते ऋषयः केचित् प्रतिभात्मनि ब्रह्मणि सर्गादौ विवर्तमाने सति विवर्तन्ते। यदा सर्गादौ प्रतिभा = ज्ञानस्वरूपं ब्रह्म विवर्तते, तदैवैके ऋषयस्तया सहैव विवर्तन्ते।

किञ्च, ऋषयः स्वविवृत्तिकाले तां प्रतिभां ब्रह्मलक्षणां सम्यगवबुध्यन्ते, अवबुध्यमाना एवाभिसम्भवन्ति। सा च प्रतिभा सत्तालक्षणा, महान् आत्मा, योऽयं विकारग्रामोऽविभागोत्तरकालिकोऽसत्यस्वभावोऽविद्योपादानकत्वात् तस्य योनिः, तां पश्यन्तश्च ते ऋषयः सर्वविषयकप्रबोधेन युज्यन्ते। यथा खलु सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः। एते च ऋषयः प्रतिसर्गं प्रतिब्रह्माण्डञ्च समुत्पद्यमाना आदिजीवा हिरण्यगर्भाख्याः।

केचित्तु ऋषयो विद्यायां विद्योपलक्षिते सूक्ष्मशरीरे विवर्तमानायां तया सहैव विवर्तन्ते। तथा हि—यदा सूक्ष्मशरीरं स्थूलाकारेण विवर्तते, तदा तेन सहैव केचन ऋषयोऽपि विवर्तन्ते = समुत्पद्यन्ते। ते च ऋषय आकाशादिभिः कार्यकारणसंघातरूपेण परिणतैः सह आत्मनो दुर्मोचा या मनोरूपा ग्रन्थिस्तया ग्रथितं मनस्तादात्म्यापन्नमात्मानं वस्तुतः कर्तृत्वभोक्तृत्वादिराहित्येन विशुद्धमपि, अहंप्रत्ययरूपो यो मनसो विवर्तरूपः परिकल्पस्तस्य मनःस्वभावत्वादात्मन्यनिबद्धत्वेन अनिबद्धाहङ्कारपरिकल्पमप्याकाशादिषु कार्यकारणरूपतां गतेषु प्रत्येकं समुदितेषु वा अविद्यया तादात्म्येन पश्यन्तोऽहन्तयाऽभिमन्यमाना एवाभिसम्भवन्ति। न हि मनःस्वरूपपरिग्रहेणावतिष्ठमानमाकाशादिषु प्रत्येकं समुदितेषु वाऽहङ्कारप्रत्ययं कुर्यात्। आकाशादिषु प्रत्येकमभिमानश्च 'अहं बधिरोऽहं काणः' इत्यादिरूपः, समुदितेष्वभिमानश्च 'अहं स्थूलोऽहं कृशः' इति। तेषाञ्च ऋषीणां सर्वोऽपि व्यवहारोऽविद्यापरिकल्पित आगन्तुरौपचारिकः = आरोपितः, न तु वस्तुभूतः। विद्यात्मकत्वम् = नित्यविज्ञानात्मकत्वं तु नित्यमनागन्तुकं मुख्यम्। ते च ऋषयः स्वप्ने यथा लोका अश्रोत्रगम्यं शब्दं

**कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।**
**चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ।। १४६ ।।**

---

यथैव हि शरीरे दोषशक्तिं रत्नौषधादिषु च दोषप्रतीकारसामर्थ्यं दृष्ट्वा चिकित्साशास्त्रमारब्धम्। रागादींश्च बुद्धेरुपप्लवानवगम्य तदुपघातहेतुज्ञानोपायभूतान्यध्यात्मशास्त्राणि उपनिबद्धानि । तथेदमपि साधूनां वाचः संस्काराणां ज्ञापनार्थमपभ्रंशानां चोपघातानां त्यागार्थं लक्षणमारब्धम् ।।१४६।।

---

प्रज्ञयैव पश्यन्ति, तथा सर्वभेदशक्तियुक्तमभिन्नशक्तियुक्तं चाम्नायं प्रज्ञयैव=शुद्धेन मनसा पश्यन्ति, न तु गुरूपदेशद्वारा श्रोत्रेण, तदानीं सर्गादावुपदेष्टुरन्यस्याभावात् । आम्नायस्य सर्वभेदशक्तियुक्तत्वञ्च सर्वेषां भेदानां विकाराणां वेदशब्दपूर्वकत्वस्य मन्वादिषु दर्शितत्वात् । अभिन्नशक्तियुक्तत्वञ्च यत्प्रतिशाखमनेकोऽप्याम्नाय एकं कर्म प्रकाशयतीत्यभिन्नकर्मानुकूलशक्तिमत्त्वात् । तदुक्तं मीमांसासूत्रेषु "सर्वशाखाप्रत्ययमेकं कर्म" इति । एते च ऋषयो वशिष्ठवामदेवविश्वामित्रप्रभृतयो मन्त्रद्रष्टारः ।

केचित्तु ऋषयः पुरुषाणामनुग्रहानुकूलामुपघातानुकूलाञ्च तत्तदर्थानां शक्तिमार्षेण चक्षुषा उपलभ्याम्नायेषु क्वचित् तद्विषयाणि लिङ्गानि दृष्ट्वा च दृष्टार्थां स्मृतिं चिकित्सानीतिशास्त्रादिरूपां स्मृतिमदृष्टादृष्टार्थां च याज्ञवल्क्यगौतमादिस्मृतिमुपनिबध्नन्ति ।

केचित्तु ऋषयो व्यासादयो यथादर्शनं श्रुतिं त्वव्यभिचरितशब्दामेव प्रथमविभक्तामेव च समामनन्ति, पश्चात्तु चरणविभागेनावस्थितामव्यभिचरितकतिपयशब्दाँश्च समामनन्तीत्येष सम्प्रदाय इति ।।१४५।।

तदेवं श्रुतिस्मृतीनां स्वरूपं प्रामाण्यमविच्छेदं चाख्याय व्याकरणस्मृतेरन्याभिः स्मृतिभिः सह मलविशुद्धिरूपप्रयोजनवत्तया तुल्यतामाह—**कायवाग्बुद्धिविषया इति ।**

अत्र बुद्धिरन्तःकरणम्, न तु ज्ञानम्; मनोनिरोधरूपस्य योगस्य मनस एव संस्कारकत्वात् । चिकित्साशास्त्रं चरकादिकम् । लक्षणशास्त्रं शब्दानुशासनम् । अध्यात्मशास्त्रं योगशास्त्रम् । कायवाग्बुद्धिवर्तिनो ये मलास्ते हि तत्रावस्थिताः पदार्थपरिच्छेदविरोधिनो बुद्धेः कालुष्यहेतव उपप्लवाः ।

तथा हि—कायमलेन रोगेण बुद्धेः कालुष्यं भवतीत्यनुभवसिद्धमेव । वाङ्मलेन चापभ्रंशेन बुद्धेः कालुष्यं भवति ।

तद्यथा—जङ्घेति पदं जानोरधोभागे प्रयुक्तं साधु । तदपभ्रंशस्तु 'जाँघ' इति तदुपरिभागे प्रयुज्यत इति जङ्घापदार्थनिर्णये बुद्धिकालुष्यकारकः ।

तद्यथा—एकस्यैव गोशब्दस्य देशभेदेन गावी गोणी इत्याद्यपभ्रंशभेदः । एकस्यैव च साधुशब्दस्य देशभेदेनापभ्रंशभेदोऽपभ्रंशानां चार्थभेदः । आलुकशब्दस्य 'अलुवा' इत्यपभ्रंशो बलियामण्डले शाकविशेषे प्रयुज्यते । चम्पारण्यमण्डलादौ तु शर्कराकन्दाख्ये कन्दविशेष इति बुद्धिकालुष्यहेतुत्वमपभ्रंशानाम्। बुद्धिमलानां तु भ्रमविप्रलिप्साप्रमादकर्णापाटवरागद्वेषलोभादीनां बुद्धिकालुष्यहेतुत्वं लोकप्रसिद्धमेवेति न तत्साधने प्रयत्यते ।

**शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते ।**
**तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम् ।। १४७ ।।**

कथंभूताः पुनरपभ्रंशाः—

शब्दप्रकृतिरपभ्रंश इति संग्रहकारः । नाप्रकृतिरपभ्रंशः स्वतन्त्रः कश्चिद् विद्यते । सर्वस्यैव हि साधुरेवापभ्रंशस्य प्रकृतिः । प्रसिद्धेस्तु रूढितामापद्यमानाः स्वातन्त्र्यमेव केचिदपभ्रंशा लभन्ते ।

तत्र गौरिति प्रयोक्तव्येऽशक्त्या प्रमादादिभिर्वा गाव्यादयस्तत्प्रकृतयोऽपभ्रंशाः प्रयुज्यन्ते । ते च सास्नादिमत्येव लब्धस्वरूपाः साधुत्वं विजहति । अर्थान्तरे तु प्रयुज्यमानाः साधव एव विज्ञायन्ते । न ह्येतेषां रूपमात्रप्रतिबद्धमसाधुत्वम् ।।१४७।।

---

अयं भावः—यथैव हि शरीरे दोषशक्तिम् = रोगानुकूलां शक्तिम् , रत्नौषधादिषु च रोगप्रतीकारसामर्थ्यं दृष्ट्वा चिकित्साशास्त्रमारब्धम् । रागादींश्च बुद्धेरुपप्लवानवबुध्य तदुपघात-हेतोरात्मसाक्षात्कारस्योपायभूतान्यध्यात्मशास्त्राण्युपनिबद्धानि, तथेदमपि शब्दानुशासनं नाम लक्षणशास्त्रं साधूनां वाचां संस्कारज्ञापनार्थमपभ्रंशानां चोपघातरूपाणाम् = दोषरूपाणां त्यागार्थमारब्धमिति ।।१४६।।

अपभ्रंशरूपाणां वाङ्मलानां विशुद्ध्यर्थमिदं लक्षणशास्त्रमारब्धमित्युक्तम् । ते पुनरपभ्रंशाः कथंभूता इत्याकाङ्क्षायामाह—**शब्दः संस्कारहीनो य इति ।**

अस्यार्थः—गौरिति प्रयुयुक्षिते प्रयोक्तुमिष्टे सति, यः संस्कारहीनः, तत्रार्थे साधुत्वेनाननुशिष्टः शब्दो गावीगोण्यादिः प्रयुज्यते । विशिष्टार्थनिवेशिनं गोरूपेऽर्थविशेषे निवेशिनम् = प्रयुज्यमानम् , गावीगोण्यादिकं शब्दमपभ्रंशम् अपभ्रंशपदवाच्यमिच्छन्ति । अर्थान्तरे तु गावीगोण्यादिशब्दः साधुरेव । तद्यथा—गोरियं गावी सास्नावत्सिकादिः । तस्येदमित्यणि ङीप् । यथा वा आवपनेऽर्थे गोणीशब्दः साधुरिति ।

अयं भावः—अपभ्रंशविषयेऽस्ति मतत्रयम् । तत्र शब्दप्रकृतिरपभ्रंश इति संग्रहकारः । शब्दः प्रकृतिः प्रथमं रूपं यस्य विकृतिरूपस्यापभ्रंशस्य स इति तदर्थः । केचित् तु संस्कृतशब्दस्य प्रकृतिरपभ्रंश इति । अन्ये त्वपभ्रंशः शब्दवत् स्वतन्त्रोऽनादिरिति । शब्दस्य नित्यत्वेऽनित्यत्वे वा शब्दान्तरोपादानत्वासम्भवेन नियमेन कार्यप्राग्भावित्वरूपसाधर्म्येण भूयोऽवयवानुपूर्वीसाम्येन च प्रकृतित्वमारोप्य प्रकृतिशब्दस्य प्रथमे रूपे प्रयोगः । एवमपभ्रंशस्य विकृतित्वमपि पश्चाद्भवत्वेन प्रथमरूपगतभूयोऽवयवानुपूर्वीसाम्येन चेति । यद्वा नित्यस्य शब्दस्यापभ्रंशरूपविवर्तोपादानत्वेन प्रकृतित्वम् ।

ननु नेदं संग्रहकारमतं युक्तम्, अनादौ संसारे शब्दापशब्दयोरुभयोरपि बीजाङ्कुरवदनादित्वेन कः कस्य प्रकृतिरिति विनिगमनाविरहात् । किन्तु प्रकृतिरहितोऽपभ्रंशो नाम कश्चित् स्वतन्त्र एव शब्दो विद्यत इति चेत् , न, शब्दापशब्दयोरुभयोरनादित्वे समानेऽपि वेदशब्दानां स्वरूपतो नित्यत्वानादित्वाभ्युपगमात् , अपभ्रंशानाञ्च प्रवाहानादित्वस्यैव सत्त्वात् ।

**अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे ।**
**निमित्तभेदात् सर्वत्र साधुत्वं च व्यवस्थितम् ।। १४८ ।।**

आवपने गोणीति स्वविप्रयोगाभिधाने चास्व इत्येतयोरवस्थितं साधुत्वम् । तथा सास्नादिमति ह्रेषितादिलिङ्गे च निमित्तान्तरात् प्रवृत्तावेतयोरन्यत्र विषये लब्धसंस्कारयोः साधुत्वमेव विज्ञायते । गीणीवेयं गौर्गोणीति बहुक्षीरधारणादिविषयादावपनत्वसामान्यादभिधीयते । तथाऽविद्यमानं स्वमस्य सोऽयमस्व इति ।

तस्माद् वस्त्वपरिगृहीतकारणं न किञ्चिन्नियतमस्ति, यत्र साधुत्वमसाधुत्वं वा व्यवतिष्ठेत ॥१४८॥

किञ्च, कालभेदेन देशभेदेन च विपर्यासस्यापि दर्शनान् न प्रवाहानादित्वमप्यपभ्रंशानाम् । व्यवस्थिते च वेदशब्दानां स्वरूपतोऽनादित्वे नित्यत्वे च य एव लोके पदपदार्थास्त एव वेदे इत्यभ्युपगमेन, समायाते च लौकिकानामपि साधुशब्दानां स्वरूपतोऽनादित्वे नित्यत्वे च तेषामेवापभ्रंशप्रकृतित्वं न्याय्यम्, विनिगमनासत्त्वात् । अतः सर्वस्यैव ह्यपभ्रंशस्य साधुरेव प्रकृतिः । वेदशब्दानां नित्यत्वेन तेषामेव रूढिशक्तिमत्त्वेन रूढिशक्तिविरहिता अप्यपभ्रंशाः ।

केचित् साधुशब्दापेक्षया लोकेऽपभ्रंशानां बहुतरया प्रसिद्ध्या भ्रान्त्या रूढिशक्तिमापद्यमानाः साधुशब्दरूपप्रकृतिराहित्यरूपं स्वातन्त्र्यमेवास्वतन्त्रा अपि लब्धा इव प्रतीयन्ते ।

तत्र गौरिति प्रयोक्तव्ये गोशब्दप्रकृतिका अपभ्रंशा गाव्यादयोऽशक्त्या प्रमादादिभिर्वा यदि प्रयुज्यन्ते, ते चापभ्रंशाः सास्नादिमत्येवार्थे सम्बद्धस्वरूपाः प्रतीत्य प्रयुज्यमानाः साधुत्वं विजहति; अर्थान्तरे तु प्रयुज्यमानाः साधव एव विज्ञायन्ते । तद्यथा गावीति सास्नावत्सिकयोः प्रयुज्यमानं साधु । गोणीत्यावपने प्रयुज्यमानं साधु । अत एव च नैतेषां स्वरूपमात्रसम्बद्धमसाधुत्वमिति । तस्माच्छब्दप्रकृतिकोऽपभ्रंश इति संग्रहमतमेव साधु । शब्दस्यापभ्रंशप्रकृतिकत्वं तु न सम्भवति, अपभ्रंशस्य स्वरूपेण प्रवाहरूपेण च नित्यत्वाभावस्योक्तत्वात् । अत एव च शब्दापशब्दावुभौ स्वतन्त्रावनादी इत्यपि न अपशब्दानां देशभेदेन कालभेदेन च भिद्यमानानामनादित्वकल्पनाया असम्भवात् । साधवो हि स्मृतीनामनादित्वेनानादय एकरूपाश्च, अपशब्दास्त्वशक्तिप्रमादकृताः । तयोस्तारतम्येन प्रतिपुरुषं भिद्यमाना देशभेदेन कालभेदेन च भिद्यमाना अनन्ता इति न तेषामनादित्वकल्पना युक्ता ॥१४७॥

तमपभ्रंशमिच्छति विशिष्टार्थनिवेशिनमित्युक्तमेवार्थं दृष्टान्तेन विशदीकुर्वन्नाह—**अस्वगोण्यादयः शब्दा इति ।**

विषयान्तरे अर्थान्तरे = निर्धनावपनादिष्वर्थेषु । निमित्तभेदात् = प्रवृत्तिनिमित्तभेदात् । सर्वत्र = शब्देषु अपशब्देषु च ।

अयं भावः— आपवनेऽर्थे गोणीत्यस्य धनविप्रयोगाभिधाने चास्व इत्यस्यावस्थितं साधुत्वम् । तथा सास्नादिमत्यर्थे गोणीवेयं गौर्गोणीति बहुक्षीरधारणादिरूपं गोत्वातिरिक्तं निमित्तमादाय

**ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।**
**तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ।। १४९ ।।**

**न शिष्टैरनुगम्यन्ते पर्याया इव साधवः ।**
**ते यतः स्मृतिशास्त्रेण तस्मात् साक्षादवाचकाः ।। १५० ।।**

---

अपभ्रंशा हि साधूनां शब्दानां विषये प्रयुज्यमाना यथैवाक्षिनिकोचादयः परिचयादुपगृहीतस्वरूपा प्रसिद्धाः, तथा साधुप्रनाडिकयार्थं प्रत्याययन्ति । तत्र साक्षादभिधानं नेति श्लोकान्तरोपन्यासः ।।१४९।।

अथ कस्मादेते गोशब्दस्य गाव्यादयः पर्याया न विज्ञायन्ते ? न हि शिष्टसमाचारप्रसिद्धेरन्यदेवंप्रकारेषु स्मृतिनिबन्धनेष्वर्थेषु निमित्तमभिधीयते । गाव्यादयश्चेत् पर्यायाः

---

लक्षणयावपनत्वसामान्यात् प्रवृत्तौ, तथा ह्रेषितैकशफादिरूपलिङ्गवति चार्थेऽविद्यमानं स्वं धनं मूल्यमस्य सोऽयमस्वोऽनर्घ्य इत्यश्वत्वातिरिक्तं धनाभावरूपं निमित्तमादाय निर्धनत्वसामान्यात् प्रवृत्तौ यथासम्भवमावपने निर्धने चार्थे लब्धसंस्कारयोरप्यस्वगोणीशब्दयोः सास्नादिमति ह्रेषितादिलिङ्गवति चार्थे साधुत्वमेव विज्ञायते ।

तस्माद् वस्त्वपरिगृहीतकारणं न किञ्चिन्नियतमस्ति, यत्र साधुत्वमसाधुत्वं वा व्यवतिष्ठेत । कारणपरिग्रहेण तु नियतमस्ति । यथा गोणीशब्द आवपनरूपं निमित्तमपरिगृह्य न साधुत्वे नियतः, तद्रूपकारणपरिग्रहेण तु साधुत्वे नियत इति ।।१४८।।

एवमपभ्रंशानामर्थविशेषेऽसाधुत्वमभिधाय शक्तत्वमेव साधुत्वमिति दर्शनमनुसृत्य साधुत्वाभावे शक्त्यभावेन साक्षादवाचकत्वेन तेभ्यः साधुस्मरणप्रनाडिकयाऽर्थप्रत्यय इत्याह—**ते साधुष्वनुमानेति** ।

अस्यार्थः—तेऽपभ्रंशाः, साधुष्वनुमानेन, अनुमानमत्र मानमुनभवमनु जायमानं ज्ञानं स्मरणमुच्यते । साधुविषयकस्मरणेनेत्यर्थः । प्रत्ययोत्पत्तिहेतवः पदार्थस्मृतिहेतवः । तादात्म्यमुपगम्येव साधुशब्दतादात्म्याभावेऽपि तत्राप्येव, शब्दार्थस्य, साधुशब्दार्थस्य, प्रकाशका बोधका इति ।

अयं भावः—यद्यपि ''तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम्'' (वा० प० १/१४७) इत्यनेनैवापभ्रंशानामर्थवाचकत्वमुक्तप्रायमिति '' ते साधुष्वनुमानेन'' इति कारिकोपन्यासो व्यर्थ इति सम्भाव्यते, तथापि यथाऽक्षिनिकोचादयो गृहीतसङ्केताः सङ्केतपरिचयवशादुपगृहीतसाधुशब्दस्वरूपा इवार्थप्रत्यायने प्रसिद्धाः, न तु साक्षात्, तथापभ्रंशा अपि साधूनां शब्दानां विषये = अर्थे प्रयुज्यमानाः साधुशब्दस्मरणप्रनाडिकयाऽर्थं प्रत्याययन्तीत्यपभ्रंशैर्न साक्षादर्थाभिधानमिति बोधयितुमेतत्कारिकोपन्यास इति न वैयर्थ्यमिति ।।१४९।।

ननु कस्मादेते गाव्यादयो गोशब्दस्य पर्याया न विज्ञायन्त इति चेत्, न, गोशब्दस्य माहेयीसुरभ्यादय एव पर्यायाः, न तु गाव्यादय इत्येवंविधेषु व्याकरणस्मृतिज्ञाप्येष्वर्थेषु शिष्टसमाचारप्रसिद्धेरन्यन्निमित्तं न वक्तुं शक्यते । त एव हि तत्पर्याया भवन्ति, ये व्याकरणस्मृत्या साधुत्वेन

**अम्बाम्बेति यथा बालः शिक्षमाणः प्रभासते ।**
**अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः ।। १५१ ।।**

---

स्युरेतेऽपि शिष्टैर्लक्षणैरनुगम्येरन् प्रयुज्येरंश्च । यश्च प्रत्यक्षपक्षेण प्रयोजकेष्वभिधेयेषु प्रवर्तते, स साधुः । साक्षात् प्रयोजकं वाच्यमर्थरूपं साधुभिः प्रत्याय्यते । इत्ययमुक्तार्थः श्लोकः ।।१५०।।

बालो हि करणमात्रशक्तिवैकल्याद् यत्नवानपि साधुप्रयुयुक्षायामव्यक्तां श्रुतिं प्रयुङ्क्ते, तदा प्रतिपत्तारस्तत्प्रकृतिं व्यक्तं शब्दमवधारयन्ति । तमेवार्थसम्बन्धिनं मन्यन्ते, तस्मादाह— न बालप्रयुक्तमपभ्रंशम् ।।१५१।।

---

ज्ञाप्यन्ते, शिष्टैः प्रयुज्यन्ते च । यदि हि गाव्यादयो गोशब्दस्य पर्यायाः स्युः, तदा एतेऽपि शिष्टैर्लक्षणैरनुगम्येरन् प्रयुज्येरंश्च, न च तथा दृश्यते । किञ्च, यः स्वप्रयोजकेषु = स्वप्रयोगनिमित्तभूतेषु अभिधेयेष्वर्थेषु प्रत्यक्षम् = साक्षाद् अवबोधार्थं प्रवर्तते, स साधुः । एवञ्च स्वप्रयोजकं स्ववाच्यमर्थरूपं साधुशब्दैरेव गोशब्दादिभिर्यतः साक्षात् प्रत्याय्यते, अपभ्रंशैस्तु साधुशब्दस्मरणद्वारेति नापभ्रंशाः साधवः, नापि पर्याया इत्येतत्सर्वमभिप्रेत्याह—**न शिष्टैरनुगम्यन्त इति ।**

साधवः पर्याया इव तेऽपभ्रंशाः, यतः शिष्टैर्व्यवहारेण नानुगम्यन्ते । किञ्च शिष्टैः स्मृतिशास्त्रेणापि नानुगम्यन्ते, तस्मात् साक्षादवाचका इति योजना । शिष्टैरित्यस्य तन्त्रावृत्त्यादिना द्विधा सम्बन्धः । ''न यतः'' इति पाठश्च युक्तः, बहुषु ग्रन्थेषूपलम्भात्; स्वोपज्ञटीकायाम्—''एतेऽपि शिष्टैर्लक्षणैरनुगम्येरन् प्रयुज्येरंश्च'' इति हरिवाक्यानुरोधात् । समुच्चेयरूपोऽर्थस्तु चकाराध्याहारेण लभ्यत इति ।।१५०।।

''शब्दः संस्कारहीनो यः'' (वा० प० १/१४७) इति, ''तस्मात् साक्षादवाचकाः'' (वा० प० १/१५०) इति च युक्त्या प्रसाधितमपभ्रंशानां शब्दप्रकृतिकत्वं साक्षादवाचकत्वं च दृष्टान्तेन श्रद्धापयति—**अम्बाऽम्बेति यथा बाल इति ।**

यथा मात्रुपमात्रादिनाऽम्बाऽम्बेति शिक्ष्यमाणो बालोऽव्यक्तं किञ्चिद् बहुविधं प्रभाषते, तेन अव्यक्तप्रभाषणेन, तद्विदां तदव्यक्तप्रभाषणविदाम्, व्यक्ते निश्चयः, अम्बाऽम्बेति व्यक्तविषयको निश्चयस्तेनैवार्थप्रत्ययश्च भवतीति योजना ।

अयं भावः—बालो हि यदा साधुशब्दप्रयुयुक्षायां सत्यां साधुशब्दोच्चारणे यत्नवानपि तदानीं दन्ताभावेन सर्वस्य करणजातस्य सहकारिवैकल्येन शक्तिवैकल्यादव्यक्तं शब्दं प्रयुङ्क्ते, तदा प्रतिपत्तारस्तस्याव्यक्तस्य प्रकृतिं व्यक्तं शब्दमवधारयन्ति, तमेव चावधृतं व्यक्तं शब्दमर्थसम्बन्धिनं मन्यन्ते, न तु बालप्रयुक्तमपभ्रंशम् । व्यक्तात् शब्दादेव चार्थं प्रतियन्तीति ।।१५१।।

**एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।**
**तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ।।१५२।।**

**पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।**
**प्रसिद्धिमागता येषु तेषां साधुरवाचकः ।।१५३।।**

---

सङ्कीर्णायां वाचि साधुविषयेऽपशब्दाः प्रयुज्यन्ते । तैः शिष्टा लक्षणविदः साधून् प्रतिपद्यन्ते । तैरेव साधुभिस्तदर्थमभिधीयमानं पश्यन्ति । अनुमानस्तु धूम इवाग्नेः, असाधुरितरेषाम् ॥१५२॥

इहाभ्यासात् स्त्रीशूद्रचाण्डालादिभिरपभ्रंशाः प्रयुज्यमानास्तथा प्रमाद्यत्सु वक्तृषु रूढिमुपागताः, येन तैरेव प्रसिद्धतरो व्यवहारः । सति च साधुप्रयोगात् संशये यस्तस्यापभ्रंशस्तेन सम्प्रति निर्णयः क्रियते । तमेव चासाधुं वाचकं प्रत्यक्षपक्षे मन्यन्ते । साधुं चानुमानपक्षे व्यवस्थापयन्ति ॥१५३॥

---

बालप्रयोगदृष्टान्तेन प्रसाधितमर्थं प्रौढानामपभ्रंशप्रयोगेऽपि योजयति—**एवं साधौ प्रयोक्तव्य इति ।**

एवं गौरित्यादिरूपे साधौ प्रयोक्तव्ये योऽपभ्रंशो गाव्यादिः प्रौढैरपि स्त्रीशूद्रादिभिः प्रयुज्यते, तेन गाव्यादिप्रयोगेण साधुगवादिशब्दव्यवहितः कश्चिदर्थः सास्नादिमान् अभिधीयते, न तु साक्षादिति योजना ।

अयं भावः—कालक्रमेणाशक्तेष्वभिधातृष्वपभ्रंशैः सङ्कीर्णायां च साध्व्यां वाचि साधूनां विषयेऽपभ्रंशाः प्रयुज्यन्ते । ततो ये लक्षणविदो वैयाकरणाः शिष्टास्ते तैः प्रयुक्तैरपभ्रंशैः साधूनपभ्रंशप्रकृतीः प्रतिपद्यन्ते । अपभ्रंशानुमितैश्च साधुभिरेव तं तमर्थमभिधीयमानं पश्यन्ति । अपभ्रंशस्त्वनुमाने लिङ्गभूतः साधुशब्दानाम्, धूम इवाग्नेः । एवञ्च " ते साधुष्वनुमानेन" (वा० प० १/१४९) इति कारिकायामनुमानपदमनुमितिपरतयापि व्याख्येयम् । पूर्वोक्तार्थस्तु न हेय इति ॥१५२॥

ननु यद्यपभ्रंशाः साक्षादवाचकास्तर्हि कथमनधीतव्याकरणानां स्त्रीशूद्रचाण्डालादीनामपभ्रंशेभ्य एव साक्षादर्थप्रत्यय इत्याशङ्क्याह—**पारम्पर्यादपभ्रंशा इति ।**

येषु विगुणेषु, व्याकरणस्य वेदाङ्गत्वाद् विद्यारूपगुणरहितेषु स्त्रीशूद्रचाण्डालादिषु, अभिधातृष्वपभ्रंशास्तत्तदर्थे पारम्पर्यात् प्रसिद्धिमागतास्तेषां स्त्रीशूद्रादीनां मतेऽपभ्रंशैः स्मारितः साधुर्न वाचकः, किन्त्वपभ्रंशा एव वाचका इति योजना । तथा च स्त्रीशूद्रादीनामपभ्रंशेभ्य एवार्थबोधः, शक्तिभ्रमात् । शक्तिभ्रमस्य च कारणं तत्तदर्थेऽपभ्रंशानां पारम्पर्येण लोकप्रसिद्धिरिति ।

अयं भावः—इह लोके पुरा प्रमाद्यत्सु वक्तृषु सत्सु तैः क्वचित् कदाचित् कथञ्चित् प्रयुक्ता अपभ्रंशाः स्त्रीशूद्रचाण्डालादिभिरविद्यया गतानुगतिकतया चाभ्यासात् प्रयुज्यमानास्तथा लोके अपि रूढिमुपागता येनापभ्रंशैरेव लोके प्रसिद्धतरो व्यवहारः, न तु साधुभिः । तेन च सम्प्रति साधु-

**दैवी वाग् व्यतिकीर्णेयमशक्तैरभिधातृभिः ।**
**अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ।। १५४ ।।**

---

श्रूयते पुराकल्पे खशरीरज्योतिषां मनुष्याणां यथैवानृतादिभिरसङ्कीर्णा वागासीत्, तथा सर्वैरपभ्रंशैः । सा तु सङ्कीर्यमाणा पूर्वदोषाभ्याससभावनानुषङ्गात् कालेन प्रकृतिरेव तेषां प्रयोक्तॄणां रूढिमुपागता । अनित्यवादिनस्तु ये साधूनां धर्महेतुत्वं न प्रतिपद्यन्ते, मल्लसमयादिसदृशीं साधुव्यवस्थां मन्यन्ते, ते प्रकृतौ भवं प्राकृतं साधूनां शब्दानां समूहमाचक्षते । विकारस्तु पश्चाद् व्यवस्थापितः, यः सभिन्नबुद्धिभिः पुरुषैः, स्वर-संस्कारादिभिर्निर्णीयत इति ॥१५४॥

---

प्रयोगादर्थसंशये सति यस्तस्य साधोरपभ्रंशस्तेनार्थनिर्णयः क्रियते । तमेव चासाधुमर्थाभिधाने प्रत्यक्षपक्षे मन्यन्ते = साक्षात् वाचकं मन्यन्ते । साधुश्चानुमानपक्षे व्यवस्थापयन्ति । साधुशब्दप्रयोगेऽर्थसंशये सति साधुना यत्किञ्चिदानुपूर्वीसाम्येन तदपभ्रंशमनुमाय तेनार्थं प्रतियन्तीति यावदिति ॥१५३॥

''शब्दः संस्कारहीनो यः'' (वा०प० १/१४७) इत्यत्र शब्दानामपभ्रंशप्रकृतित्वमुक्तम्, ''पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु'' (वा० प० १/१५३) इत्यनेन च साधुशब्दानामपभ्रंशैः पश्चात् सङ्कीर्णत्वमपभ्रंशानां व्यवहारे प्रसिद्धतरत्वञ्चोक्तम् । तदनूद्य ये साधुशब्दानित्यत्ववादिनः साधूनां धर्महेतुत्वं न प्रतिपद्यन्ते, तन्मतमनुसृत्येदानीमपभ्रंशानां शब्दप्रकृतित्वं दर्शयितुमाह—**दैवी वाग् व्यतिकीर्णेयमिति** ।

पूर्वमपभ्रंशा एवासन्, ते च संस्कृताः साधवः सञ्जाता इति हि तेषामभ्युपगमः ।

कारिकार्थस्तु—इयं व्याकरणस्मृतिर्ज्ञाप्या दैवी देवानामियं दैवी वाग् यथावदुच्चारयितुम-शक्तैरभिधातृभिः कर्तृभिः, अपभ्रंशरूपैः करणैर्व्यतिकीर्णा सङ्कीर्णा कृतेति शेषः । अनित्यदर्शिनां साधुशब्दानित्यत्वदर्शिनां तु केषाञ्चित्, अस्मिन् वादे पक्षे, बुद्धिविपर्ययो बुद्धिवैपरीत्यमिति ।

तथा हि—साधवो न पूर्वमासन्, न च ते धर्मसाधनम्, किन्त्वपभ्रंशा एव प्रागासन् । त एव व्याकरणेन संस्कृताः साधवः सञ्जाताः, अत एव साधूनां संस्कृतमिति संज्ञेति तेषां बुद्धिवैपरीत्यम्, साधुशब्दानां नित्यत्वधर्मसाधनत्वापभ्रंशप्रकृतित्वादिबुद्धिमपेक्ष्येति ।

अयं भावः—श्रूयते पुराकल्पे खशरीरज्योतिषाम् = खानि इन्द्रियाणि, शरीराणि च ज्योतींषि ज्योतीरूपाणि, ज्योतिःप्रधानानि वा येषां मनुष्याणां तादृशां मनुष्याणां यथैवानृतच्छलवञ्चनादिभिरसङ्कीर्णा वागासीत्, तथा सर्वैरपभ्रंशैः । सा त्वपभ्रंशानां प्रकृतिरेव = एवकारोऽप्यर्थः, कालेन अपभ्रंशैः सङ्कीर्यमाणा पूर्वदोषाभ्याससभावनाऽनुषङ्गात् = पूर्वे ये दोषा यद्वशात् साधुशब्दानामपभ्रंशैः सङ्करः, तद्दोषबलेन योऽभ्यासोऽपभ्रंशानां पुनः पुनः प्रयोगस्तज्जनिता या भावना अपभ्रंशविषया वासनास्तासामनुषङ्गात् सम्बन्धात् तेषामभ्रंशप्रयोक्तॄणां बुद्धौ अपभ्रंशरूपेण रूढिम् = प्रसिद्धिमुपागता । किन्तु ये साधुशब्दानित्यत्ववादिनः साधूनां धर्महेतुत्वं न प्रतिपद्यन्ते, मल्ल-

**उभयेषामविच्छेदाद् अन्यशब्दविवक्षया ।**
**योऽन्यः प्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः ।। १५५ ।।**

---

येषामपि च नैव पुराकल्पः, न च दैवी वागसङ्कीर्णा कदाचिदासीत्, तेषामपि गम्यागम्यादिव्यवस्थावदियं साध्वसाधुव्यवस्था नित्यमविच्छेदेन शिष्टैः स्मर्यते । तत्रान्यशब्दविवक्षया बालप्रलापवदर्थेषु प्रयुज्यमानो यः शब्दो रूढः, यश्च न रूढः, तावुभावप्यर्थस्य

---

समयादिसदृशीं साधुव्यवस्थां मन्यन्ते, तद्यथा मल्लयोः समयः = नियमबन्धः, मध्यस्थेन क्रियमाणः प्रतिमल्लयुद्धं कृत्रिमः, न तु शाश्वतः, तथा साधुशब्दव्यवस्थापि । अत एव पुरा न्याङ्कवमिति साधु आसीत्, अधुना नैयङ्कवमिति । ते खलु साधूनां शब्दानां समूहं प्रकृतौ अपभ्रंशरूपायां भवमिति व्युत्पत्त्या भवार्थेऽणि प्राकृतमाचक्षते । तेषां मतेऽपभ्रंशरूपा प्रकृतिरेव प्राग् व्यवस्थिता । साधुशब्दस्तु संस्कृतो विकाररूपः पश्चाद् व्यवस्थापितो लक्षणेन, यः साधुः शब्दः सम्भिन्नबुद्धिभिः = शब्दापशब्दयोः सम्भेदः सङ्करस्तदवगाहिबुद्धिभिः पुरुषैर्भ्रान्तैस्तत्तल्लक्षणबले स्वरसंस्कारादिभिः साधुत्वेन निर्णीयत इति ॥१५४॥

अथेदानीं शब्दापशब्दयोरुभयोरपि स्वातन्त्र्यम्, न तु परस्परं प्रकृतिविकृतिभावः, किञ्चोभयोरप्यविच्छेदोऽनादित्वं चेति मतमन्ते व्यवस्थापयन्नाह—**उभयेषामविच्छेदादिति** ।

अस्यार्थः—उभयेषां शब्दानामपशब्दानाञ्चानादौ संसारेऽविच्छेदात् पारम्पर्यस्य प्रवाहरूपेणाविच्छेदात्, अन्यशब्दविवक्षया अश्वशब्दविवक्षया योऽन्योऽस्वशब्दः प्रयुज्यते, सः अस्वशब्दः, अर्थस्य तुरगरूपार्थस्य, नाभिधायकः; किन्तु तेन स्मृतोऽश्वशब्द एव तदर्थाभिधायकः, वृत्त्यभावेऽप्यस्वशब्दस्याक्षिनिकोचादिवद् वा तदर्थज्ञापकत्वमिति । तदेवं साधुशब्दा वाऽपभ्रंशानां प्रकृतयो भवन्तु, अपभ्रंशा वा साधुशब्दानां प्रकृतयो भवन्तु, उभयेषां वानादित्वेन स्वातन्त्र्यमस्तु, मास्तु प्रकृतिविकृतिभावः, तथापि साधव एव वाचकाः, नासाधव इति मतत्रयेऽपि समानम्, कोशादिष्वपशब्दानां सङ्केतस्यानुपन्यासादिति ।

अयं भावः—येषामपि च मते नैव पुराकल्पः, न च दैवी वागसङ्कीर्णा कदाचिदासीत्, तेषामपि मते गम्यागम्यादिव्यवस्थावदियं साध्वसाधुव्यवस्था नित्यमविच्छेदेन शिष्टैः स्मर्यते । तत्र गोशब्दविवक्षया बालप्रलापवत् सास्नादिमत्यर्थे योऽन्यः प्रयुज्यमानो गाव्यादिर्लोके निरूढः शब्दः, यश्चाश्वशब्दविवक्षया तुरगार्थे प्रयुज्यमानोऽस्वशब्दो लोके न तदर्थे रूढः, तावुभावपि तत्तदर्थस्य वाचकौ न भवतः । तत्र तूभयत्राप्यशब्दप्रयोगस्थलेऽपशब्देन साधुशब्दस्मृत्या

न वाचकौ भवतः । तत्र तु साधुव्यवहिता वा भवत्यर्थप्रतिपत्तिरभ्यासाद् वा प्रमत्तानामक्षिनिकोचादिवत् सम्प्रत्ययमात्रं जायते ॥१५५॥

**॥ इति श्रीहरिवृषभमहावैयाकरणविरचिते वाक्यपदीये आगमसमुच्चयो नाम ब्रह्मकाण्डं समाप्तम् ॥**

* * *

---

साधुशब्दव्यवहिता वा भवत्यर्थप्रतिपत्तिर्लक्षणविदाम् । प्रमत्तानां तु लक्षणविज्ञानशून्यानां पुंसामक्षिनिकोचादिवद् वृत्त्यभावेऽप्यपशब्देभ्य एव सम्प्रत्ययमात्रं जायते, न त्वसौ शब्दोऽनुभव इति शम् ॥१५५॥

अविमुक्ते द्वितीयायां सुभे[1] भौमस्य वासरे ।
दिनस्य प्रथमे यामे कबीरभवने शुभे ॥
ज्यैष्ठे मासि मिते वर्षे नागेन्दुवियदक्षिभिः ।
परप्रसादादम्बाया अम्बाकर्त्री व्युपारमत् ॥
काशीनाथतनूजेन हरिनाथानुजन्मना ।
बलियामण्डलान्तःस्थे छाताग्रामे जनुर्भृता ॥
सौभद्ररघुनाथेन कृतेयं कृतिरुत्तमा ।
शिवापादयुगे न्यस्ता स्थेयादाचन्द्रतारकम् ॥

**॥इति श्रीकाशीनाथतनूजेन सौभद्ररघुनाथशर्मणा रचितायाम् 'अम्बाकर्त्र्याम्' ब्रह्मकाण्डं समाप्तम् ॥**

●

---

१. सुष्ठु शोभनं भं नक्षत्रं यस्मिन्, तदिति ।

# श्लोकानुक्रमणिका

●

### वाक्यपदीयब्रह्मकाण्डवृत्तिस्थानाम्

# उद्धरणानां वर्णानुक्रमसूची



●

